शाक्त दर्शनम् - Compiled and edited by श्री चक्रेश्वर भट्टाचार्य (the High ~~Priest~~ Priest of श्रीमद् उग्रतारा पीठ) - very slightly ~~Gauhati~~ pinholes in the margin.

Gauhati, 1970.

(35)

Bill No. 51/07-08

142

2008-0602

# शाक्त-दर्शनम्

कामरूपान्तर्वर्ति-दीघेलिग्रामवासि-श्रीमदुग्रतारा-महापीठाध्यक्ष-
श्रीचक्रेश्वरभट्टाचार्य-व्याकरणतीर्थेन संकलितम्




भारतसर्वकारार्थानुकूल्येन प्रकाशितम्



गौहाटीनगरीतः खृीस्तीये १९७० वर्षे

*Śāktadarśanam,* a treatise on the Śākta philosophy and religion by Pandit Chakreswar Bhattacharyya, Ex-Doloi, Ugratara Temple, GAUHATI, Assam. Published by the author *with financial assistance from the Ministry of Education, Government of India.*

प्रकाशकः—
ग्रन्थकारः



प्राप्तिस्थानम् :—
चौखम्बा संस्कृत सीरिज आफिस
पोस्त वक्स—८
गोपाल मन्दिर लेन
वाराणसी-१








मुद्रकः—
श्रीकालीचरण पालः
नवजीवन प्रेस
६६ ग्रे स्ट्रीट : कलिकाता-६

MEMBER OF PARLIAMENT
(LOK SABHA)

This is to certify that Shri Chakreswar Bhattacharyya, versatile in Sanskrit learning, is a landmark in an era where Sanskrit learning is unfortunately a declining phenomenon. I am deeply impressed with his depth and width of study, a fact that is corroborated by his books and other writings. Assam is traditionally a land of Tantric literature, a branch of study that is neglected by most of our scholars. Here is a scholar who with his deep researches and studies has widened the frontiers of our knowledge. Shri Bhattacharyya deserves all encouragement and I hope and trust that Govt. will offer him all the facilities and encouragement necessary for his work.

I wish this grand old man of Sanskrit scholarship all success. May God bless him.

Gauhati : 18-5-68. Sd/- Hem Barua




Prof. Rajani Kanta Dev Sarma, M.A.,
Sahitya-Purana Shastri,
Head of the Deptt. of Sanskrit,
Cotton College, Gauhati.

Date, 25-5-68.

I have great pleasure in going through the manuscript of "Shakta Darsanam" by Pandit Chakreswar Bhattacharyya. The book is written in simple lucid Sanskrit and presents the various aspects of the philosophy of the cult of Shakti. The author has taken immense pains to ransack the pages of the extensive literature on the subject and has substantiated his views with relevant quotations. Shaktaism is a subject which is much misunderstood even today: Pandit Bhattacharyya attempts to dispel in this book some of the prevailing misconceptions. The manner in which the author has marshalled facts speaks of his great erudition. The book will be read both by beginners and connoisseurs with profit. It will be a valuable contribution to Sanskrit literature and philosophy, when published.

Sd/- R. K. D. Sarma

SHRI S. N. SARMA SAHITYASASTRI, M.A., B.T.,
Secretary, Assam Sanskrit Board, and
Asstt. Inspector of Schools for Sanskrit Edn., Assam.

GAUHATI
The 7-6-68.

I have great pleasure in certifying that Pandit Chakreswar Bhattacharyya, Doloi, Vyakarantirtha is intimately known to me. He hails from a respectable Brahmin family of village Digheli in the vicinity of Nalbari in the district of Kamrup.

Pandit Bhattacharyya, now an octogenerian, is one of the traditional worthies of this State. He conceals within his old outer form the vigour and energy of a young man capable of undergoing sustained labour of reading and writing.

He had been for long in service of the holy Mother Ugratara by taking upon himself the responsibility of Doloiship (Chief Priesthood) of the temple. This communion with the holy Mother has developed in him a strong proclivity to Tantric way of life. This initiation to a new life has been responsible for the production of several works on the subject among which 'Shakta Darshana' stands out as the masterpiece.

It is a voluminous work which contains an elaborate discussion on the philosophy of Tantricism in relation to other faiths of Indian origin. The book awaits publication. It will do a piece of yeoman's service in the spread of Tantric literature if this work is brought to light.

Sd/- S. N. SARMA

DR. JOGIRAJ BASU, M.A. (Triple), Ph.D.,
Professor & Head, Department of Sanskrit,
Gauhati University.

Chairman, Sanskrit Education Committee,
Govt. of Assam.

Panbazar, Gauhati-1
Date 15-8-68.

I have great pleasure in going through the manuscript of 'Saktadarsana' by Pandit Chakreswar Bhattacharyya. Just as the bee laboriously culls honey from various flowers in preparing the beehive likewise Pandit Bhattacharyya has put in immense labour in gleaning informations from various Sanskrit texts of Buddhist Philosophy, Vedanta, Samkhya, Mimamsa, Smriti, Purana, Tantra etc. for composing "Saktadarsana", his magnum opus. The book is written in simple Sanskrit in lucid style. The author has ransacked the extensive ancient lore on Saktaism painstakingly, and has borne out his views with profuse apt quotations. For long the author was the Superintending priest 'Doloi' of the Ugratara Temple, a famous Saktipitha and as such he gained wide and intensive experience regarding Sakta Philosophy through study, practice and mystic divine communion. His first scholarly work 'Sakti-tattva' appeared in 1955 in Assamese, followed by his second and third works entitled 'Tararchanatantra' and 'Satacandi-Yaga-Prayogatantra' both in Sanskrit which await publication.

Saktaism or Sakti-tattva is a much-maligned and misunderstood subject, and the author has tried his best to remove the prevailing misconceptions through correct interpretation. The book Saktadarsanam bespeaks Pandit Bhattacharyya's vast erudition, power of assimilation and presentation. His enthusiasm and energy notwithstanding his ripe old age extorts unstinted admiration. His book will be a valuable contribution to Sanskrit literature in general an Sakta philosophy in particular. I heartily congratualate thedauthor, wish him all success and the book a wide publicity.

Sd/- J. R. BASU,
(Jogiraj Basu).

# सूचीपत्रम्



## द्वितीयः परिच्छेदः



## तृतीयः परिच्छेदः

## चतुर्थः परिच्छेदः

**पञ्चमः परिच्छेदः**



**षष्ठः परिच्छेदः**

## सप्तमः परिच्छेदः



## अष्टमः परिच्छेदः

## नवमः परिच्छेदः



## दशमः परिच्छेदः

# ग्रन्थसूचना

वयसि परिणतेऽस्मिन्नैव योग्यः प्रयासः
तदपि न परिहार्यो बन्धुवर्गानुरोधः।
लिखितमपि यदस्मिन् दर्शने शाक्तसंज्ञे
विहितमविहितं तत् क्षम्यतां शास्त्रयुक्त्या ।।

विगत-१९६४-खृीस्ताब्दस्य सेप्तेम्बरमासे गौहाटचामार्यविद्यापीठेनुष्ठितायां-दर्शनपरिषदि तत्पीठाध्यक्षस्य श्रीयक्तगिरिधरशर्म एम्, ए, व्याकरणशास्त्रि-महाभागस्यामन्त्रणेन समुपस्थिता वयम्। तस्यां परिषदि श्रीयुक्तराजेश्वर-भट्टाचार्यतर्कतर्कतीर्थमहाभागेन सांख्यदर्शनविषयकनिबन्धपाठेन विद्वन्मण्डल-मलंक्रियते स्म। ततः परिषदः सम्पादकेन श्रीयुक्त उमाकान्तशर्म वि ए काव्य-तीर्थेन प्रस्तावितं यत्ततस्तृतीयमासे परिषदि मया शाक्तदर्शनविषयको निबन्धः पठितव्य इति। तद्दिनावधि नानाशास्त्राणि सुधीमतानि च संगृह्य यथामति समालोच्य शाक्तदर्शनसंकलनाय दृढतरसंकल्पमहं मनसि कृतवान्। ततो निर्द्दिष्टदिने शाक्तदर्शनविषयकनिबन्धोऽपि मया पठितोऽभवत्।

ततश्च जगदम्बकृपया पंचषष्टितमखृीस्ताब्दस्याक्टोवरमासे दुर्गाषष्टचां शाक्तदर्शनस्य संकलनं दशपरिच्छेदात्मकतया संपूर्णं जातम्। ततः पर्वतीय-गोस्वामिवंशजेन श्रीयुक्तप्रद्योतकुमारभट्टाचार्येण ग्रन्थस्य संपूर्णा प्रतिलिपि-र्विनिर्मितेति कृत्वा तस्मै कृतज्ञतां ज्ञापयामि। ततः ६७तमखृीस्ताब्दस्य डिसेम्बर-मासेऽनुष्ठितायां वाराणसेयसंस्कृतविश्वविद्यालयस्य सर्वभारतीयदर्शनपरिषदि शाक्तदर्शनतो"दर्शनेषु चित्तत्वव्यवस्थासमीक्षा"नामको निबन्धः पठितः प्रका-शितश्चेति शम्। इति।

सौराश्विनस्य दुर्गाषष्टचाम्
२७।९।६८ इं

विनीतस्य
ग्रन्थकारस्य

# भूमिका

आचार्य श्रीमनोरंजन शास्त्री

नलबाडी संस्कृत कलेज
नलबाडीतः
दिनांकः १३।१२।६८ इं

कामरूपप्रदेशान्तःपातिश्रीमदुग्रताराभट्टारिकामहापीठाध्यक्षैः श्रीमच्चक्रेश्वर-भट्टाचार्यचरणैः संकलितस्य शाक्तदर्शनाख्यस्य ग्रन्थरत्नस्य कियदंशो मया दृष्टिपथमवतारितः। ग्रन्थस्यास्य स्थालीपुलाकन्यायेन पर्यालोचनेन प्रतीयते यत् पण्डितोचितमौदार्यं साधकोचितं धैर्यं विद्वज्जनोचितं गाम्भीर्यं ब्राह्मणोचितं तापस्यं विभ्रता, शाक्तागमेष्वधीतिबोधाचरणपारम्पर्यं च दीर्घकालं पालयता ग्रन्थकृता निबद्धोऽयं ग्रन्थः तत्त्वगहनोऽपि सुगमगीर्वाणवाणी-प्रयोगेणप्रदर्शिताल्पायासप्रवेशमार्गः, विविधविषययुवितजालजटिलोऽपि ग्रन्थकृद-धितिबोधाचरणपारम्पर्यप्रभावेण विच्छिन्नग्रन्थिसकलतयाविष्कृतावकाशबहुलः, समस्तागमार्थविचारप्रसारितदेहोप्यसमस्तवचनरचनाश्रृंखलितसर्वांगः, कामरूपी-यशाक्तसम्प्रदायप्रसृतायां साधनपद्धतौ प्रभूतमालोकपातं कुर्वन्, शाक्तसाधन-पद्धतिं प्रतिजनगणमनःसु समुदितं संशयं विपर्यासं च दूरमपसारयन् संस्कृत-वाङ्मयेऽसमप्रदेशस्थविदुषामवदानं च सम्बर्द्धयन् देशस्य बहूपकाराय प्रभवेदिति विद्वद्भिर्विद्यार्थिभिश्च सममेव समाद्रियेतेति दृढो मे समाश्वास इति शम्।

विद्वदनुविधेयस्य
श्रीमनोरंजनशास्त्रिणः

# भूमिका

श्रीश्रीदुर्गा

कामरूपजिलान्तःपातिनलबारीमण्डलान्तर्गतदिघेलीग्रामनिवासी गुवाहाटी नगरस्थश्रीमदुग्रतारामहापीठाध्यक्षः कामरूपजिलान्तर्गतबालाजानवेदविद्यालयस्य भूतपूर्वप्रधानाध्यापकः पण्डितप्रवरः श्रीयुक्तचक्रेश्वरभट्टाचार्यव्याकरणातीर्थः-शाक्तदर्शनं नाम मनोरमं ग्रन्थमिमं प्रणीतवान्। अयं च तान्त्रिकशिरोमणिः कर्मठो भट्टाचार्यमहोदयः शाक्तदर्शनसंकलनात् प्राक् शक्तितत्व-ताराच्चर्नतन्त्र-शतचण्डीयागप्रयोगतन्त्रप्रभृतिबहुग्रन्थान् विरचितवान्। इदानीं तदपेक्षया प्रांजलतरं शाक्तदर्शनं शक्तिजिज्ञासूनामभीष्टपूरणार्थं संकलितवान्। यथा हि मधुमक्षिका विविधकुसुमेभ्यो मधून्याहृत्य परेषामुपकारार्थमपूर्वं मधुचक्र-मारचयन्ति, तथैव महानुभावेनानेन स्मृति-वेद-वेदान्त-पुराण-न्याय-सांख्य-तन्त्रादिशास्त्रेभ्यः सारं समाकृष्य धर्मशास्त्रानुरागिणां विदुषामन्तेवासिनां च हितार्थं संकलितमिदं शाक्तदर्शनम्। विविधशास्त्रोद्धतप्रमाणादिपरिपूर्णेप्यस्मिन् ग्रन्थे कथांशविच्छेदो न हि दृश्यते। ग्रन्थोयं रचनानैपुण्येन स्वरचितसरलव्या-ख्यया च सरलमतिच्छात्राणामपि सुगमो भविष्यति। यावन्ति खलु शक्ति-विषयकानि पुस्तकानि देशेस्मिन् प्रचलितानि तेषु शाक्तदर्शनमेतत् सर्वश्रेष्ठं नीतिधर्ममयत्वात् सरसाख्यायिकाबाहुल्याच्च। तेनैवास्य ग्रन्थस्य साहाय्येन शैव-वैष्णव-शाक्तप्रभृतयः सर्व एव जातिधर्मनिर्विशेषण सम्यगुपकारं समाहर्तुं शक्नुवन्ति। तन्त्र-कर्मकाण्ड-पुराणादिशास्त्राणां परीक्षासु विद्यार्थिनामनेन भूयानुपकारो भविष्यतीत्यत्र नास्ति सन्देहावसरः। अतएव शाक्तदर्शनस्यास्य तासु परीक्षासु पाठ्यरूपेण निर्वाचनं सुसमीचीनं भविष्यतीत्यहं मन्ये।

शाक्ताः खलु जगत्कारणत्वेनांगीकृतां मायाशब्दार्थभूतां शक्तिमभ्युपेत्य मातुलुंगगदाखेटासिधारिणी महालक्ष्मीस्तस्याः प्रथमावतार इति वर्णयन्ति। महालक्ष्मीरेषा कूटस्था निराकारापि साकारा निर्गुणापि सगुणा च। इयं च पराशक्तिः शिवशक्तिर्विष्णुशक्तिश्चेति कथ्यते। तस्या महालक्ष्म्याः करधृतेन मातुलुंगेन (फलविशेषेण) सर्वकर्मफलदात्री, गदया क्रियास्वरूपा विक्षेपशक्तिः, खेटेन (अस्त्रविशेषेण) ज्ञानशक्तिरुक्ता। सा च महाकाली महासरस्वतीति द्वे शक्ती उत्पाद्य, ब्रह्माणं पुरुषं श्रियं च स्त्रियमुत्पादयामस। स्वयं मिथुनं

जनयित्वा स्वसुतेप्याह—अहमिव युवामपि मिथुनमुत्पादयतमिति। इत्येवं क्रमेण शाक्तदर्शनसम्मता समग्रापि सृष्टिप्रक्रियास्मिन् ग्रन्थे सम्यक् प्रदर्शिता।

परिशेषे च वक्तव्यमेतावदेव—यद्ययं बृद्धब्राह्मणसर्वस्वभूतः शाक्तदर्शनरूपो महानिबन्धः पाठार्थिनामनुमप्युपकारं साधयिष्यति, तदैवास्य सर्वं परिश्रमादिकं सफलं भवेदिति शम्।

गुवाहाटीमहानगरी
विजयादशमी
शकाब्दाः १८९०

विदुषां विधेयः
श्रीराजेश्वरभट्टाचार्यतर्कतर्कतीर्थः
प्राग्ज्योतिषपुरदर्शनविद्यालयाध्यक्षः



# ग्रन्थकृन्निवेदनम्

शाक्तदर्शनस्य मुद्रणसौकर्यविधानार्थं गौहाटिकटनाख्यांगलमहाविद्यालयस्य प्राक्तनाध्यापकश्रीयुक्तव्रजेन्द्रकुमाराचार्य एम् ए-काव्यमीमांसातीर्थेन कृपया प्रथमतः सप्तमपरिच्छेदपर्यन्तं देवनागराक्षरात्मिका प्रतिलिपिर्विनिर्मिता। गौहाटिविश्वविद्यालयस्य संस्कृताध्यापक डक्टर श्रीयुक्तमुकुन्दमाधवशर्म एम् ए, डि. फिल, डि. लिट्-काव्यतीर्थमहाभागेनाष्टमतो दशमपरिच्छेदपर्यन्तं देवनागरप्रतिलिपिं विनिर्माय सम्पूर्णपाठानन्तरमांगलवांमयभूमिकया समलंकृतश्चायं ग्रन्थः। तथैव नलबाडीसंस्कृतमहाविद्यालयाध्यक्षप्रवरेण श्रीमता मनोरंजनशास्त्रिणापि च सुललितगिर्वाणवाण्या विरचितया भूमिकया नितरां संबर्द्धितोयं ग्रन्थ इति कृतकृत्या वयम्। गौहाटिदर्शनविद्यालयाध्यापकप्रवरेण प्रसिद्धदार्शनिकेन श्रीयुक्तराजेश्वरभट्टाचार्यव्याकरणसांख्यतर्कतर्कतीर्थेण संस्कृत-भूमिकया परिमण्डितोयं ग्रन्थः। ग्रन्थस्य विशुद्धये गौहाटिकटनाख्यांगलमहा-विद्यालयस्य संस्कृतप्रधानाध्यापकश्रीयुक्तरजनीकान्तशर्म एम् ए काव्यपुराण-शास्त्रिणे ग्रन्थोयं प्रदत्तोभवत्। तेनापि च महाभागेन बहुलायासेन सम्पूर्णं संशोध्य मह्यं प्रत्यर्पितः। ततश्चासमसंस्कृतबोर्डसभासम्पादकेन श्रीयुक्तशिवनाथशर्म एम् ए, वि टि, साहित्यशास्त्रिणा तथा गौहाटि-विश्वविद्यालयस्य संस्कृतप्रधानाध्यापक डक्टर श्रीयुक्तयोगिराजवसु एम् ए-पि एइस्. डि महाभागेन शाक्तदर्शनं समालोच्य लिखितमन्तव्यव्रातैर्ग्रन्थ-स्योपयोगित्वं प्रतिपादितम्।

असमप्रदेशस्य नेतृप्रधानेन प्रवीणसाहित्यिकेन श्रीयुक्तहेमबरुवा एम् ए, एम् पि-महाभागेन लिखितमन्तव्येन तथासमराज्यस्य प्राक्तनशिक्षाधीशेन श्रीयुक्तसुरेशचन्द्रराजखोवा एम् ए-देवेन, गौहाटिमुनिकुलाश्रमाध्यक्षश्रीयुक्त-विपिनचन्द्रगोस्वामिकाव्यव्याकरणवेदतीर्थेण, श्रीश्रीकामाख्यामहापीठाध्यक्ष-श्रीयुक्तप्रमथनाथशास्त्रिणा, साधकवर्येण श्रीयुक्तरमणीकान्तशर्मतन्त्राचार्येण च शाक्तदर्शनस्य प्रकाशने सर्वान्तःकरणेनानुमोदनं विज्ञापितम्। शाक्तदर्शनस्य संस्कृतभाषया संकलनार्थं नलबाडीनगरस्य उमाप्रेसाध्यक्षेण श्रीयुक्तभवेन्द्र-नारायणदत्तवरुवादेवेन भृशमुत्साहितोस्मि। अपि च गौहाटिकटनांगलमहा-विद्यालयस्य हिन्दीविभागप्रमुखेन श्रीमतापरेशचन्द्रदेवशर्मणा शाक्तदर्शनस्य प्रकाशविषये मुद्रणादिबहुविषयेषु यथाशक्ति यत्नः क्रियते। अत एव तेभ्यः परमकारुणिकेभ्यः सर्वेभ्यः सर्वान्तःकरणेन कृतज्ञतां निवेदयामहे।

अत्र गुणग्राहिभारतशिक्षामन्त्रिप्रमुखशिक्षाविभागस्य मुख्यपरिचालकैर्महाभागैर्महदनुग्रहेण कृपानुकूल्येन च राजकीयधनेन साधितोऽस्य शाक्तदर्शनस्य प्रकाशविषय इति तान् प्रीतिपूर्णां कृतज्ञतां विज्ञापयामहे।

जगदम्बकृपातः कलिकातामहानगर्यां षट्षष्टिसंख्यक-ग्रेष्ट्रीटस्थनवजीवन-मुद्रणालयस्याध्यक्षश्रीयुक्तकालिचरणपालमहोदयस्य प्रिन्टरप्रभृतिमुद्रणकारानां च सौजन्येन विशुद्धतया मनोमुग्धकरपरिवेशेन च शाक्तदर्शनस्य प्रकाशो जायत इति तान् प्रत्यपि कृतज्ञा वयम्।

मुद्रणविशुद्धौ कृतप्रयत्नेष्वप्यस्मासु केचन मुद्राकरप्रमादाः संघटिता एवेति गुणैकपक्षपातान् विद्वज्जनान् सांजलिप्रणतस्तत्क्षमार्थमनुरुणध्मि।

परिशेषे सहृदयवाचकमहाभागानां तथा विनेयजनानां यद्यस्य शाक्तदर्शनस्य पाठेन महामायाकृपया स्वात्मशक्त्युपलब्धिर्जायते तदा परिश्रमो मे सफलो भवेदिति शम्।




सौराश्विनस्य दुर्गाषष्ट्याम्
२७।६।६८ इं

विनीतस्य
ग्रन्थकारस्य

# स्मृति-तर्पणम्

पितृहलधरभट्टः मातृ हंसप्रिया च,
स्मरणमुभयनाम्नोस्तर्पणं भक्तियुक्तम् ॥
मम विरचितमेतद्दर्शनार्घ्यार्पणेन ।
विदधतु परितृप्तिं याचते दीनपुत्रः ॥




ग्रन्थकारस्य

# गुरुपरम्परा स्मृतिः

लक्ष्मीकान्तः कविश्रेष्ठः तारानाथो महान् सुधीः।
गोस्वामि-स्मृतिरन्तश्च काव्यं व्याकरणं तथा॥
गृहीते नितरां साक्षाद् ययोः पादसरोजयोः।
तयोर्मे वर्त्तते नित्यं पादयुग्मे परा नतिः॥
लक्ष्मीनाथः चतुस्तीर्थः तकतीर्थः षड़ाणनः।
नव्यन्यायो ययोर्ज्ञातः तयोर्मे प्रणतिः सदा॥
स्मृतिशास्त्रं मया लब्धं रघुनाथशिरोमणेः॥
तस्मै देवाय भक्तेन भक्तिरेवं निगद्यते॥
गङ्गांनाथः गुरुश्रेष्ठः तन्त्राचार्य्यः सुसाधकः।
स मे दीक्षागुरुर्देवः तस्मै भक्तिर्निवेद्यते॥
सुरेशानन्दनाम्ना वै कौलस्वामी महान् गुरुः।
पञ्चवटयाश्रमे रम्ये प्राग्ज्योतिषे पुरे पुरा॥
सोऽयमासीद् महाप्राज्ञः साधनायां स मे गुरुः।
तस्य ग्रन्थसमारम्भे स्तुतिरेवं विधीयते॥

ग्रन्थकारस्य

# FOREWORDS

Dr. Mukunda Madhava Sharma, M.A., D.Phil., D.Litt.,
Kavyatirtha

Reader and Head of Department of Sanskrit,
Gauhati University.

32, Gauhati University, Gauhati-14

Dated, 12.3.70.

I had the singular pleasure of going through the ten chapters of "*Śāktadarśana*", written by Pandit Chakreswar Bhattacharyya entirely in Sanskrit. After his deep and devoted studies of the original Shastras for over 35 years Pandit Bhattacharyya started writing in 1954. His first scholarly work entitled '*Shaktitattva*' in Assamese was published in 1955. His second work "*Tārārcanatantra*" in Sanskrit explains and formulates the procedure of the worship of Goddess Tara. His third work "*Śatacandīyāgaprayogatantram*", which is also in Sanskrit, explains in detail the procedure of the Satacandi Yajna and his fourth and latest scholarly work in Sanskrit is the "*Śaktadarśana*".

A portion of the Introductory chapter of the *Śāktadarśana* was presented as a paper in the Pandita Parishad section of the 22nd. All India Oriental Conference in January, 1965. Pandit Bhattacharyya has been invited to the Tantra Sammelana, held in the Varanaseya Samskrita Visvavidyalaya in 1965. On account of old age he could not join the Sammelana, but sent a paper entitled "Tāntrika-Bhāvācāra-Sambandha -Samīksā". The paper has been published in the annals of the said Sammelana and now occurs as a part of the fifth chapter of the *Śaktadarśana.*

*Śāktadarśana* is the most comprehensive and the most scholarly compilation of the fundamental tenets of the Śākta Philosophy. Pandit Bhattacharyya was himself the Chief Priest (Doloi) of the Ugratārā Temple, one of the most important tantric pīthas,

for the major part of his life. This intimate experience of the tantric practices has been coupled with his earlier experience of teaching in pāthaśālās and has been reinforced with a genuine love for learning, which, surprisingly, continues till his present old age. Pandit Bhattacharyya succeeds in presenting the most critical and convincing views on such queer aspects of tantricism like the application of the five *Makāras*. He has ransacked the whole literature on Tāntricism and the Śākta Philosophy for compiling informations on all the relevant aspects of the Śākta cult in an encyclopaedic manner. Another instance of his erudition we had in the paper entitled "Darśanesu Cittattvavyavasthā Samīksā", which has been sent to and accepted by the Sarva Bharatiya Darśana Parishad held in the Varanaseya Samskrita Visvavidyalaya in December, 1967. This paper also now occurs as a part of his *Śāktadarśana.*

Thus his *Śāktadarśana* may be recommended as a very handy and helpful book of reference on Śākta Philosophy.

Original Sanskrit works written by Pandits of Assam are few and far between. Under such circumstances the *Śākta-darśana* of Pandit Bhattacharyya could be welcome as a magnificent contribution of Assam to Sanskrit literature. The language is all throughout simple and perspicuous and as such the compilation may be read with ease and benefit even by those whose main interest is philosophy or culture rather than Sanskrit. I take it as an opportunity to respectfully congratulate Pandit Bhattacharyya for his learned contribution to Sanskrit literature from Kāmarūpa.

I also take it as an opportunity to put in record my pleasure to see that his scholarship has been duly recognised in Assam as he had been chosen to preside over the annual convocation of the Assam Sanskrit Board held at Katigora in the month of April, 1968. It is also a matter of immense gratification for us that the Government of India has also very kindly sanctioned a Pandit pension to him with effect from October, 1967. The Education Ministry of the Government of India deserves our genuine gratefulness for granting a financial assistance for the publication of this learned work of Pandit Chakreswar Bhattacharyya.

Sd/- M. M. Sharma




PANDIT CHAKRESWAR BHATTACHARYYA

# शाक्त-दर्शनम्

## प्रथमः परिच्छेदः

### मङ्गलाचरणम्

यामाराध्य विरिञ्चिरस्य जगतः स्रष्टा हरिः पालकः
संहर्ता गिरिशः स्वयं समभवद् ध्येया च या योगिभिः।
यामाद्यां प्रकृतिं वदन्ति मुनयस्तत्त्वार्थविज्ञाः परां
तां देवीं प्रणमामि विश्वजननीं स्वर्गापवर्गप्रदाम् ॥१॥
(महाभागवते वेदव्यासोक्तिः)



### ग्रन्थारम्भः।

प्रकृतिरचितविश्वं शक्तिपूर्णं विचित्रं,
भवति च परिणामे संहृतं स्वात्मशक्त्या।
निखिलभुवनमध्ये शक्तिरेव प्रधानं,
श्रुतिमुनिमतमेतद्दर्शनं शाक्तसंज्ञम् ॥

नानाशास्त्रं समालोच्य देवर्षिसुधीभाषितम्।
श्रीचक्रेश्वरविप्रेण तन्यते शाक्तदर्शनम् ॥

(१) अथातः शक्तिजिज्ञासा?

अथेति प्रश्ने,—ग्रन्थारम्भानन्तरं ग्रन्थप्रतिपाद्यविषयवस्तु ज्ञातुमिच्छा। तदुक्तमगस्त्यमुनिना शक्तिसूत्रे। प्रथमसूत्रमिदम्।

(२) अथ का नाम शक्तिः?

अत्रोच्यते, ग्रन्थकृद्भिः सा खलु शक्तिः प्रकृतिर्मायाऽनादिरविद्या मिथ्या जड़ा चेति नाना नामभिरभिधीयते।

## शक्तिस्वरूपनिरुक्तिः

तदुक्तं **विवेकचूड़ामणि**-ग्रन्थेऽद्वैतवादिना श्रीमता शंकराचार्येण,—

अव्यक्तनाम्नी परमेशशक्ति-
रनाद्यविद्या त्रिगुणात्मिका परा।
कार्यानुमेया सुधियैव मायया
यया जगत् सर्वमिदं प्रसूयते ।। (११०)

तथाहि—अव्यक्तनाम्नी परमा ईशशक्तिः अनादिः, अविद्या, सत्त्वरजस्तमोगुणमयी परा प्रकृतिः, माया चेति कथ्यते। यया निखिलमिदं जगत्प्रसूयते। कार्य-कारण-स्वरूपेण सुधीभिः साऽनुमीयते।

सन्नाप्यसन्नाऽप्युभयात्मिका नो
भिन्नाप्यभिन्नाऽप्युभयात्मिका नो।
साङ्गाऽप्यनङ्गा ह्युभयात्मिका नो
महाद्भुताऽनिर्वचनीयरूपा ।। (१११)



सा च मायाशक्तिः सदपि न, असदपि न, एवमेतदुभयोः सदसतोरन्तर्भूताऽपि न, भिन्ना न, अभिन्नापि न, एतदुभयोर्भिन्नयोरन्तर्भूता न। साङ्गा न, अनङ्गा च न, साङ्गानङ्गयोरन्तर्भूताऽपि न भवति। अपि तु सा खलु महाद्भुताऽनिर्वचनीयस्वरूपा।

**श्वेताश्वतरोपनिषदि** माया प्रकृत्यर्थे व्यवहृता। यथा—

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" ।। (४।१०)

तथाच, माया प्रकृतिरेव, मायाधीशो महेश्वरः। माया-शब्दो नात्र कूहकपरः, परन्तु ब्रह्मशक्तिपरः, यस्याः शक्तेर्वैचित्र्यपूर्णमिदं जगत् प्रकाशते।

वैदान्तिका वदन्ति,—ब्रह्मणि जगत्प्रपञ्चोऽध्यस्तो भवतीति। सत्यम्, यया जगदध्यस्तमनुभूयते, तस्या अघटन-घटन-पटीयस्या मायायाः स्वरूपं विज्ञातुमसम्भव एव।

"सदसद्भ्यामनिर्वाच्या मिथ्याभूता सनातनी ।।"

**वेदे**,—"य एतां मायाशक्तिं वेद, स मृत्युं जयति,
स पाप्मानं तरति, सोऽमृतत्वमधिगच्छति।"

यो हि महामायां ब्रह्मशक्तिं वेत्ति, स मृत्युं जयति, पापमुक्तो भवति, अमृतत्त्वमश्नुते।

"अव्यक्ता हि सा माया तत्त्वान्यत्वनिरूपणस्याशक्यत्वात्।"

(इति **ब्रह्मसूत्रे शाङ्करभाष्यम्** १।४।३)

"शुद्धाद्वयविबोधनाश्यः सर्पभ्रमो रज्जुविवेकतो यथा।" (११२)
यथा रज्जुस्वरूपविज्ञानेन सर्पभ्रमो नश्यति, तद्वदभेदब्रह्मविज्ञानेन मायाया विलयः सम्भाव्यते। तदा सा त्रिगुणात्मिका ब्रह्मपदवाच्या।

**देवीभागवते** भगवती महाशक्तिः स्वयं गिरिराजमवदत्—

अहमेवासं पूर्वन्तु नान्यत् किंचिन्नराधिप।
तदात्मस्वरूपं संवित् परंब्रह्मैकनामकम्॥
अप्रतर्क्यमनिर्देश्यमनौपम्यमनामयम्।
तस्य काचित् स्वतः सिद्धा शक्तिर्मायेति विश्रुता॥
(७-३२)

तथाहि, हे गिरिराज! पुरा सर्गादौ एकाहमेवासं, नान्यत् किंचिदासीदिति। ममात्मानमेव ज्ञानिनः सच्चिदानन्दं परं ब्रह्मेत्यादिनामभिर्निर्दिशन्ति। ममात्मस्वरूपमनुमानादिज्ञानातीतं, लक्षणातीतम्, उपमातीतं, किञ्च जननमरणादिविकारातीतम्। मम हि स्वतः सिद्धैका शक्तिः सा मायेति प्रसिद्धा। मायायाः स्वरूपमनिर्वचनीयम्।

न सती सा नासती सा नोभयात्मा विरोधतः।
एतद्विलक्षणा काचिद् वस्तुभूतास्ति सर्वदा॥



तथा च,—ब्रह्मज्ञाने मायाया विलीनत्वान्न सा नित्या। पुनस्तस्या असत्त्वेऽपि व्यावहारिक सत्त्वाया विरोधः सम्भवति। अतो बन्ध्यापुत्रवदसत्पदार्थो न भवति। परस्पर विरोध्यालोकान्धकारन्यायेन सदसद्भावेनैकाधारे सहावस्थानस्यासम्भवात् सा सदसदुभयभावान्वितापि न भवति। अतएव त्रिविधभावत्वेन सा माया अनिर्वचनीयपदार्थस्वरूपा, परमार्थतोऽनादिः। परन्तु तस्या मोक्षकालपर्यन्तमस्तित्वमिति तत्त्वम्।

पावकस्योष्णतेवेयमुष्णांशोरिव दीधितिः।
चन्द्रस्य चन्द्रिकेवेयं ममेयं सहजा ध्रुवा॥५॥

तथाहि, वह्नेरुष्णता, सूर्यस्य रश्मिश्चन्द्रस्य चन्द्रिकेव मम माया, सहजाता नित्यशक्तिर्ज्ञातव्या। सा च विविधनाम्ना प्रसिद्धा।

तथाहि—

केचित्तां तप इत्याहुस्तमः केचिद् जड़ां परेऽ—
ज्ञानं मायां प्रधानञ्च प्रकृतिं शक्तिमप्यजाम्॥
विमर्श इति तां प्राहुः शैवशास्त्रविशारदाः।
अविद्यामितरे प्राहुर्वेदतत्त्वार्थचिन्तकाः॥९-१०॥

केचित्पण्डिता मम मायां तप इति वदन्ति। अपि केचित्तम इति, केचिद् जड़ा इति वदन्ति। अपरे केचिदज्ञानं, केचिच्च प्रधानमन्ये प्रकृतिं शाक्ताः शक्तिं नित्यां वदन्ति। शैवास्तां विमर्श इत्याहुः, इतरे वैदिका अविद्यां वदन्ति।

मन्मायाशक्तिसंक्लृप्तं जगत् सर्वं चराचरम्।
सापि मत्तः पृथङ् माया नास्त्येव परमार्थतः ॥१॥
व्यवहारदृशा सेयं मायाऽविद्येति विश्रुता।
तत्त्वदृष्ट्या तु नास्त्येव तत्त्वमेवास्ति केवलम् ॥२॥ (७।३३)

वैचित्र्यपूर्णं सदसत् चराचरमखिलमिदं जगन्मम मायाशक्त्या सम्यग्रचितं व्याप्तं भवति। परमार्थतो माया मत्तः पृथङ् न भवति। व्यवहारदृष्टया मदीया माया लोकेऽविद्येति व्याख्याता। किन्तु युक्त्या तत्त्वदृष्टितो दृष्टायास्तस्या अस्तित्वं नास्ति केवलं तत्त्वमेवास्तीति। तथा च **स्मृतिः**––

केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिर्णयः।
युक्तिहीनविचारे तु धर्महानिः प्रजायते ॥

तथाहि,––न केवलं शास्त्रदृष्ट्या निर्णयः सम्भाव्यते। युक्तिरप्यत्रापेक्ष्यते, न चेद्धर्महानिर्जायते। उक्तञ्चात्र महाकविना कालिदासेन––

"सतां हि सन्देहपदेषु वस्तुषु
प्रमाणमन्तःकरणप्रवृत्तयः ॥" इति।

पदार्थद्वयसन्देहे बलवदन्तःकरणप्रवृत्तिरेव प्रमाणम्, सदन्तःकरणप्रवृत्तिर्युक्तिरिति।

वैदान्तिका वदन्ति––

"ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः।" इति।

ब्रह्मणो मायाशक्तेः सामर्थ्यद्वयमावरणं विक्षेपश्चेति। जीवः प्रथममावरणेन ब्रह्मजीवयोरभेदेऽपि पृथग्जीव इत्यनुभवत्यात्मानम्। अपिच, अविद्याकृतशोकमोहाधीनो भवति। द्वितीयेन विक्षेपेण जीवचित्ते जगद्भ्रमः साध्यते। तदुक्तं **सरस्वतीरहस्योपनिषदि**––

शक्तिद्वयं हि मायाया विक्षेपावृत्तिरूपकम्।
विक्षेपशक्तिर्लिङ्गादिब्रह्माण्डान्तं जगत् सृजेत् ॥५२॥
अन्तर्दृग्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयोः।
आवृणोत्यपरा शक्तिः सा संसारस्य कारणम् ॥५३॥

तथाहि, मायायाः शक्तिद्वयं विक्षेप आवृत्तिश्चेति। विक्षेपशक्तिर्हि सूक्ष्मलिङ्ग-शरीरमारभ्य स्थूलब्रह्माण्डपर्यन्तं निखिलमिदं जड़जगद् एवमन्तरे प्रकृतिपुरुषयोर्भेदं बहिश्च ब्रह्मब्रह्माण्डयोर्भेदं सृजति। आवृत्तिशक्तिस्तावदावृणोति। एतदेवास्य जगतो मूलकारणम् ।।

## वैदान्तिक-तान्त्रिकयोः सिद्धान्तः

वैदान्तिकैः परब्रह्मणश्चित्स्वरूपा शक्तिर्माया जड़ा चेति कथ्यते। सैव जगदुपादानकारणं ब्रह्मविवर्त्तकारणञ्चेति। माया मिथ्या जड़ा च; तस्या मायायाः परिणामत्वेन जगन्मिथ्या जड़मेव। जड़ापि सा प्रकृतिः, पुरुष-सान्निध्याच्चिन्मयत्वमवाप्नोत्यन्धखञ्जन्यायेन।

तान्त्रिकैरुक्तं—परब्रह्मणि स्थिता चिच्छक्तिर्वैदान्तिकैः स्वीक्रियते। शक्ति-रेषानन्तशक्तिस्वरूपा। अर्थाद् विश्वब्रह्माण्डे यावत्यः शक्तयः सम्भाव्यन्ते, ताः सर्वा एव चिच्छक्तेरन्तर्भूता भवन्ति, सा खलु मायैव।

"परास्य शक्तिर्विविधैव श्रूयते।
माया चाविद्या स्वयमेव भवति।।" इत्यादि-

श्रुतिवाक्यमस्याः प्रमाणत्वेनोपलभ्यते। परमस्याश्चिच्छक्तेरेव परिणामो जगदित्युच्यते। परन्तु जगदाकारेणैव चिच्छक्तिः परिणतेति। अतएव चिन्मयं जगन्न जड़मिति। **दुर्गासप्तशत्यै** तदेव सुस्पष्टं गीयते—

"चितिरूपेण या कृत्स्नमेतद् व्याप्य स्थिता जगत्।" (५-७८)

भगवती चण्डी देवी चितिरूपेण जगत्सर्वं व्याप्यासीत्।

काश्मीरीय-शैव-दर्शने चितिशक्तेरपराणि नामानि,—विमर्शः, स्फूर्तिः, उल्लासः प्रकाशश्चेति शैवा वदन्ति। सर्वं खल्विदं जगत् स्वतः प्रकाशश्चितिशक्ते-रुल्लास एव। चिद्विलासप्रपञ्चोऽयम्। चिद्विलास इदं विश्वमिति **योगवाशिष्ठेऽप्युक्तम्**। तदेवोक्तं महाकविना कालिदासेन—

या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री,
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम्।
यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रसन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः।।

सर्वं खल्विदं विश्वं परमशिवस्य हि क्षित्यप्तेजोमरुद्व्योमचन्द्रसूर्यजीवाश्चेत्यष्टाधिष्ठात्रीभिः सर्व-भव-रुद्रोग्र-भीम-पशुपति-महादेवेशानाश्चेत्यष्टमूर्तिभिः प्रत्यक्षं व्याप्तं वर्तते। अतएव जगत्सत्यं परमशिव-जगतोरभेद इति।

## प्रकृतिवाद-निरुक्तिः

**यामले—** सत्त्वं रजस्तम इति गुणत्रयमुदाहृतम्।
साम्यावस्थितिमेतेषामव्यक्तं प्रकृतिं विदुः॥
सैव मूलप्रकृतिः स्यात् प्रधानं पुरुषोऽपि च॥

अथ का नाम प्रकृति:? गुणत्रयसाम्यावस्था प्रकृतिः। सत्त्वं रजस्तमश्चेति गुणत्रयमभिहितम्। प्राज्ञैरेतत्त्रयाणां साम्यावस्थाऽव्यक्तं प्रकृतिश्चोच्यते। सैव मूलप्रकृतिः प्रधानं पुरुषश्च कथ्यते।

**देवीभागवते,—**

प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः।
सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्तिता॥(९।१।५)

"प्र" इत्युपसर्गः प्रकृष्टवाचकः, "कृति" शब्दश्च सृष्टिवाचकः। अतएव या सृष्टिविषये प्रकृष्टरूपा सा महादेवी प्रकृतिनाम्ना प्रसिद्धा।



प्रथमे वर्तते प्रश्च कृतिश्च सृष्टिवाचकः।
सृष्टेरादौ च या देवी प्रकृतिः सा प्रकीर्तिता॥
(९।१।८)

सृष्टेः पूर्वावस्थावाचकः "प्र" शब्दः "कृति"श्च कृतिशब्दश्च सृष्टिवाचकः, सृष्टेरादौ या देवी देदीप्यमाना, सा "प्रकृतिः" कथ्यते।

गुणे सत्त्वे प्रकृष्टे च प्रशब्दो वर्तते श्रुतः।
मध्यमे रजसि कृश्च तिशब्दस्तमसि स्मृतः॥६॥
त्रिगुणात्मस्वरूपा या सा च शक्ति-समन्विता।
प्रधाना सृष्टिकरणे प्रकृतिस्तेन कथ्यते॥७॥

गुणत्रयस्य मध्ये विमलज्ञानप्रकाशकत्वेन सर्वोत्कृष्टः "प्र"-शब्दः सत्त्वगुणवाचकः। विक्षेपदोषात्मकस्य रजोगुणस्य मध्यमः "कृ" शब्दो वाचकः। तमोगुणो हि ज्ञानावरकत्वेनाधमः, तस्य "ति" शब्दो वाचकः। अतएव निरतिशयविक्षेपावरण-दोषरहिता गुणातीता सा चिन्मयी ब्रह्मरूपिणी यदा चोक्त-लक्षणाक्रान्ता गुणत्रय-समन्विता सर्वशक्तिसम्मिलिता भवेत्तदा सा सृष्टिकार्ये प्रधाना प्रकृतिरुच्यते।

शैवनीलकण्ठेन **देवीभागवत-टीकायां** (६।१।१) श्लोकप्रसङ्गे प्रकृतेरेतादृशी संज्ञा निर्देशिता। गुणत्रयसाम्यावस्थात्मक-माया-शबलब्रह्मरूपा प्रकृतिरिति तत्त्वम्।

### वेदे शक्तिवाद-निरुक्तिः

ऋग्वेदे—देवीसूक्तं, रात्रिसूक्तं च परिदृश्येते, सामवेदेऽपि—रात्रिसूक्तं परिदृश्यते। अतएव वेदेऽपि शक्तेः प्राधान्यं स्वीकृतम्।

ऋग्वेदस्य १०म-मण्डले, १० मानुवाके १२५ सूक्तं देवीसूक्तम्। अष्टमन्त्रात्मकदेवीसूक्तस्यर्षिरम्भृणमहर्षेः कन्या ब्रह्मविदुषी वाक्, तपसा सा ब्रह्मशक्तिस्वरूपमात्मशक्तिमनुभूयावदत्—अहं ब्रह्मशक्तिर्ब्रह्ममयी विश्वेश्वरी जगत्स्वरूपेण विश्वं सर्वं सम्पादयामीति।

अहं रुद्रेभिर्वसुभिश्चराम्यह-
मादित्यैरुत विश्वदेवैः।
अहं मित्रावरुणोभा बिभर्म्यह-
मिन्द्राग्नी अहमश्विनोभा ॥१॥

अहमेकादशरुद्रैरष्टवसुभिश्च चरामि। अहमेव द्वादशादित्यरूपेण चरामि। अहं मित्रावरुणौ, इन्द्राग्नी च धारयामि। एवमहमश्विनीकुमारद्वयमपि धारयामि। मत्तः परतरा कापि नास्तीति। रात्रिसूक्तस्य मन्त्रद्रष्टा ऋषिः कुशिकः। रात्रिसूक्तस्यायमर्थः,—ॐकारमयी भुवनेश्वरी रात्रिर्देवी सर्वत्र तस्याश्चक्षुःस्थानीयमहदादितत्त्वेन सर्वपदार्थानां दयोतनशीला। अर्थात्स्वकीयात्मानं जगदाकारेण प्रकाश्य स्वोत्पादितं कर्मपूर्णं जगज्जालं विशेषेण दर्शयति जीवानां स्वस्वकर्मानुरूपं फलमपि ददाति च।

रात्रिरिति—राति ददाति अभीष्टम् इति रात्रिः।

रात्रिर्द्विविधा, जीवरात्रिः, ईश्वररात्रिश्च। जीवरात्रिरूपसुषुप्तौ प्रत्यहं जीवानां व्यवहारो लुप्तो भवति। एवम् ईश्वररात्रिरूप-प्रलयकाले ईश्वरस्य व्यवहारो लुप्तो भवति। तदुक्तं **देवीपुराणे**—

ब्रह्ममयात्मिका रात्रिः परमेशलयात्मिका।
तदधिष्ठात्री देवी तु भुवनेशी प्रकीर्तिता॥

अर्थाद् रात्रिर्देवी, ईश्वरलयरूपा ब्रह्ममयात्मिका। तदधिष्ठात्री देवी भुवनेश्वरी, आद्याशक्तिरूपेण प्रसिद्धा। ऋग्वेदे भुवनेश्वरीमन्त्र उक्तः। अपिच शिवदुर्गा, सिन्धुदुर्गा, अग्निदुर्गा चेति तस्या मूर्तिभेदा वर्तन्ते।

ऋग्वेदे देवीसूक्त–श्रीसूक्तप्रभृतिसूक्तानि वर्तन्ते। अतः केवलं श्रीसूक्तादेको मन्त्र ऋग्वेदोक्त उपन्यस्यते,––

हिरण्यवर्णां हारिणीं सुवर्णरजतस्रजाम्।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१॥

हे अग्ने! स्वर्णवर्णां श्रीहरिपत्नीं स्वर्णरौप्यमालाधारिणीम् आनन्ददायिनीं, काञ्चनमयीं लक्ष्मीम् अस्मभ्यमावाहय।

**लक्ष्मीशब्दनिरुक्तिः**

"या लक्ष्यते दृश्यते जनैः सा लक्ष्मीः सौन्दर्यमित्यर्थः। (महीधरभाष्यम्) ऋग्वेदे पञ्चममण्डले खिलांशे पञ्चदशर्चं श्रीसूक्तम्। प्राचीन-पञ्चरात्र-वैष्णवशास्त्रे पुराणशास्त्रेषु च नानास्थानेषु श्रीसूक्तमुपन्यस्तम्। श्रीदेवी अथवा लक्ष्मीदेवी पद्मवर्णा पद्मे स्थिता पद्ममालिनी स्वयं पद्मिनी चाभिहिता। साधकास्तां यज्ञानुष्ठानेनाराध्य श्रीदेव्याः समीपे स्वर्णगोऽश्वादि-पशु-धनधान्याऽऽरोग्यसौन्दर्य-कीर्त्यृद्ध्यादींश्च प्रार्थितवन्तः।

ऋग्यजुःसामाथर्वणश्चेति-वेदचतुष्टये च श्रीसूक्त वर्तते। तदुक्त**मग्निपुराणे** (२६३।१-३)––

श्रीसूक्तं प्रतिवेदञ्च ज्ञेयं लक्ष्मीविवर्धनम्।
हिरण्यवर्णां हरिणीमृचः पञ्चदश श्रियः॥
रथेष्वक्षेषु वाजेति चतस्रो यजुषि श्रियः।
स्रावन्तीयं तथा साम श्रीसूक्तं सामवेदके॥
श्रियं धातर्मयि धेहि प्रोक्तमाथर्वणे तथा।
श्रीसूक्तं यो जपेद्भक्त्या हुत्वा श्रीस्तस्य वै भवेत्॥

तथाहि,––चतुर्वेदेषु लक्ष्मीप्रीतये श्रीसूक्तमन्त्रेण पूजाजपहोमादिकं विहितमस्ति। हिरण्यवर्णामित्यादि पञ्चदर्शचम् ऋग्वेदोक्तं श्रीसूक्तम्। रथेष्वक्षेषु वाजेप्रभृतिमन्त्रचतुष्टयात्मकं-यजुर्वेदोक्तं श्रीसूक्तम्। स्रावन्तीयं सामञ्चेति मन्त्रद्वयात्मकं सामवेदीयं श्रीसूक्तम्। श्रियं धातर्मयि धेहि, इति मन्त्रात्मकम् अथर्ववेदीयं श्रीसूक्तम्। लक्ष्मीदेव्याः पूजाजपहोमादिकरणेनाचला लक्ष्मीर्वर्धते।

शुक्लयजुर्वेदे श्रीर्लक्ष्मीश्चेति द्वे पत्न्यौ सूर्यस्येति कथ्यते। तन्मतञ्च तैत्तिरीयशाखायां समर्थ्यते। शतपथब्राह्मणे श्रीदेवी प्रजापति-मुखोत्पन्नेति कथ्यते।

एवमैतरेय-कौषीतकि-गोपथ-जैमिनीयप्रभृतिषु च ब्राह्मणेषु श्रीशब्देन प्राणाः, पृथिवी-सोम-सवितृ-राष्ट्र-मित्र-क्षेत्र-बल-बृहस्पति-पुष्य-भग-सरस्वती - पुष्टि -त्वष्टृ-प्रभृतयश्च कथ्यन्ते।

## शक्ति-ब्रह्मणोरभेद-निरुक्तिः

प्रसङ्गाच्छक्तिब्रह्मणोरभेदप्रतिपादकं सामवेदीय-केनोपनिषदुक्तमाख्यान-मत्रोच्यते,—पुरा देवासुरसंग्रामे ब्रह्मशक्त्या देवानां जयोऽभवत्। किन्तु ते देवाः खलु स्व-स्व-शक्त्या विजयिन इति मत्वा गौरवान्विता आसन्। ततो देवानां मिथ्याभिमानमपहर्तुं ब्रह्मशक्तिः स्वयं परब्रह्मविस्मयकरमूर्तिमवलम्ब्य देवानां सम्मुखे सहसाऽऽविर्बभूव। **कात्यायनीतन्त्रे** (७७ पटले)—

अथ दुर्गा जगन्माता नित्या चैतन्यरूपिणी।
एतेषां धर्मसेतूनामिन्द्रादीनां नियन्त्रणम्॥
करिष्यामीति निश्चित्य ज्योतिरूपं दधत्यलम्।
तेषामाविरभूद्दुर्गा जगद्धात्री जगन्मयी॥
कोटिसूर्यप्रतीकाशं चन्द्रकोटि-समप्रभम्।
ज्वलन्तं पर्वतमिव सर्वलोकभयङ्करम्॥
तद्ददृशुः सुराः सर्वे भयमापुर्महौजसः।
किमेतन्न विनिश्चेतुं शक्तास्ते ह्यभवन् सुराः॥

देवा अपि आविर्भूतं पूजनीय-ब्रह्मरूपमजानन्तस्तत्समीपमग्निं प्रेरयामासुः। ब्रह्माप्यग्निमवदत्,—"तव नाम कर्माणि च वदे" ति। अग्निराह,—अहमग्निरा-ब्रह्माण्डमपि दग्धुं शक्नोमि। ततो ब्रह्म अग्निसम्मुखे तृणखण्डमेकं संस्थाप्याह,—"दह्यता" मिति। ततोऽग्निः सर्वशक्तिप्रयोगेणापि तृणखण्डं दग्धुमशक्तो देवानु-पगम्याम्लानमुखस्तदकथयत्। अनन्तरं पूर्ववद् वायुर्ब्रह्मसमीपं गत्वाऽकथयदहं वायुः पृथिव्यां यानि वस्तूनि वर्तन्ते, तानि सर्वाणि भ्रामयित्वा नेतुं समर्थः। ततो ब्रह्म पूर्ववत्तृणखण्डं वायोः सम्मुखे संस्थाप्याकथय"दधुना नीयता"मिति। ततो वायुः सर्वशक्तिप्रयोगेणापि नेतुमसमर्थो लज्जितः सन् पलायितः। तदनन्तर-मिन्द्रे छद्मवेशिनो ब्रह्मणः समीपमागते ब्रह्मान्तर्हितमभवत्। इन्द्रोऽपि तत्स्थाने-ऽन्तरीक्षे सुशोभनामुमां हैमवतीं दृष्टवान्। तदा देवी हैमवती देवराजमकथयत्। केवलं ब्रह्मशक्त्या देवा बलशालिनोऽसुरविजयिनश्चासन्। मिथ्याभिमान-स्त्यज्यतामिति। ततो लज्जिताः सन्तः हैमवतीमुमां—

प्राहुर्देवगणाः सर्वे त्वमीशो नेश्वरा वयम्।
ईश्वरत्वाभिमानेन यदस्माकं सुदुष्कृतम्।
क्षन्तुमर्हसि तत्सर्वं कृपया जगदम्बिके॥
तव रूपं सुगोप्यं यन्मङ्गल्यं सर्वमङ्गलम्।
तद् द्रष्टुं वयमिच्छामो देहि दर्शनमुत्तमम्॥

तथाहि, सर्वे देवगणास्तां हैमवतीं प्राहुः, हे जगन्मातः, त्वमीश्वरी वयं नेश्वरा इति। ईश्वरत्वाभिमानवशात् वयं यन्महापराधं कृतवन्तस्तत् कृपया क्षमस्व। तव सुगोप्यं सुमङ्गल्यं सर्वमङ्गलहेतुभूतं यद् रूपं तद्वयं द्रष्टुमिच्छामः। तेनैवोत्तमरूपेण त्वमस्माकं दर्शनं देहि। ततो हैमवती देवानां जगद्धात्रीरूपं दर्शयामास।

## जगद्धात्री-तत्त्वम्

**देवीपुराणे—**

यस्माद्धारयते लोकान् वृत्तिमेषां ददाति च।
"डु धाञ् धारणे" धातुस्तस्माद्धात्री मता बुधैः॥(३७।७५)

तथाहि, धारणपोषणे धा-धातोरर्थः। यस्माद्देवी लोकसमूहं धारयति, सर्वान् जीविकादानेन पालयति च, ज्ञानिनस्तस्मात्तां जगद्धात्रीं वदन्ति। एषा हि दुर्गादेव्या विशेषप्रकाशो महादुर्गेति लोके प्रसिद्धा। देवानां कातर-प्रार्थनया तुष्टा सती तेजः पुञ्जादाविर्बभूव।

## जगद्धात्री-स्वरूपम्

मृगेन्द्रोपरि सुस्मेरा सर्वालङ्कार-भूषिता।
चतुर्भुजा महादेवी रक्ताम्बरधरा शुभा॥
बालार्क-सदृशदेहा नागयज्ञोपवीतिनी।
त्रिनेत्रा कोटिचन्द्राभा देवर्षिमुनिसेविता॥
दर्शयामास देवानामेवं रूपं जगन्मयी।

या देवी सिंहपृष्ठे समारूढा हास्यमुखी सर्वालङ्कार-भूषिता, सा चतुर्भुजा मङ्गलमयी रक्तवसना। नवोदितसूर्यसमरक्तवर्णशरीरविशिष्टा कोटिचन्द्र-सदृशस्निग्धकान्तियुक्ता देवी नागयज्ञोपवीतिनी त्रिनयना देवर्षिमुनिगणसेविता। जगद्रूपिणी महादुर्गा जगद्धात्री देवी देवानेवंरूपं दर्शयामास। **जगद्धात्री-कल्पोक्तस्तवे** शिव उवाच,—

आधारभूते चाधेये धृतिरूपे धुरन्धरे।
ध्रुवे ध्रुवपदे धीरे जगद्धात्री नमोऽस्तु ते॥

हे जगद्धात्रि, त्वमाधाराधेय-स्वरूपिणी, धृतिशक्तिस्वरूपा वसुन्धरा, सर्व-जगद्भारवहनकारिणी। अर्थात्सृष्टयादौ विश्ववीजं त्वं गर्भे धारयसि, प्रसवानन्तरमपि पृथ्वीरूपेण विश्वं धारयसि च। तदुक्तं **नारायणी-स्तवे,**—

"आधारभूता जगतस्त्वमेका,
महीस्वरूपेण यतः स्थितासि।" इति।

त्वं नित्या नित्यधामस्वरूपा-अविचलितपदा, अतस्त्वां नमामि। हे जगद्धात्रि त्वं महीरूपेण स्थितासि। अर्थाद्—धृतिशक्ति-स्वरूपेणाधाराधेयाऽविच्छेद्य-सम्बन्धेन विश्वं धृत्वा त्वं रक्षितत्वेनासि अतोऽनन्तकोटिजीवा अनन्तकोटि-ज्योतिष्कमण्डलानि च त्वत्कृपया—स्वस्वगन्तव्यपथे सुशृङ्खलगत्या परिचालिताः सन्तः प्रचलन्ति।

तदेवोक्तं श्रुतौ—

"एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः। एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृतौ तिष्ठतः। एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्रार्धमासा ऋतवः संवत्सरा इति विधृतास्तिष्ठन्ति। एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते, श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या यां यां च दिशमनु।"

(**वृहदारण्यकोपनिषद्** ३।८।९)

जगद्धात्री "ध्रुवपदा"—अर्थान्नित्यधामस्वरूपिणी। तस्यास्तद्धामलाभे साधकस्यास्मिन्ननर्थसंकुलसंसारे पुनरावर्तनं न भवति।

**गीतोपनिषदि** तदुक्तम्—

"न तद्भासयते सूर्यो न शशाङ्को न पावकः।
यद् गत्वा न निवर्तन्ते तद्धाम परमं मम॥(१५।६)

**श्रुतौ** च— "न तत्र सूर्यो विभाति न चन्द्र-तारकं,
नेमा विद्युतो भान्ति कुतोऽयमग्निः।
तमेव भान्तमनुभाति सर्वं,
तस्य भासा सर्वमिदं विभाति॥

(**कठोपनिषद्** ५।१५)

## जगद्धात्रीपूजाविधिः

कात्यायनीतन्त्र-शक्तिमङ्गलतन्त्र-उत्तरकामाख्यातन्त्र-कुब्जिकातन्त्र-दुर्गाकल्प-भविष्यपुराणप्रभृतिग्रन्थेषु च जगद्धात्रीपूजाविधिरालोचितः। निगमकल्पसारे ज्ञानसारस्वतग्रन्थे च एतदेव वर्णितम्—

कार्तिके शुक्लपक्षे च या दुर्गानवमी तिथिः।
सा प्रशस्ता महादेव महादुर्गाप्रपूजने॥
प्रातश्च सात्त्विकी पूजा मध्याह्ने राजसी मता।
सायाह्ने तामसी पूजा त्रिविधा परिकीर्तिता॥
सप्तम्यादिनवम्यन्तः पूजाकाल इतीरितम्॥
त्रिदिने त्रिविधा पूजा दशम्याञ्च विसर्जयेत्।
पूजा परेऽह्नि देवेश तथाप्यत्र विसर्जनम्॥

कार्तिकमासस्य शुक्लनवमी तिथिः "दुर्गानवमी"त्युक्ता। तत्र महादुर्गा-जगद्धात्री-पूजा प्रशस्ता। तद्दिने प्रातः सात्त्विकी पूजा, मध्याह्ने राजसी पूजा, सायाह्ने तामसी पूजा, इत्येवंरूपेण त्रैकालिकपूजा विहिता। यथा शारदीय-पूजायां सप्तम्यादिनवम्यन्तं त्रिदिने त्रिविधा पूजा, दशम्यां विसर्जनं, तथा-ऽत्राप्येकदैव त्रिकाले त्रिविधपूजां समाप्य दशम्यां विसर्जनं विहितम्। नव-मीतिथिद्वैधे यद्युभयदिनेऽपि त्रिकालव्यापिनी न भवेत्तदा प्रातःकाल-व्यापिनी नवमी यदा भवेत्, तद्दिन एव त्रैकालिकी पूजा कर्तव्या। किन्तु अत्र स्थले यदि नवमी प्रातर्मुहूर्तव्यापिनी न भवेत्तदा पूर्वदिन एव त्रैकालिकी पूजा कर्तव्या। एककाले त्रिविधपूजा अप्रशस्ता। अत्र स्थले दशम्या बलिदानं न निषिद्धम्।

प्रणामः— ॐ दयारूपे दयादृष्टे दयार्द्रे दुःखमोचिनि।
सर्वापत्तारिके दुर्गे जगद्धात्रि नमोऽस्तु ते॥

हे जगद्धात्रि, त्वं दयास्वरूपा, कृपादृष्टिरूपा, दयार्द्रीभूतहृदया, सन्तानदुःख-मोचनकारिणी, अतो हे दुर्गे त्वां नमामि।

ॐ अगम्यधामधामस्थ-महायोगीशहृत्पुरे।
अमेयभावकूटस्थे जगद्धात्रि नमोऽस्तु ते॥

हे जगद्धात्रि! त्वमगम्यलोकाधिष्ठित-महायोगीशहृदयपुरनिहितानुपमासीम-भावसमूहमध्यस्थिता, त्वां नमामि।

ॐ जयदे जगदानन्दे जगदेकप्रपूजिते।
जय सर्वगते दुर्गे जगद्धात्रि नमोऽस्तु ते॥

हे जगद्धात्रि, त्वं जयदायिनी, जगति त्वमेवानन्ददायिनी, जगतीह त्वमेकैव पूजिता, एवं सर्वपदार्थेऽनुप्रविष्टा, हे दुर्गे! त्वां नमामि। (**जगद्धात्री कल्पः**)

**सांख्यायन-गृह्यसूत्रे** भद्रकाल्या नामास्ति। **हिरण्यकेशीगृह्यसूत्रे** भवानी-देव्यै यज्ञाहुतिदानव्यवस्था विद्यते। शुक्लयजुर्वेदस्य **वाजसनेयीसंहितायाम**-म्बिकादेवी रुद्रभगिनीरूपेण कथिता। एवं कृष्णयजुर्वेदस्य **तैत्तिरीयारण्यक**-मतेन अम्बिकादेवी रुद्रपत्नीति कथ्यते।

**तैत्तिरीयारण्यकस्य नारायणोपनिषदि,**

"तामग्निवर्णां तपसा ज्वलन्तीं
वैरोचनीं कर्मफलेषु जुष्टाम्।
दुर्गादेवीं शरणमहं प्रपद्ये,
सुतरसि तरसे नमः॥"

अहं वैरोचनीं परमात्मदृष्टयाग्निवर्णां स्वीयतापेन शत्रुदहनकारिणीं कर्मफलदात्रीं दुर्गादेवीं शरणं प्रपद्ये। हे सुतारिणी! संसारत्राणकारिणी देवि नमस्ते।

**तैत्तिरीयारण्यका**न्तर्गत-याज्ञिकोपनिषदि दुर्गागायत्र्यस्ति—"कात्यायन्यै विद्महे कन्याकुमारीं धीमहि, तन्नो दुर्गा प्रचोदयात्।" सायनाचार्यमते दुर्गी दुर्गाऽभिन्नेति। (१०।१।७)

पौराणिकसाहित्ये लक्ष्मीदेव्या बहुतराख्यानानि दृश्यन्ते। सा विष्णु-शक्तिस्तस्य भगवतः पत्नीस्वरूपेण वर्णिताऽस्ति। पुराणानां बहुस्थानेषु लक्ष्मीः कारणार्णवे शेषशय्याशायिनो नारायणस्य सेवानिरता पत्नीस्वरूपा कथ्यते। पञ्चरात्र-वैष्णवागमे श्रीदेव्यास्तत्त्वं विशेषभावेनालोचितम्।

दाक्षिणात्ये रामानुजसम्प्रदायः श्रीसम्प्रदाय इत्यभिधीयते। ते खलु श्रीदेवीमन्त्रोपासकाः। तेषामयमेव भावो यथास्माकं पारिवारिकजीवने पिता-पुत्रयोर्मध्यवर्तिनी माता सर्वं संसारकर्म सम्पादयति, तद्वत् श्रीदेवी जीवेश्वर-योर्मध्यवर्तिनी भूत्वा जीवं प्रति दयाशीलस्य भगवतः करुणा यथा भवेत्, यथा चेश्वरं प्रति जीवस्यानुरागो जायेत, तथैव सर्व्वं सम्पादयति। मुक्ति-साधना तु दैवयोगेन बहुपुण्यवशात् कस्यापि भाग्येन हि घटते। सापि भगवदिच्छां

विना न सम्भवति। किन्तु न्यायपरायणस्य परमेश्वरस्यापि सच्छिद्रघटे जलपूरणवदपात्रे कृपा कदापि न सम्भवति। अतएव ईश्वरकृपालाभाय मध्यस्थस्य प्रयोजनमिति।

### रामायणे शक्तिवादनिरुक्तिः

पुरा त्रेतायां युगावतारः श्रीरामचन्द्रो रावणादिनिशाचरगणवधार्थं पृथिव्यामवतीर्णः पितृसत्यपालनाय वनं गतवान्। तत्र हृता सीता, रामस्तदुद्धरणाय कपिगणसहितः समुद्रे सेतुं बध्वा लङ्कां प्रविवेश। तत्र लङ्कायां प्रवृत्ते रामरावणयोर्घोरतर-समरे दुर्गायाः कृपया रावणो विजयी भवेदिति देवा मन्त्रयित्वा, अकाले दक्षिणायने शरत्काले रावणस्य सवंशनिधनाय श्रीरामस्य विजयाय च सङ्कल्पितवन्तः। ततो ब्रह्मा स्वयं महाशक्तिं दुर्गादेवीं बोधयित्वा पूजयामास। तदुक्तं **महाभागवते** महापुराणे, (४५ श. अ.)—

ब्रह्मोवाच,—

देवि त्वं बोधिताऽस्माभिरकालेऽपि सुरोत्तमे।
हिताय सर्वभूतानां राक्षसानां वधाय च ॥२२॥
जयाय रामचन्द्रस्य संग्रामेऽतिसुदारुणे।
यावद्दशाननः सङ्ख्ये सपुत्रगणबान्धवः ॥२३॥
पतिष्यति गतप्राणस्तावत्त्वां जगदम्बिकाम्।
पूजयिष्ये महादेवीं राघवस्य जयेच्छया ॥२४॥
त्वं प्रसन्ना यदि शिवे तदा पूजां प्रगृह्य च।
निपातय महद्रक्षः कुलं देवि दिने दिने ॥२५॥

ब्रह्मोवाच, हे देवि! सुरोत्तमे! सर्वजीवहितार्थं राक्षसकुलवधनिमित्तं श्रीरामचन्द्रस्य च सुदारुणसंग्रामजयार्थमकाले सहदेवोऽहं त्वां बोधयामि। यावत् सपुत्रः सबलबान्धवो दशाननो रणे निपतिष्यति, तावत्त्वां जगदम्बिकां महामायां दुर्गादेवीं राघवस्य विजयार्थमहं पूजयिष्यामि। हे शिवे! देवि! त्वं सुप्रसन्ना-सती अस्मत्कृतां पूजां प्रगृह्य महद् रक्षःकुलं दिने दिने निपातय।

पुरा रुद्रोक्ते रुद्र चण्डीग्रन्थे "अरण्ये रघुनाथोऽपि महापूजां करिष्यती"ति भविष्यद्वाणी प्रोक्ता। शारदीय पूजायाम्

"ऐं रावणस्य वधार्थाय रामस्यानुग्रहाय च।
अकाले ब्रह्मणा बोधो मया त्वयि कृतः पुरा।"

इत्यादिमन्त्रेणाऽकालबोधनविधिर्विहितः। वसन्तकालीनदुर्गापूजायां बोधन-विधिर्नास्ति। कृत्तिवासकृते रामायणे सविशेषं रामचन्द्रस्य कपिगण-सहितस्य दुर्गापूजा वर्णिता। युगावतारेण वेदव्यासेन महाभागवत-महापुराणे श्रीरामस्याकालबोधनेन शरदि दुर्गापूजा सविस्तरं वर्णिता। तदवधि "शरत्कालीनदुर्गामहापूजा" या बाहुल्यमद्यापि दृश्यते। अतएव रामायणेऽपि शक्तेः प्राधान्यं स्वीकृतम्।

### महामायास्वरूपनिरुक्तिः

**कालिकापुराणे—**

गर्भान्तर्ज्ञानसम्पन्नं प्रेरितं सूतिमारुतैः।
उत्पन्नं ज्ञानरहितं कुरुते या निरन्तरम्॥१॥
पूर्वातिपूर्व-संस्कारसङ्घातेन नियोज्य च।
अहरादौ ततो मोहममत्वज्ञानसंशयम्॥२॥
क्रोधोपरोधलोभेषु क्षिप्त्वा क्षिप्त्वा पुनः पुनः।
पश्चात् कामेन संयोज्य चिन्तायुक्तमहर्निशम्॥३॥
आमोदयुक्तं व्यसनाशक्तं जन्तुं करोति या।
महामायेति संप्रोक्ता तेन सा जगदीश्वरी॥४॥

तथाहि, मातृगर्भस्थो ज्ञानसम्पन्नः शिशुः प्रसूतिवायुना प्रेरितो भूमिष्ठावस्था-प्राप्तिमात्रं यया ज्ञानरहितः क्रियते, परन्तु पूर्वपूर्व-जन्मसंस्कारवशात् सद्यो-जातजीवस्य प्रथमदिने यया ज्ञाननाशकमोहममताभ्यामाच्छाद्यते, यया च क्रोध-मोह-लोभेषु पुनः पुनर्निक्षिप्य पश्चात् कामासक्त्याऽहर्निशं चिन्तायुक्त आमोदनिरतो व्यसनासक्तश्च क्रियते, सा एव जगदीश्वरी "महामाया" अभिहिता।

"महामाया परमेश्वरी शक्तिर्विसदृशप्रतीतिसाधिका ईश्वरीशक्तिरिति" —नागोजीभट्टः।

एषा हि अघटन-घटन-पटीयसी ब्रह्मात्मिका शक्तिरिति **तत्त्वप्रकाशिका-टीका**। जीवस्य बन्धनमुक्तिर्महामाया सम्पद्यते।

### देवीभागवते शक्तिवादनिरुक्तिः

पुराकल्पे मधुकैटभवधप्रसङ्गे ऋषयः पुराणवक्तारं त्रिकालज्ञं सूतमूचुः —हे सूत! सर्वशक्तिमान् भगवान् विष्णुः, योगनिद्रया महाकाल्या स कथमभिभूयते, तत् सर्वं सविस्तरं कथयेति। तदुक्तं **देवीभागवते—**

देवा ऊचुः—

आदिदेवो जगन्नाथः समर्थः सर्वकर्मसु।
नान्यः कोऽपि समर्थोऽस्ति विष्णोरतुलतेजसः।।
स कथं स्वापितः स्वामी विवशो योगनिद्रया।
क्व गतं तस्य विज्ञानं जीवतश्चेष्टितं कुतः।।
सन्देहोऽयं महाभाग कथयस्व यथा शुभम्।
का सा शक्तिः पुरा प्रोक्ता यया विष्णुर्जितः प्रभुः।।
कुतो जाता कथं शक्ता का शक्तिर्वद सुव्रत।।(१।८।५।८)

तथाहि,—आदिदेवो जगन्नाथो विष्णुः सर्वकर्मसु कुशलः। तस्यातुलतेजसो विष्णोः सममन्यः कोऽपि समर्थो न विद्यते। अत एव महाप्रभावसम्पन्नो जगत्स्वामी भगवान् विष्णुः कथं वा महामायया मोहनिद्रया अज्ञानत्वेन पराभूयते? हे महाभाग! जीवतस्तस्य ज्ञानविज्ञानप्रभावाः कुत्रान्तर्हिताः? येनास्माकं सन्देहभञ्जनं भवेत्, तत्सर्वं यथायथं साङ्गं वर्णय। हे सूत! यया प्रभुर्विष्णुः पराजितः, पुरा प्रोक्ता का सा शक्तिः? कुतो वा जाता, हे सुव्रत! कीदृशप्रभावा सा, या खलु शक्तिर्विष्णुमपि पराभवितुं समर्था, तत्सर्वं सविस्तारं कथय। महर्षीणां प्रश्ने सूतः शक्तिरहस्यं सविस्तारमवदत्। आद्या शक्तिर्हि ब्रह्म-विष्णु-शिव-सूर्यादिसर्वदेवानामङ्गे स्थित्वा जगत्कार्यं सृष्टिस्थितिलयात्मकं सर्वं कर्म साधयति। तया हीनास्ते देवा जगतीह शववदकर्मण्या भवन्ति। तथाचोक्तम्—

विद्वांसोऽपि वदन्त्येवं पुराणैरपि गीयते।
द्रुहिणे सृष्टिशक्तिश्च हरौ पालनशक्तिता।।
शिवे संहारशक्तिश्च सूर्ये शक्तिः प्रकाशिका।
धराधारणशक्तिश्च शेषे कूर्मे तथैव च।।
साऽऽद्या शक्तिः परिणता सर्वत्र या प्रतिष्ठिता।
दाहशक्तिस्तथा वह्नौ समीरे प्रेरणात्मिका।।
शिवोऽपि शवतां याति कुण्डलिन्या विवर्जितः।
शक्तिहीनस्तु यः कश्चिदसमर्थः स्मृतो बुधैः।।
(१।८।२८-३१)

तथा च, तत्त्वदर्शिनो वदन्ति पुराणैरपि कथ्यते, ब्रह्मणि सृष्टिकृच्छक्तिर्विष्णौ पालनशक्तिः, शिवे संहरणशक्तिः, सूर्ये प्रकाशशक्तिरनन्ते कूर्मे च पृथ्वीधारणशक्तिर्वह्नौ दाहिकाशक्तिर्वायौ प्रेरणात्मिका शक्तिश्चेति, तेषामन्तर्भूतेन

विविधशक्तिरूपेण सर्वत्र केवलमाद्या शक्तिर्विराजते। अस्मिन् विश्वब्रह्माण्डे यः कश्चिदपि शक्तिविहीनः स खलु किमपि कर्तुं न शक्नोति। परन्तु शिवोऽपि यदि स्वयं कुण्डलिन्या शक्त्या हीनस्तर्हि शवत्वं प्राप्नोति। तथाचोक्तम्—

एवं सर्वगता शक्तिः सा ब्रह्मेति विविच्यते।
सोपास्या विविधैः सम्यग् विचार्य सुधिया सदा।।
विष्णौ च सात्त्विकी शक्तिस्तया हीनोऽप्यकर्मकृत्।
द्रुहिणे राजसी शक्तिर्यया हीनो ह्यसृष्टिकृत्।।
शिवे च तामसी शक्तिस्तया संहारकारकः।
इत्युह्यं मनसा सर्वं विचार्य च पुनः पुनः।।
शक्तिः करोति ब्रह्माण्डं सा वै पालयतेऽखिलम्।
इच्छया संहरत्येषा जगदेतच्चराचरम्।। (१।८।३४-३७)

तथाहि—ईदृशी सर्वगता सर्वव्यापिनी शक्तिरेव सुधीभिः सम्यग् विविच्य ब्रह्मेति कथ्यते। स्नान-पूजा-बलि-होम जपादिश्चेति विविधप्रकारैरुपास्यते च। एवञ्च विष्णौ सात्त्विक-शक्तित्वे विश्वब्रह्माण्डपालने समर्थस्तया हीनस्तु जड़-वदकर्मण्यः। तद्वद् विधौ राजसीशक्तिमत्त्वे विश्वसृजने समर्थः शक्ति-हीनस्त्वक्षमः शिवे च तामसीशक्तिमत्त्वे संहरणे समर्थ इत्येवं-क्रमेण सर्वं विवेकेन विचार्य ज्ञातव्यम्। सैव परमा आद्या शक्तिः स्वेच्छया निखिल-ब्रह्माण्डं सृष्टि-स्थिति-लयान्तं सर्वं नियमेन सम्पादयतीत्यपि च ज्ञातव्यम्।
तथाच— इति वः कथितं सर्वं यत्पृष्टोऽस्मि सुनिश्चितम्।
महाविद्या महामाया सेवनीया सदा बुधैः।।
आराध्या परमा शक्तिः सर्वैरपि सुरासुरैः।
नातः परतरं किञ्चिदधिकं भुवनत्रये।।
सत्यं सत्यं पुनः सत्यं वेदशास्त्रार्थनिर्णयः।
पूजनीया परा शक्तिर्निर्गुणा सगुणाऽथवा।।
(१।६।८५-७)

नैमिषारण्ये ऋषिसमाजं प्रति सूतोऽवदत्, भो ऋषयः! मया भवतां जिज्ञास्यः समग्रो विषयो यथाज्ञानं कीर्तितः। फलतो ज्ञानिभिः सा महा-विद्या महामाया महाशक्तिः सर्वदाराधनीया। एवं सर्वैः सुरासुरैरपि सा परमा शक्तिः सेवनीया त्रिसत्येनाहं कथयामि वेदवेदान्तादि-सर्वशास्त्रैरपि निर्णीयते यत्त्रिभुवने शक्ति विना सेवनीयमन्यत् किञ्चिदपि न विद्यते। अतएव सगुणभावेन निर्गुणभावेन वा शक्तिरेव सर्वैः सेवनीया। पुराकल्पे कारणार्ण-

वशायी विष्णुर्यदा महामायया महाकाल्या योगनिद्रारूपयाऽभिभूतो बाह्य-ज्ञानशून्योऽभवत्, तन्नाभिकमलस्थो ब्रह्मापि तदा विष्णुकर्णमलोद्भूत-मधुकैट-भभयाद्भीतोऽनन्योपायो योगनिद्रामस्तौत्। तदुक्तं **दुर्गासप्तशतीस्तवे,—**

यया त्वया जगत्स्रष्टा जगत्पातात्ति यो जगत्।
सोऽपि निद्रावशं नीतः कस्त्वां स्तोतुमिहेश्वरः?
विष्णुः शरीरग्रहणमहमीशान एव च।
कारितास्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान् भवेत्?
सा त्वमित्थं प्रभावैःस्वैरुदारैर्देवि संस्तुता।
मोहयैतौ दुराधर्षावसुरौ मधुकैटभौ॥
प्रबोधश्च जगत्स्वामी नीयतामच्युतो लघु।
बोधश्च क्रियतामस्य हन्तुमेतौ महासुरौ॥

तथाहि, हे मातः! यः खलु सृष्टेः स्थितेः प्रलयस्यापि च कर्ता परमेश्वरो विष्णुः सोऽपि त्वया योगनिद्रावशं नीतः, अतएव कस्त्वां स्तोतुमिह समर्थो भवेत्। परन्तु त्वयैव शिवो विष्णुरहञ्च प्रसूये; अतः कस्त्वां स्तोतुं शक्तिमान् भवेत्? हे देवि सा त्वं स्वीयमहिमप्रभावेण संस्तुता सती दुराधर्षावेतौ मधुकैटभौ मोहय। अपि च, जगत्स्वामिनं विष्णुमचिराद् योगनिद्रात उत्थाप्य एतयोर्महासुरयोर्हननेऽस्य प्रवृत्तिश्च क्रियतामिति।

## पुराणे शक्तिवादनिरुक्तिः

कालिकापुराणे, देवीपुराणे, बृहन्नन्दिकेश्वरपुराणे च, दुर्गापूजा प्रयोग-पद्धतिरद्यापि प्रचलिता विद्यते। विष्णुपुराणे, मार्कण्डेयपुराणे, मत्स्यपुराणे, वामनपुराणे, ब्रह्मवैवर्तपुराणे, स्कन्दपुराणे, महाभागवतमहापुराणे, बृहद्धर्म-पुराणे, बृहन्नारदीयपुराणे, देवीभागवते, तथान्येष्वपि नानापुराणेषु सर्वत्रैव शक्तेः प्राधान्यं स्वीकृतम्। श्रीमद्भागवतस्य प्रसिद्ध-टीकाकर्त्रा श्रीधर-स्वामिनोक्तम्—"अतो ब्रह्मणोऽपि स्वभावसिद्धाः शक्तयः सन्त्येव, पावकस्य दाहकत्वादिशक्तिवदिति। तदेव स्पष्टीकृतं **देवीभागवते—**

सेयं शक्तिर्महामाया सच्चिदानन्दरूपिणी।
रूपं बिभर्त्यरूपा च भक्तानुग्रहहेतवे॥

सैषां सच्चिदानन्दरूपिणी महामाया भक्तानामनुग्रहायाऽरूपापि च सा रूपं बिभर्ति।

मार्कण्डेयपुराणे सप्तशती-प्रयोगे का सा महामायेति समाधिसुरथयोः प्रश्ने मेधर्षिरवदत्—

नित्यैव सा जगन्मूर्तिस्तया सर्वमिदं ततम्।
तथापि तत्समुत्पत्तिर्बहुधा श्रूयतां मम॥
देवानां कार्यसिध्यर्थमाविर्भवति सा यदा।
उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते॥

तथाच,—सा महामाया नित्या जन्ममृत्युरहिता, जगत्प्रपञ्चोऽयं तस्या एव विराड् मूर्तिः। तयैव सर्वमिदं विश्वं व्याप्तमासीत् तथापि तस्या बहुधा-विर्भावो मत्तः श्रूयताम्। देवानां कार्यसिद्धयर्थं यदा सा भौतिकमूर्त्याऽऽविर्भ-वति तदा नित्यापि सा लोकैरुत्पन्नेति कथ्यते।
देवानां स्तुतौ देवा ऊचुः—

या देवी सर्वभूतेषु चेतनेत्यभिधीयते।
नमस्तस्यै, नमस्तस्यै, नमस्तस्यै नमो नमः॥

या देवी सर्वप्राणिषु चेतनारूपेण प्रकाशिता, तां स्थूल-सूक्ष्म-कारण-कारणातीत-स्वरूपां च नमामि।



इन्द्रियाणामधिष्ठात्री भूतानाञ्चाखिलेषु या।
भूतेषु सततं तस्यै व्याप्तिदेव्यै नमोनमः॥ (६।२-७७)

या देवी सर्वभूतेषु चतुर्दशेन्द्रियाणामधिष्ठात्रीदेवीरूपेण विराजिता, अर्थात् कर्ण-त्वक्-चक्षु-र्जिह्वा-नासिका चेति पञ्चज्ञानेन्द्रियाधिष्ठात्री यथाक्रमं दिग्-वायुः-सूर्यो-वरुणोऽश्विनीकुमारश्चेति पञ्चरूपेण, एवं वाक्-पाणिः-पादः-पायुरुपस्थश्चेति पञ्चकर्मेन्द्रियाधिष्ठातृ-देवताः पञ्च,-अग्नि-रिन्द्रो-विष्णु-र्यमः-प्रजा पतिरिति पञ्चरूपेण, तथा मनो बुद्धिरहङ्कारश्चित्ताधिष्ठातृदेवताचतुष्टय-रूपेणार्थाच्चन्द्रब्रह्मशङ्कराच्युतरूपेण च सैव विराजिता। सैव च पृथिव्यादिपञ्च-स्थूलसूक्ष्माणां भूतानां प्रेरयित्री। अतस्त्वां विश्वव्यापिकां ब्रह्मरूपां देवीं पुनः पुनः प्रणमामः।

**नारायणीस्तवे च—**

विद्याः समस्तास्तव देवि भेदाः।
स्त्रियः समस्ताः सकला जगत्सु।
त्वयैकया पूरितमम्बयैतत्
का ते स्तुतिः स्तव्यपरापरोक्तिः॥६॥

हे देवि, वेदाद्या अष्टादशविद्यास्तवैवांशभेदा भवन्ति। जगत्सु चतुःषष्टिकलायुक्ताः पतिव्रताः सौन्दर्यतारुण्यादिगुणान्विताः स्त्रियः सर्वा एव तवांशभूताः। त्वयैकाकिन्या जननीरूपया हि जगदन्तरं बहिश्च सर्वत्र परिव्याप्तमासीत्। अतएव स्तव्यपरा त्वं स्तवयोग्येति बोधयित्री अपरा का स्तुतिर्भवेत्। अत्र श्लोके अष्टादशविद्यानामुल्लेखोऽस्ति, स चाधस्तात् स्पष्टीक्रियते।

### अष्टादश-विद्यानिरुक्तिः

**चतुर्धूरी** टीकायामुक्तम्—

अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः।
धर्मशास्त्रं पुराणानि विद्याह्येताश्चतुर्दश॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः।
अर्थशास्त्रं चतुर्थञ्च विद्या ह्यष्टादशैव ताः॥

अङ्गानि षट्—शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषञ्चेति। चतुर्वेदा—ऋग्यजुःसामाथर्वाणः। स्मृतिशास्त्राणि, मीमांसा, न्यायः, पुराणानि, आयुर्वेदो, धनुर्वेदो, गन्धर्ववेदोऽर्थशास्त्राणि चेत्येतद् अष्टादशविद्यारूपेणैव महामाया विराजते। श्लोकोक्त-चतुःषष्टिकलाः शैवतन्त्रे **वंशोद्धार**टीकायामुक्ताः।

### चतुःषष्टिकलारहस्यम्

गीतं (१), वाद्यं (२), नृत्यम् (३), आलेख्यं (४), तण्डुलकुसुमबलिविकाराः (५), नाटयम् (६), पुष्पास्तरणम् (७), दशनवसनाङ्गरागाः (८), मणिभूमिकाकर्म (९), शयनरचना (१०), उदकवाद्यम् (११), चित्रयोगः (१२), चित्रमाल्यग्रथनविकल्पः (१३), शेखरापीड़योजना (१४), नेपथ्ययोगः (१५), (केशरचनाकौशलम्) कर्णपत्रभङ्गिः (१६), सुगन्धयुक्तिः (१७), भूषणयोजना (१८), ऐन्द्रजालः (१९), क्रौञ्चमारयोगः (सज्जा विद्या) (२०), हस्तलाघवम् (२१), चित्रशाकापूपभक्ष्यविकारक्रिया (२२), पानकरसरागासवयोजना (२३), सूचीवयनकर्म (२४), सूत्रक्रिया (२५), डमरुवीणावाद्यादि (२६), प्रहेलिका (२७), प्रतिमाला (२८), दुर्वञ्चकयोगः (२९), पुस्तकवचनम् (३०), नाटकाख्यायिकादर्शनम् (३१), काव्यसमस्यापूरणम् (३२), पट्टिकावेत्रवाणविकल्पः (३३), तर्कुकर्म, तक्षणम् (३४, ३५), वास्तुविद्या (३६), रूप्यरत्नपरीक्षा (३७), धातुविद्या (शुक्रनीतिमतेन यन्त्रशिल्पम् ३८), मणिरागज्ञानम् (३९), आकरज्ञानम् (४०), वृक्षायुर्वेदयोगः (४१), मेषकुक्कुट-

लावकयुद्धविधिः (४२), शुकशारिकाप्रलापनम् (४३), उत्सादनम् (४४), केशमार्जनकौशलम् (४५), अक्षरमुष्टिका कथनम् (४६), अंगुल्याक्षररचना, श्लोकतर्कविकल्पः (४७), देशभाषाज्ञानम् (४८), पुष्पशकटिका (४९), निमित्तज्ञानम् (५०), यन्त्रमातृका (५१), धारणमातृका (५२), संवाच्यम् (५३), मानसीकाव्यक्रिया (५४), अभिधान विद्या (५५), छन्दोज्ञानम् (५६), क्रियाविकल्पः (५७), चलितकयोगः (५८), वस्त्रगोपनादिः (५९), द्यूतविशेषः (६०), आकर्षणक्रियाः (६१), बालक्रीड़नकादिः (६२), विशेषक-छेद्यक-तिलकादिरचना (६३), वैयासिकी-वैनायकीविद्यानां ज्ञानञ्चेति (६४), चतुः षष्टिकलाविद्यारूपेणैव महामाया जगत्सु सर्वत्र विराजते।

शुम्भं प्रति देवीवाक्यम्—

एकैवाहं जगत्यत्र द्वितीया का ममापरा।
पश्यैता दुष्ट मय्येव विशन्त्यो मद्विभूतयः॥

जगत्यत्राहमेव "एका" विराजिता। मम द्वितीया सहायभूता अपरा का? रे दुष्ट! एता ब्रह्माणीप्रमुखा मद्विभूतयो मत्शक्तयो मय्येव विशन्ति, इति पश्य।



**शान्तनवी टीकायाञ्च,—**

जगतो नाहमन्या स्यां, स्यान्मदन्यज्जगच्च न।
जगतो मम चाप्यैक्याद् व्यक्तिरन्या ततोऽस्ति का?
अहञ्च जगति चैका जगच्च मन्मयं मतम्।
दुग्धवद्दधि चाप्यैक्यं दधि दुग्धमयं यतः॥

नाहं जगतः पृथक्, जगच्च मद्व्यतिरिक्तं न। जगदहञ्च इत्युभयोः शक्तितोऽभिन्नत्वान्मदतिरिक्ता द्वितीया कापि न विद्यते। दुग्धं यथा दधिरूपेण परिणतं, दधि दुग्धमयं स्यात्तथैकाहं जगन्मयी, जगदपि मन्मयं ज्ञेयम्।

**ब्रह्मवैवर्तपुराणे**, गणेशखण्डे, सप्तमाध्याये स्वयं नारायणेनोक्तम्—

सृष्टिकर्त्री च प्रकृतिः सर्वेषां जननी परा।
मम तुल्या च मन्माया तेन नारायणी स्मृता॥

या सृष्टिकारिणी परा प्रकृतिः, सर्वेषां जननी सा मन्मायाशक्तिः, मदीय-शक्तिशालिनी महाशक्तिर्देवी, सैव नारायणी स्मृता।

**देवीभागवते** ब्रह्मकृतमहाकालीस्तवे उक्तम्––

त्वं शक्तिरेव जगतामखिलप्रभावा।
त्वन्निर्मितञ्च सकलं खलु भावमात्रम्॥
त्वं क्रीड़से निजविनिर्मितमोहजाले।
नाट्ये यथा विहरते स्वकृते नटो वै॥(१।७।४२)

तथाहि,––हे मातः त्वमेव निखिलजगतोऽखिलप्रभावशालिनी शक्तिः। ईह जगति परिदृश्यमाने, उत्पद्यमानानि वस्तुमात्राण्येव त्वत्त उत्पन्नानि। एकोऽपि नटो यथा रङ्गालये नानारूपेणैवाभिनयं करोति, तद्वत्त्वमेकापि निजविरचित-मोहजालमये संसाररङ्गालये सततं विविधरूपधारिणी सती क्रीड़सि। इति।

## महाभारते शक्तिरहस्यम्

महाभारतस्य भीष्मपर्वणि, त्रयोविंशेऽध्याये श्रीकृष्णोऽर्जुनाय, कुरुक्षेत्र-युद्धे जयलाभार्थं दुर्गादेव्या उपासनाकरणार्थमादिदेश। तत्रार्ज्जुनकृतदुर्गा-स्तोत्रमस्ति। पञ्चपाण्डवा विराटनगरे महर्षिणामुपदेशानुसारेणाज्ञातवास-साफल्यार्थं दुर्गादेवीमाराधयामासुः। जनमेजयं प्रति वैशम्पायनेन महाभारतस्य विराटपर्वणि षष्ठाध्याये तदुक्तम्––

विराटनगरं रम्यं गच्छमानो युधिष्ठिरः
अस्तुवन्मनसा देवीं दुर्गां त्रिभुवनेश्वरीम्॥१॥
नृणाञ्च बन्धनं मोहं पुत्रनाशं धनक्षयम्।
व्याधिं मृत्युं भयं चैव पूजिता नाशयिष्यसि॥२३॥
सोऽहं राज्यात्परिभ्रष्टः शरणं त्वां प्रपन्नवान्।
प्रणतश्च यथा मूर्ध्ना तव देवि सुरेश्वरि॥२४॥

युधिष्ठिरस्त्रिभुवनेश्वरींदुर्गां मनसाऽस्तौत्, हे देवि! त्वं पूजिता चेन्मनुष्याणां बन्धनं, मोहं, धनपुत्रनाशं, व्याधिं मृत्युभयञ्च नाशयिष्यसि, हे सुरेश्वरि! सोऽहं राज्यभ्रष्टः प्रणतशिरसा त्वां प्रपन्नोऽस्मि।

त्राहि मां पद्मपत्राक्षि सत्ये सत्या भवस्व नः।
शरणं भव मे दुर्गे शरण्ये भक्तवत्सले॥२५॥
एवं स्तुता हि सा देवी दर्शयामास पाण्डवान्।
उपगम्य तु राजानमेवं वचनमब्रवीत्॥२६॥

हे पद्मपलाशाक्षि! हे सत्ये! त्वमस्माकं सत्या भव। हे दुर्गे! हे शरण्ये! हे भक्तवत्सले! त्वमस्माकं शरण्या भव। इत्येवं पाण्डवानां कातरप्रार्थनया साऽऽविर्भूय युधिष्ठिरमुपगम्येदं वचनमब्रवीत्––

देव्युवाच––

शृणु राजन् महाबाहो मदीयं वचनं शुभम्।
भविष्यत्यचिरादेव संग्रामे विजयस्तव ॥२७॥
मम प्रसादान्निर्जित्य हत्वा कौवर-वाहिनीम्।
राज्यं निष्कण्टकं कृत्वा भोक्ष्यसे मेदिनीं पुनः ॥२८॥
भ्रातृभिः सहितो राजन् प्रीतिं प्राप्स्यसि पुष्कलाम्।
मत्प्रसादाच्च ते सौख्यमारोग्यञ्च भविष्यति ॥२९॥

हे राजन्! हे महाबाहो! मदीयः शुभाशीर्वादः श्रूयताम्––त्वमचिरादेव कुरुक्षेत्रयुद्धे विजयी भविष्यसि। अपिच, कौरववाहिनीं हत्वा पुनर्निष्कण्टकं राज्यभोगं करिष्यसि। हे राजन्। भ्रातृभिः सह त्वं परमप्रीतिं च लप्स्यसे। एवं मत्प्रसादात्तव सौख्यमारोग्यञ्च भविष्यतीति। अपि च महाभारते देव्याः कुमारी काली कपालिनी चण्डी कान्तारवासिनीत्यादिनामानि च वर्तन्ते।

महाभारतस्य नानास्थानेषु महिषासुरनाशिनी-विन्ध्यवासिनी-मद्यमांस-बलिप्रियाप्रभृतीनि च देव्या नामानि परिदृश्यन्ते। विन्ध्याचले देव्या महा-पीठोपरि विन्ध्यवासिनीदेव्या मन्दिरमद्यापि महाप्रभावान्वितं विराजते। अतएव महाभारतेऽपि शक्तेः प्राधान्यं स्वीकृतम्।

### श्रीमद्भागवते शक्तिवाद-निरुक्तिः

श्रीमद्भागवते योगमाया-विष्णुमायाप्रभृतिनामोल्लेखा बहुधा वर्तन्ते। महामाया दुर्गादेवी कात्यायनाश्रमे आविर्भूतत्वेन कात्यायनीति गीयते। सा देवी कात्यायनी व्रजाधिष्ठात्री च कथ्यते। व्रजाङ्गनास्तां मनोमतपतिलाभाय पूजयामासुः। एवं व्रजकुमारीगणा अपि कात्यायनीव्रतं कृत्वा तां प्रार्थितवत्यः। तदुक्तं **भागवतस्य**––दशमस्कन्धे द्वाविंशाध्याये,––

हेमन्ते प्रथमे मासि नन्दव्रजकुमारिकाः।
चेरुर्हविष्यं भुञ्जानाः कात्यायन्यर्च्चनव्रतम् ॥१॥
आप्लुत्याम्भसि कालिन्द्या जलान्ते चोदितेऽरुणे।
कृत्वा प्रतिकृतिं देवीमानर्चुर्नृप सैकतीम् ॥२॥
गन्धमाल्यैः सुरभिभिर्बलिभिर्धूपदीपकैः।
उच्चावचैश्चोपहारैः प्रबाल-फल-तण्डुलैः ॥३॥

हेमन्ते मार्गशीर्षे मासि, नन्दव्रजकुमारिका हविष्यान्नं भुञ्जानाः कात्यायनीव्रतार्च्चनामकुर्वन्त। हे राजन्! व्रतपरायणा व्रजकुमारिका ब्राह्मे मुहूर्ते कालिन्दीजले स्नात्वा जलान्तिके बालुकामयीं कात्यायनीमूर्ति निर्माय गन्धपुष्पमाल्यधूपदीपनैवेद्यादिभिश्च पूजयामासुः।

कात्यायनि महामाये महायोगिन्यधीश्वरि।
नन्दगोपसुतं देवि पतिं मे कुरु ते नमः ॥४॥
एवं मासं व्रतं चेरुः कुमार्यः कृष्णचेतसः।
भद्रकालीं समानर्चुर्भूयान्नन्दसुतः पतिः ॥५॥

हे कात्यायनि! महामाये! महायोगिनि! हे अधीश्वरि! देवि! त्वं नन्दगोपसुतं मे पतिं कुरु, तुभ्यं नमः इति मन्त्रं प्रजपन्त्यः श्रीकृष्णे समाहितचित्ताः कुमारिका मासं व्याप्य व्रतानुष्ठानेन कात्यायनीं पूजयामासुः। अतएव श्रीमद्भागवतेऽपि शक्तेः प्राधान्यं स्वीकृतम्।

### भक्तवत्सला-नाम-निरुक्तिः



तदुक्तं **मार्कण्डेयपुराणे**, प्रसङ्गादत्रोच्यते,—पुराकाले पुत्रकामा रम्भासुरी दुःसाध्यतपसा आशुतोषं शिवं सन्तोष्य शिववरात्त्रिलोकविजयि-शिव-तुल्यं पुत्रं महिषासुरम् अवाप। ततोऽसौ महिषासुरो युद्धे सर्वान् देवान् पराजित्य स्वर्लोके इन्द्रोऽभूत्। ततः पराभूता देवाः प्रजापतिं ब्रह्माणमग्रे कृत्वा हिमालये महर्षेः कात्यायनस्याश्रमे यत्र ईश-गरुड़ध्वजावास्तां, तत्र गत्वा महिषासुरचेष्टितं यथावृत्तं सविस्तरं कथयामासुः। ततो देवानामीदृशानि वचांसि निशम्य मधुसूदनः शम्भुश्च भ्रुकुटी-कुटिलाननौ सन्तौ कोपं चक्रतुः। ततोऽतिकोपाच्चक्रिणो ब्रह्मणः शङ्करस्य च वदनेभ्यो महत्तेजो निश्चक्राम। ततोऽन्येषां शक्रादिदेवानामपि शरीरेभ्यो निर्गतं महत्तेजः, तच्च सर्वं महत्तेज ऐक्यं समगच्छत। तत्तेजःपुञ्जादमितविक्रमाऽमितप्रभा त्रिगुणा साक्षान्महिषमर्दिनी महालक्ष्मीराविर्भूता। तदुक्तं **प्राधानिकरहस्ये**—

सर्वदेवशरीरेभ्यो याऽऽविर्भूताऽमितप्रभा।
त्रिगुणा सा महालक्ष्मीः साक्षान्महिषमर्दिनी ॥

ततस्तया सह महिषासुरस्य घोरतरं समरमभूत्। तस्मिन् युद्धे ससैन्यो महिषासुरः पराजितोऽभूत्। ततः खड्गच्छिन्नमहिषशीर्षादर्धनिष्क्रान्तं महिषासुरं

देवी नागपाशेन बद्ध्वा स्वपदतले वामपादांगुष्ठेन निपीड़ितवती। तेन च तस्य दिव्यज्ञानमभवत्। स तदा चिरकालं तद्रूपेणैव देवीं भोगो मोक्षःश्चेति वरद्वयमयाचत। तदुक्तं **कालिकापुराणे** (६० तमाध्याये)—

यज्ञभागमहं भोक्तुमिच्छामि त्वत्प्रसादतः।
यथा मखेषु सर्वेषु पूज्योऽहं स्यां तथा कुरु॥
त्वत्पादमेवं न त्यक्ष्ये यावत्सूर्यः प्रवर्तते।
एवं वरद्वयं देहि यदि देयो वरो मम॥

महिषासुरो भगवतीमवदत्,—हे देवि! त्वदनुकम्पयाऽहं यज्ञभागभोगमिच्छामि। अतएव निखिलयज्ञेषु यथा पूज्योऽहं स्यां, तद्विधीयताम्। किन्तु सवितरि विद्यमाने नाहं त्वत्पादपद्मं त्यक्ष्ये। यदि वाऽपि वरो देयस्तया मह्यं महेश्वरि। भोगमोक्ष-वरद्वयं देहि मे परमेश्वरि॥

**विष्णुपुराणे** देव्युवाच—

यज्ञभागाः सुरेभ्यस्तु कल्पिता वै पृथक् पृथक्।
भोगो न विद्यते चान्यो यं दास्यामि तवाधुना॥
किन्तु त्वयि मया युद्धे निहते महिषासुर।
नैव त्यक्ष्यसि मत्पादं सततं नात्र संशयः॥
मम प्रवर्तते पूजा यत्र यत्र च तत्र ते।
पूज्यश्चिन्त्यश्च तत्रैव कायो यत्तव दानव॥



देवी महिषासुर-प्रार्थनां श्रुत्वा कृपया "भक्तवत्सला" महिषासुरं सम्बोध्याह, 'हे महिषासुर! पुरा देवेभ्यो यज्ञभागं प्रत्येकं पृथक् पृथक् प्रदत्तम्। साम्प्रतं न चान्यो विद्यते यज्ञभागो यत्तुभ्यं दद्याम्। किन्तु मया त्वयि युद्धे निहतेऽपि त्वं मत्पादं सततं न त्यक्ष्यसीति मे नात्र सन्देहः। हे दानव! यत्र यत्र मे पूजा भविष्यति, तत्र तत्रैव तवैतच्छरीरस्यापि पूजा भविष्यतीति। तदुक्तं **सप्तसतीमन्त्रस्य** शक्रादिस्तुतौ,—

देवा ऊचुः—

केनोपमा भवतु तेऽस्य पराक्रमस्य,
रूपञ्च शत्रुभयकार्यतिहारि कुत्र।
चित्ते कृपा समनिष्ठुरता च दृष्टा।
त्वय्येव देवि वरदे भुवनत्रयेऽपि॥२२॥

हे देवि! तवैतत्पराक्रमस्य तुलना न केनापि सह भवितुमर्हति। परन्तु तव शत्रुभीति-जनकमपि रूपमतीव मनोहरम्। तदपि न कुत्रापि सम्भवति। हे वरदे! तव हृदि मुक्तिप्रदा कृपा, समरे मृत्युप्रदा निष्ठुरता, केवलं त्रिभुवने विरुद्धधर्मद्वयमेकाधारे त्वय्येव दृश्यते। अत एवोक्तम्—

यत्रास्ति भोगो न च तत्र मोक्षः,
यत्रास्ति मोक्षो न च तत्र भोगः।
शिवा-पदाम्भोजयुगार्चकानां,
भोगश्च मोक्षश्च करस्थ एव।।इति।।

## बौद्धधर्मे शक्तिवाद-रहस्यम्

बौद्धधर्मे पञ्चध्यानि-बुद्धानां शक्ति-नामानि लोचना-यामकी-पाण्डवा-वज्र-धात्रीश्चेति च कथ्यन्ते। हिन्दुतन्त्रे यथा वामाचारो दक्षिणाचारश्चेति भाग-द्वयमस्ति, तद्वद् बौद्धतन्त्रेऽपि क्रियातन्त्र-योगतन्त्र-चर्यातन्त्रेति भागत्रयं विद्यते। बौद्धतन्त्रमतेन चतुरशीतिसंख्यक-सिद्धपुरुषनामानि परिदृश्यन्ते। कल्पतन्त्र-समाजतन्त्रनामकं तन्त्रद्वयमतिप्राचीनतमं बौद्धतन्त्रम्। हिन्दुतन्त्रे यथा आगमं यामलञ्चेति भेदेन भागद्वयमस्ति, तथा बौद्धतन्त्रेऽपि वज्रयानं सहजयानं कालचक्रयानञ्चेति भागत्रयं विद्यते। "साधनमाला" नामकबौद्धतन्त्रे महा-सरस्वती, वज्रवीणा सरस्वती, वज्रसारदा, आर्यसरस्वती च तत्रैवोक्त-ध्यानाविशेषयोगेनाराध्यन्ते। बौद्धधर्मस्य मरीचिदेवी दशभुजा; मूर्तिभेदेन द्विभुजा, चतुर्भुजा, द्वादशभुजा चेति। तिव्वतीयलामादयो मरीचिदेवीम् "उषा" देवीरूपेणाराधयामासुः। तेषां तारादेव्याः पूजाविशेषो वैशिष्टचपूर्णो दृश्यते। एवं बौद्धधर्मेऽपि शक्तेः प्राधान्यम् अस्तीति परिलक्ष्यते।

## जैनधर्मे शक्तिवाद-रहस्यम्

जैन-श्रमणेषु शक्तिपूजायाः शाक्त-तन्त्राणामपि च प्रधानं स्थानं विद्योतते। यद्यपि तत्र बाह्याचार-कुलाचार-समयाचारसदृशानां मध्ये केषा-मप्याचाराणां परम्परा न प्रतीयते, तथापि प्रणव-मायाबीज-कामनाबीजाना-मुपासनाभिः सह वर्णमय्या देवतायास्तीर्थङ्कराणां शासनदेवतानां चक्रेश्वर्यजिता-दुरितारि-कालिका-वैरोटचाप्रभृतीनां सरस्वत्याश्च, षोड़शविद्याव्यूहरूपेण रोहिणीप्रज्ञाप्तिशृङ्खलादिदेवीनामुपासना सुप्रचलिता विद्यते। अथच सनातन-धर्मावलम्बिषु श्रीविद्योपासना, बौद्धेषु च तारादेव्युपासना यथा विशिष्ट-महिमानं धारयतस्तथैव जैनेषु शाक्तसम्प्रदायानुकूल्येनैव श्रीपद्मावतीदेव्या

उपासनाऽतीव वृद्धिमती दृश्यते। पद्मावत्या अनेके प्रयोगा यत्र तत्र तन्त्रग्रन्थेषु वयं विलोकयामः। तथाहि रक्तपद्मावती, शैवागमोक्तपद्मावती, हंसपद्मावती, सरस्वती पद्मावती, सवरी पद्मावती, कामेश्वरी पद्मावती, भैरवी पद्मावती, त्रिपुरा पद्मावती, नित्या पद्मावती, महामोहिनी पद्मावती, पुत्रकर-पद्मावती, कज्जलावतार-पद्मावती, घटावतारपद्मावती, दीपावतारपद्मावतीति च कर्मणां सिद्धयेऽपि तत्तन्नामसंयोजनपुरःसरं पद्मावत्या मन्त्राणामुपलब्धिः सुगमैव। जैनधर्मानुयायिनः शक्तिपूजायां पूर्णतया विश्वासभाजो विलोक्यन्ते। अन्तः-शाक्ता बहिःशैवा इत्यस्य स्थाने "अन्तःशाक्ता बहिर्जैना" इत्येवमुक्तिश्च चरितार्थतया संगच्छते। इदमत्र परं वैशिष्टयं यदत्र जैनसम्प्रदायस्याहिंसाप्रधान-त्वात् कोऽपि वामाचार-वज्रयानसदृशः पन्थाः पृथङ् न प्रचलितः। सेयं शक्त्युपासना जैनेषु विशुद्धेन स्वरूपेणात्मयोगमार्गं पोषयन्ती शक्तियुक्तात्म-भावानां विधानं पुरस्करोति। आचार्यः श्रीहेमचन्द्रः स्वकीये योगशास्त्रे सप्तमाष्टमप्रकाशयोर्धर्मध्यानप्रसङ्गे "पदस्थ"नामके ध्याने षट्चक्रवेधपद्ध-त्यनुसारं वर्णमय्या देवतायाश्चिन्तनं स्मारयति। तदुक्तम्,—

क्षीराम्भोधेर्विनिर्यान्तीं प्लावयन्तीं सुधाम्बुभिः।
भाले शशिकलां ध्यायेत् सिद्धिसोपानपद्धतिम्।। इति।



अतो जैनधर्मेऽपि च शक्तेः प्राधान्यं स्वीकृतम्।

## आगमे शक्तिवादनिरुक्तिः

**मुण्डमालातन्त्रे—**

विना तन्त्राद्विना मन्त्राद्विना यन्त्रान्महेश्वरि।
न च भुक्तिश्च मुक्तिश्च जायते वरवर्णिनि।।
शक्तिमार्गं परित्यज्य योऽन्यमार्गे प्रधावति।
करस्थं स मणिं त्यक्त्वा भूतिभारं प्रधावति।।
नानातन्त्रमतं देवि नाना यन्त्रं प्रकाशितम्।
ब्रह्मस्वरूपं विज्ञातुं कः समर्थो महीतले।।
नानामार्गे प्रधावन्ति पशवो हतबुद्धयः।
श्रीदुर्गा-चरणाम्भोजं हित्वा यान्ति रसातलम्।।
सत्यं वच्मि हितं वच्मि पथ्यं वच्मि पुनः पुनः।
न च भुक्तिश्च मुक्तिश्च विना दुर्गानिषेवनात्।।

**मत्स्यसूक्तन्त्रे,—**

विष्णुर्वरिष्ठो देवानां ह्रदानामुदधिर्यथा।
नदीनाञ्च यथा गङ्गा पर्वतानां हिमालयः॥
अश्वत्थः सर्ववृक्षाणां राज्ञामिन्द्रो यथा वरः।
देवीनाञ्च यथा दुर्गा वर्णानां ब्राह्मणा यथा॥
तथा समस्तशास्त्राणां तन्त्रशास्त्रमनुपमम्॥

**कुब्जिकातन्त्रे,—**

श्रुतिस्मृतिविधानेन पूजा कार्या युगत्रये।
आगमोक्तविधानेन कलौ देवान् यजेत् सुधीः॥
नहि देवाः प्रसीदन्ति कलौ चान्यविधानतः॥




**पुरश्चरणोल्लासतन्त्रे—**

तन्त्रोक्तं ध्यानमन्त्रञ्च प्रशस्तं भारते कलौ।
वेदोक्तञ्चैव स्मृत्युक्तं पुराणोक्तं वराणने।
न शस्तं चपलापाङ्गि कदाचिद् भारते कलौ॥

**महानिर्वाणतन्त्रे—**

विना ह्यागममार्गेण कलौ नास्ति गतिः प्रिये।
श्रुतिस्मृतिपुराणादौ मयैवोक्तं पुरा शिवे॥
कलावागममुल्लङ्घ्य योऽन्यमार्गे प्रवर्तते।
न तस्य गतिरस्तीति सत्यं सत्यं न संशयः॥
कलौ तन्त्रोदिता मन्त्राः सिद्धास्तूर्णफलप्रदाः।
शस्ताः कर्मसु सर्वेषु जपयज्ञक्रियादिषु॥
निर्वीर्याः श्रौतजातीया विषहीनोरगा इव।
सत्यादौ सफला आसन् कलौ ते मृतका इव॥
नान्यः पन्था मुक्तिहेतुरिहामुत्र सुखाप्तये।
यथा तन्त्रोदितो मार्गो मोक्षाय च सुखाय च॥

शक्तेरेव योगमायारूपाया महत्त्वं **देवीभागवतेऽपि** परिकीर्तितं यथा—

किं ब्रवीमि महाराज योगमायाबलं महत्।
यया विश्वमिदं सर्वं भ्रामितं भ्रमते किल॥
एवं नानावतारेऽत्र विष्णुः शापवशं गतः।
करोति विविधाश्चेष्टा देव्यधीनः सदैव हि॥
इति चतुर्थस्कन्धे।

जानीहि त्वं महाराज योगमायावशे जगत्।
ब्रह्मादिस्तम्बपर्यन्तं देवमानुषतिर्यगम्॥
मायातन्त्रीनिबद्धा ये ब्रह्माविष्णुहरादयः।
भ्रमान्ति बन्धमायान्ति लीलया चोर्णनाभवत्॥
इति च पञ्चमस्कन्धे॥

अतएव सर्वधर्मेषु वेदादिशास्त्रसमूहैर्देवमुनिमहर्षिभिश्च प्रोक्तं यत्—

शक्तिः करोति ब्रह्माण्डं सा वै पालयतेऽखिलम्।
इच्छया संहरत्येषा जगदेतच्चराचरम्॥
एवं सर्वगता शक्तिः सा "ब्रह्मे" ति विविच्यते।
सोपास्या विविधैः सम्यग् विचार्य सुधिया सदा॥

इत्यादिशास्त्रयुक्तिभिः शक्तिर्ब्रह्मेति मूलतत्त्वम्।

## शाक्त-दर्शनव्युत्पत्तिः

दर्शनार्थक-दृश्धातोरनट्, दृश्यते तदेतदिति दृश् अनट् दर्शनम्। अर्थात्, तद् ब्रह्म एतद् विश्वम् अनेन,—ज्ञानचक्षुषा, त्रिकालदर्शिभिः, आत्मज्ञै ऋषिभिर्मुनिभिर्दृश्यते, इति दर्शनम्। तथाच—त्रिकालदर्शिभिरात्मज्ञै-रात्मनिष्ठशक्तिमद्भिर्मुनिभिर्महर्षिभिर्भाषितं विश्वब्रह्मनिरूपकं शास्त्रं दर्शन"-मिति सिद्धम्। शक्तेरिदमिति शक्ति अण् (इति तद्धितप्रत्यये) शाक्तम्, शक्तिसम्बन्धि, इत्यर्थः। ततः शाक्तं दर्शनमिति कर्मधारये "शाक्त-दर्शन" मिति निष्पन्नम्। शक्ति-सम्बन्धि दर्शनमित्यर्थः। तदुक्तं **विष्णुपुराणे**,

शिव उवाच,—

प्रथमं हि मयैवोक्तं शैवं पाशुपतादिकम्।
मच्छक्त्यावेशितैर्विप्रैः संप्रोक्तानि ततः परम्॥

कणादेन तु संप्रोक्तं शास्त्रं वैशेषिकं महत् ।
गौतमेन तथा न्यायं सांख्यं तु कपिलेन वै ।।
द्विजन्मना जैमिनिना पूर्वं वेदमयार्थतः ।
निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम् ।।
धीषणेन तथा प्रोक्तं चार्वाकमतिगर्हितम् ।
दैत्यानां नाशनार्थेन विष्णुना बुद्धरूपिणा ।।
बौद्धशास्त्रमसत्प्रोक्तं नग्ननीलपटादिकम् ।
मायावादमेतच्छास्त्रं प्रच्छन्नं बौद्धमेव च ।।
मयैव कथितं देवि कलौ ब्राह्मणरूपिणा ।।

तथाहि,—भगवतीं प्रति शिवोक्तिरियम् । हे देवि ! आदौ मया शैवशाक्त-शास्त्राणि तन्त्रादीनि प्रोक्तानि । ततश्च मच्छक्त्या शक्तिमद्भिर्विप्रैर्बहुशः शास्त्राणि प्रोक्तानि । तथाहि कणादमुनिना वैशेषिकदर्शनरूपं महत् शास्त्रं प्रणीतम् । गौतममुनिना न्यायदर्शनं, कपिलमुनिना सांख्यदर्शनं, जैमिनिना वेदार्थमयं पूर्णं पूर्वमीमांसादर्शनञ्च प्रोक्तम् । नास्तिकवादिना धीषणमुनिना महद् गर्हितं च शास्त्रं चार्वाकदर्शनं प्रोक्तम् । दैत्यदलनकारिणो विष्णोरवतारेण बुद्धदेवेन नास्तिकं शून्यमयं बौद्धदर्शनं प्रोक्तम् ।

मया च बौद्धमतं प्रच्छन्नं कृत्वा कलौ प्रसिद्धे मायावादे देवमुनिमहर्षीणां प्रसिद्धं मतं संगृह्य विश्वब्रह्मनिरूपकं "शाक्त-दर्शनं" सङ्कलितमिति ।

इति कामरूपान्तर्वर्ति-श्रीमदुग्रतारामहापीठाध्यक्ष-श्रीचक्रेश्वरभट्टाचार्य-सङ्कलिते शाक्तदर्शने ब्रह्मनिरूपको नाम प्रथमः परिच्छेदः ।

---

# द्वितीयः परिच्छेदः

### प्रधानशक्ति-निरुक्तिः

पुरा मेधा ऋषिः वैश्यराजन्ययोः समाधि-सुरथयोरग्रे मार्कण्डेयपुराणान्तर्गत-देवीमाहात्म्यापरनामधेय-चण्डीतत्त्वकथा-वर्णनप्रसङ्गेन तयोः प्रश्नानामुत्तरदानक्रमेण देव्याः प्राधानिक-वैकृतिक-मूर्तिसम्बन्धि-रहस्यत्रयघटितां ब्रह्माण्ड-सृष्टिमकथयत्। तत्र—

### प्राधानिकरहस्ये

राजोवाच,—भगवन्नवतारा मे चण्डिकायास्त्वयोदिताः
एतेषां प्रकृतिं ब्रह्मन् प्रधानं वक्तुमर्हसि ॥१॥

राजा सुरथ उवाच, हे भगवन्! त्वयावयोश्चण्डिकाया दशावताराः कथिताः। हे ब्रह्मन्! एतेषां देव्यवताराणां प्रकृतिं मूलकारणं, प्रधानं प्रधानशक्ते रहस्यं कथय।

"प्राधानिकरहस्यम्"—प्रधानं मूलं समष्टिशक्तिर्वा प्रकृतिर्महालक्ष्मीः समस्तजगत्प्रपञ्चानां देव्यवताराणाञ्च मूलं कारणम्। महालक्ष्मीस्तुरीयेति चण्डिकाया नामान्तरे। श्रीसूक्ते, सौभाग्यलक्ष्म्युपनिषदि, लक्ष्मीतन्त्रे च मुलप्रकृतेर्महालक्ष्मीत्वं साधनपद्धतिसहकृतं विस्तरेण वर्णितम्। चण्डिकाया अवतारा महाकाल्यादि-भ्रामर्यन्ता दशावताराः। यथा,—महाकाली (१), महालक्ष्मीः (२), महासरस्वती (३), नन्दा (४), रक्तदन्तिका (५), शताक्षी (६), शाकम्भरी (७), दुर्गा (८), भीमा (९), भ्रामरी (१०) ति।

आराध्यं यन्मया देव्याः स्वरूपं येन वै द्विज।
विधिना ब्रूहि सकलं यथावत् प्रणतस्य मे ॥२॥

हे द्विज! महालक्ष्मीदेव्याःस्वरूपं, येन च विधिनास्माभिराराधना कर्तव्या, तत्सर्वं यथावत् प्रणतस्य मे, विनीताय जिज्ञासवे शिष्याय समुख्यरूपं सेतिकर्तव्यताकं च कथय।

प्रणिपात-परिप्रश्न-सेवाभिः परितुष्टस्तत्त्वज्ञानी गुरुरधिकारिणे शिष्याय ज्ञानमुपदिशति। **भागवद्गीतायामुक्तम्**--

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः॥(४।३४) इति।

ऋषिरुवाच,--

इदं रहस्यं परममनाख्येयं प्रचक्ष्यते।
भक्तोऽसीति न मे किञ्चित्तवावाच्यं नराधिप॥३॥

मेधा ऋषिरुवाच, हे राजन्! इदं परमं रहस्यमति सुगोप्यमप्रकाश्यं ब्रह्मविद्येति कथ्यते। परन्तु त्वं भक्तोऽसि,--देवीभक्तो गुरुभक्तश्चेति तव समीपे ममावाच्यं किमपि नास्तीति। उक्तञ्च **श्वेताश्वतरोपनिषदि**,--

यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥(२।२३)

यस्य परमेश्वरे गुरौ च परा भक्तिरस्ति तस्य महात्मनः समीपे ब्रह्मविद्या प्रकाशिता चेत्सा सम्यगुपलभ्यते। रहस्यविद्याधिकारिविषये **श्वेताश्वतरोपनिषदि** कथितमस्ति,--

वेदान्ते परमं गुह्यं पुराकल्पे प्रचोदितम्।
नाप्रशान्ताय दातव्यं नापुत्रायाशिष्याय वा पुनः॥(६।२२)

पुराकल्पे प्रकाशिता, वेदान्तप्रतिपादिता रहस्यविद्या प्रमत्तायायोग्याशिष्यायायोग्यपुत्राय च न प्रदातव्येति। ब्रह्मविद्यायां मलिनान्तःकरणाय प्रदत्तायां तस्य तु न कोऽप्युपकारो भवेत्, अपितु गुरोरपि सा विद्याऽन्तर्हिता भवेत्। यास्केनापि तदीये **निरुक्ते** श्रुतिरियं समुपस्थापिता,--

विद्या ह वै ब्राह्मणमाजगाम,
गोपाय मां शेवधिष्टेऽहमस्मि।
असूयकायानृजवेऽयताय,
न मां ब्रूया वीर्यवती तथा स्याम्॥इति॥

ब्राह्मणसमीपे ब्रह्मविद्याह,--त्वं मां सुगोप्यां रक्ष। तथा सत्यहं तव समीपे परमनिधित्वेन तिष्ठामि। असूयापरवशाय कुटिलायासंयतेन्द्रियाय च पुरुषाय

कदापि मां मा दाः। तथा तर्हि तेभ्यः पुरुषेभ्योऽदत्ता सती वीर्यवती प्रकृष्ट-बलशालिन्यहं तव समीपे स्थास्यामि। ब्रह्मविद्यादान-निषेधमाह,—

निन्दा गुणवतां तद्वत् सर्वदार्जवशून्यता।
इन्द्रियाधीनता नित्यं स्त्रीसङ्गश्चाविनीतता।।
कर्मणा मनसा वाचा गुरौ भक्तिविवर्जनम्।
एवमाद्या येषु दोषास्तेभ्यो वर्जय मां सदा।।

ज्ञानिनां निन्दा, सर्वदा कुटिलता, इन्द्रियाधीनता, स्त्रीसङ्गः, दुर्विनीतता, कायमनोवाक्यैर्गुरौ भक्तिहीनता चैवमादिदोषदुष्टाय जनाय ब्रह्मविद्या न देया। ब्रह्मविद्याऽऽह—

एवं हि कुर्वतो नित्यं कामधेनुरिवास्मि ते।
बन्ध्याऽन्यथा भविष्यामि लतेव फलवर्जिता।।

त्वयैवं मयि सद्व्यवहारे कृते तवाहं कामधेनुरिव स्थास्यामि। अर्थात् त्वं मत्तो यदेव कामयसे, तदेव प्राप्स्यसि। अन्यथा फलवर्जिता लतेव त्वां प्रति बन्ध्या भविष्यामि।



सर्वस्याद्या महालक्ष्मीस्त्रिगुणा परमेश्वरी।
लक्ष्यालक्ष्यस्वरूपा सा व्याप्य कृत्स्नं व्यवस्थिता।।

त्रिगुणमयी परमेश्वरी महालक्ष्मीः सर्वेषामादिकारणं मूलप्रकृतिः। सा सगुणा च। तयैव सर्वं विश्वं व्याप्तमस्ति। "सर्वस्याद्या" सर्वप्रपञ्चादिकारणम्। "त्रिगुणा" सात्त्विक-राजसिक-तामसिक-मूर्तित्रयसमष्टिरेव, अर्थात् महासरस्वती, महालक्ष्मीः, महाकालीति-व्यक्तित्रयसमष्टिस्वरूपिणी। **देव्युपनिषदि** चोक्तम्, "सैषा सत्वरजस्तमांसी" ति, "लक्ष्यालक्ष्यस्वरूपे" ति; लक्ष्या—सगुणा, अलक्ष्या—निर्गुणा (गुप्तवती)। अथर्वशीर्षे,—"यस्या ग्रहणं नोपलभ्यते, तस्मादुच्यतेऽलक्ष्ये" ति। तुरीयस्वरूपा। आद्या प्रकृतिर्महालक्ष्मीर्युगपद् "अलक्ष्या, लक्ष्या, निर्गुणा, सगुणा, निराकारा, साकारा च।" **प्राधानिकरहस्ये** ऊनत्रिंशत्तम-श्लोके उक्तम्—"निराकारा च साकारा सैव नानाभिधानभृत्।" इति। महालक्ष्मीर्निराकाराऽपि साकारा। साकारावस्थायां सा विविधनामानि रूपाणि च धारयति। नागोजीभट्टेनोक्तम्,—"इयं महालक्ष्मीः कूटस्था प्रथममध्यमोत्तर-चरित्रत्रयदेवतासमष्टिरूपा सकल-देवी माहात्म्येषु देवतेति बोध्यम्। एषा शैवी वैष्णवी च।" इति। महालक्ष्मीरेषा

कूटस्था प्रथममध्यमोत्तर-चरित्रत्रयाधिष्ठात्रीदेवतात्रयस्य, महाकालीमहालक्ष्मी-महासरस्वतीरूपस्य समष्टिरूपा। समग्रे देवीमाहात्म्ये वर्णिता 'पराशक्ति'-श्चण्डिकाया नामान्तरमात्रम्। सा शिवशक्तिर्विष्णुशक्तिश्चेति। उक्तञ्च **शिवपुराणे**,—

सदाशिवाङ्कमारूढा शक्तिरित्याह्वया शिवा।
महालक्ष्मीरिति ख्याता सर्वदेवगुणान्विता॥

महालक्ष्मीः सदाशिवाङ्कमारूढा सर्वदेवगुणान्विता शिवाशक्तिः। लक्ष्मी-तन्त्रे च, विष्णुशक्तिरूपया लक्ष्म्या शक्रं प्रति काल्यादीनां स्वावतारभेदत्वो-तन्त्रे च, विष्णुशक्तिरूपया लक्ष्म्या शक्रठ प्रति काल्यादीनां स्वावतारभेदत्वो-क्तेश्च। एतच्च सार्वात्म्ये पर्यवस्यति। मायाविशिष्टं शुद्धं ब्रह्मेदं प्रधानतत्त्व-स्थम्। (नागोजीभट्टः)

मातुलुङ्गं गदां खेटं पानपात्रञ्च बिभ्रती।
नागं लिङ्गञ्च योनिञ्च बिभ्रती नृपमूर्धनि॥५॥
तप्तकाञ्चनवर्णाभा तप्तकाञ्चनभूषणा।
शून्यं तदखिलं स्वेन पूरयामास तेजसा॥६॥



हे राजन्! देवी चतुर्भुजेषु मातुलुङ्गं, गदां, चर्म, पानपात्रञ्च धारयति। मस्तके नागं लिङ्गं योनिञ्च धारयति। महालक्ष्मीर्गलितस्वर्णाभाविशिष्टा, तद्वद्लङ्कारभूषिता स्वतेजसा भूर्भुवः स्वर्लोकं पूरयामास। महालक्ष्म्या आयुध-धारणक्रम उक्तः **स्कन्दपुराणीय**-रेणुकामाहात्म्ये,—

दक्षिणेऽधःकरे पात्रमूर्ध्वे कौमोदकीं तथा।
वामेऽथ खेटकं धत्ते श्रीफलं तदधः करे॥
बिभर्ति मस्तके लिङ्गं पूजनीया विभूतये॥

भगवती महालक्ष्मीर्दक्षिणाधःकरे पानपात्रम् ऊर्ध्वकरे च गदां धारयति। वामोर्ध्वहस्ते ढालं वामाधोहस्ते श्रीफलं धारयति। मस्तके लिङ्गं योनिञ्च धारयति। देव्या आयुधरहस्यं **भुवनेश्वरी**संहितायामुक्तम्,—

मातुलुङ्गं कर्मवृन्दं क्रियाशक्त्यात्मिका गदा।
ज्ञानशक्त्यात्मकं खेटं तुर्यवृत्तिस्तु पानकम्॥
लिङ्गं पुरुष इत्युक्तो योनिस्तु प्रकृतिः स्मृता।
नागः कालः समाख्यातः सम्बन्धस्तु तयोर्द्वयोः॥

त्रयाणमप्यधिष्ठानं यतः स्यात्परमेश्वरी।
नवार्णमन्त्रमध्यस्थमायाबीजस्वरूपिणी ।।

महालक्ष्म्याः करधृतेन, (१) मातुलुङ्गेन देवी सर्वकर्मफलदात्रीति सूच्यते, (२) गदया क्रियास्वरूपा विक्षेपशक्तिःसूच्यते, (३) खेटकेन ज्ञान-शक्तिरुक्ता, (४) पानपात्रेण देव्या निरन्तरं स्वानन्दानुभवरसपानं बोधितम्, (५) लिङ्गं पुरुषः, (६) योनिः प्रकृतिः, (७) नाग-धारणेन प्रकृतिपुरुषयोः सम्बन्धात्मकः कालः सूच्यते। सा च नवार्णमन्त्रमध्यस्थ-मायाबीज (ह्रीं) स्वरुपिणीति।

गुप्तवतीटीकामते 'लिङ्गं' रुद्रस्य पुंचिह्नवाचकम्, "योनि"विष्णोः स्त्री-चिह्न-वाचिका। "विष्णुर्योनिं कल्पयतु" इति श्रुतिः। "नागो" ब्रह्मणश्चिह्न-वाचकः। अतएव नागो लिङ्गं योनिश्चेति चिह्नत्रयेण महालक्ष्मीर्ब्रह्म-विष्णु-रुद्रस्वरूपेति सूचितम्। उक्तञ्च शारदीयपूजायां देव्या ध्याने,—"ॐ त्रयाणा-मपि देवानामनुकारानुकारिणी" मित्यादि। लिङ्ग-योनि-चिह्नाभ्यां पुंस्त्रीस्वरूपा प्रतिपादिता। नागोजीभट्टेनोक्तम्—एतदेव रूपं शैवाः सदाशिव इत्याहुः। वैष्णवा वासुदेव इति। शाक्ता महालक्ष्मीरिति वदन्ति। अलक्ष्यामाह शून्य-मिति। निराकारस्वरूपा प्रलयकाले स्थुलरूपाभावेण संस्कारात्मनावस्थितं जगत् स्वेन तेजसा चिन्मात्ररूपेण या व्याप्तवतीत्यर्थः (गुप्तवती)। अर्थात् प्रलयकाले जगदेतन्न विद्यते। संस्कारेण सूक्ष्मरूपेण वा परमप्रकृतौ महालक्ष्म्यां निहितं तिष्ठति। तदा महालक्ष्मीः स्वतेजसा चिन्मयीरूपेण तत् शून्यं जगद् व्याप्तवतीत्यर्थः। उक्तञ्च **महानिर्वाणतन्त्रे**—

पुनः स्वरूपमासाद्य तमोरूपं निराकृतिः।
वाचातीतं मनोऽगम्यं त्वमेका ह्यवशिष्यसे ।।
साकाराऽपि निराकारा मायया बहुरूपिणी।
त्वं सर्वादिरनादिस्त्वं कर्त्री हर्त्री च पालिका ।।
(४।३३-३४)

परमा प्रकृतिस्त्वं प्रलयकाले वाक्यमनसोरगोचरा निराकारस्वरूपा केवलं तमोरूपमवलम्बमाना तिष्ठसि। त्वं साकाराऽपि निराकारा। परन्तु मायामाश्रित्य नानाविधरूपाणि धारयसि। त्वमेव सर्वेषामादिभूता। तवादिः कोऽपि नास्ति। त्वं रजोगुणमाश्रित्य सृष्टिकर्त्री, सत्वगुणमाश्रित्य पालनकर्त्री, तमोगुणेन सर्वेषां संहारकर्त्री च।

**महालक्ष्म्या महाकालीरूपम्**

शून्यं तदखिलं लोकं विलोक्य परमेश्वरी।
बभार रूपमपरं तमसा केवलेन हि ॥७॥

परमेश्वरी महालक्ष्मीस्तदखिलं लोकं शून्यं विलोक्य केवलेन तमोगुणेन हि अपरमेकं महाकालीरूपं धारयामास। "तमसा केवलेन हि",—अत्र तमसः प्राधान्यमाश्रित्य "केवलेने"त्युक्तिः (नागोजीभट्टः)। महालक्ष्मीरेव महाकाल्यात्मककालेनापि परिणता इत्याह (**गुप्तवती**)।

सा भिन्नाञ्जनसंकाशा दंष्ट्राञ्चितवरानना।
विशाललोचना नारी बभूव तनुमध्यमा ॥८॥

सा महाकाली गाढनीलवर्णा प्रकटदन्तसमूहशोभितकरालवदना बृहल्लोचनविशिष्टा मध्यक्षीणा नारीमूर्त्तिर्बभूव।

खड्गपात्रशिरःखेटैरलंकृता चतुर्भुजा।
कबन्धहारमुरसा बिभ्राणा शिरसा स्रजम् ॥९॥



सा महाकाली चतुर्भुजा खड्ग-पानपात्र-खट्टाङ्ग (नरशिरोयुक्तदण्डविशेषः)-खेटकनामकान्यस्त्राणि धारयन्ती, शिरोदेशे मुण्डमालान्विता ग्रीवायां च कबन्धहारविशिष्टाऽभूत्।

तां प्रोवाच महालक्ष्मीस्तामसी प्रमदोत्तमाम्।
ददामि तव नामानि यानि कर्माणि तानि ते ॥१०॥

महालक्ष्मीस्तां नारीश्रेष्ठां तामसमूर्ति महाकालीं प्रोवाच,—तव कर्मानुसारेण नामानि ददामि।

महामाया महाकाली महामारी क्षुधा तृषा।
निद्रा तृष्णा चैकवीरा कालरात्रिर्दुरत्यया ॥११॥
इमानि तव नामानि प्रतिपाद्यानि कर्मभिः।
एभिः कर्माणि ते ज्ञात्वा योऽधीते सोऽश्नुते सुखम् ॥१२॥

महामाया महाकाली महामारी क्षुधा तृषा निद्रा तृष्णा एकवीरा कालरात्रिर्दुरत्यया चेति नामदशकं कर्मानुसारेण प्रसिद्धम्। एभिर्नामभिर्यस्तव

कर्माणि ज्ञात्वा तदनुसारेणार्थज्ञानेन सह नामान्यधीते, स सुखं परमानन्द-सम्भोगमश्नुते।

महामायादिनामदशकस्यान्वर्थकत्वमाह (**गुप्तवती**)––

(१) महामाया––ब्रह्मादीनामपि मोहकत्वात् महामाया। ब्रह्मविष्णु-प्रभृतिदेववृन्दं मोहितवतीति महामायाभिहिता।

(२) महाकाली––ब्रह्मादिदेवानां महाकालमपि महाप्रलयसमये कलयति ग्रसते इति महाकाली।

(३) महामारी––मारणाच्च महामारी। एषा सर्वसंहारकारिणीत्वेन महामारीनाम्ना प्रसिद्धा भवति।

(४) क्षुधा––सर्वाऽविद्यादि-भक्षणेच्छावती। एषा हि साधकस्य सर्वा-विद्यादिदोषभक्षणेच्छायुक्तत्वेन क्षुधेति कथ्यते।

(५) तृषा––सर्वाविद्यादि-पानेच्छावती। भक्तानामेषा सर्वाविद्यादि-दोषपानेच्छावतीत्वेन तृषेति नाम्नाभिहिता।



(६) निद्रा––योगनिद्रा, समाधिः, तद्रूपा। अर्थात् समाधिरूपिणी-त्युच्यते।

(७) तृष्णा––भक्तकृतभक्तिरसपिपासुः। भक्तकृत-भक्तिरसं पातुं सर्व-देच्छायुक्तत्वेन सा तृष्णेति कथ्यते।

(८) एकवीरा––जगत्प्रपञ्चमध्ये एकैव वीरा पराक्रमशालिनी! जगतीह एका अद्वितीया सर्वाधिकपराक्रमशालिनीत्वेनैकवीरेति नाम्ना प्रसिद्धा।

(९) कालरात्रिः––कालनाशकत्वात्कालरात्रिः। एषा हि सर्वग्रासि-कालमपि नाशयति, इति हेतोः कालरात्रिरुच्यते।

(१०) दुरत्यया––अस्या माया दुरतिक्रमणीया। अत्ययो ध्वंसः, न कोऽप्यस्या मायां भेत्तुं शक्नोतीति दुरत्ययेति नाम्ना प्रसिद्धा। उक्तञ्च गीतायाम्––

दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते॥

अलौकिकी त्रिगुणमयी दैवी ह्येषा मम माया, निश्चितमेव दुरतिक्रमणीया। ये खलु मामेव शरणं गतास्ते मायामेतां तरन्ति। **देवीपुराणे** देवी-नामनिर्वचनाध्याये देवी-नाम-निरुक्तिः—

अप्येकं वेत्ति यो नाम धात्वर्थनिगमैर्नरः।
स दुःखैर्वर्जितः सर्वैः सदा पापाद् विमुच्यते ॥(३७।१०४)

येन जनेन देव्या अनेकनाममध्यादेकमेव नाम धात्वर्थगतव्युत्पत्त्या सह ज्ञायते, स सर्वदुःखवर्जितः पापमुक्तश्च भवति। देव्याः प्रत्येकं नाम कर्मविशेषसूचकम्। तज्ज्ञात्वा नामकीर्तनादभीष्टसिद्धिर्भवति।

मूलप्रकृतिः पराशक्तिर्महालक्ष्मीरेकाऽद्वितीयाऽपि गुणक्रियादिभेदादनन्तनामरूपाणि च धृत्वा विराजते। तत्त्वमिदं **देवीपुराणे** कतिपयदृष्टान्तैः सह विशदरूपेणालोचितम्—

यथाऽभिव्यज्यते वर्णैर्विचित्रैः स्फटिको मणिः।
तथा गुणवशाद्देवी नानाभावेषु वर्ण्यते ॥
एको भूत्वा यथा मेघः पृथक्त्वेनावतिष्ठते।
वर्णतो रूपतश्चैव तथा गुणवशाज्जया ॥३७।९४-९५॥

एको हि स्फटिकमणिर्यथा नाना वर्णैः प्रकाशते, तथा सा देवी सत्त्वादिगुणतारतम्यवशतो नानाभावेन कीर्त्यते। मेघो यथैको भूत्वा वर्णतो रूपतश्च पृथग्रूपोऽवतिष्ठते। तथैकापि देवी गुणादिवशतः पृथक्त्वेन वर्ण्यते। ततश्च

नभसः पतितं तोयं याति स्वाद्वन्तरं यथा।
भूमे रसविशेषेण तथा गुणवशाच्छिवा ॥
यथा द्रव्यविशेषेण वायुरेकः पृथग् भवेत्।
दुर्गन्धो वा सुगन्धो वा तथा गुणवशादुमा ॥
यथा वा गार्हपत्याग्निरन्यसङ्गान्तरं व्रजेत्।
दक्षिणाहवनीयादि ब्रह्मादिषु तथा च सा ॥ (ऐं ३७।९६-९८)

गगनमण्डलान्निपतितमेकमेव तोयं यथा पृथ्वीरसविशेषेण सह मिलित्वा विभिन्नास्वादं प्राप्नोति, एकोऽपि वायुर्यथा द्रव्यविशेषसंसर्गाद् गन्धः सुगन्धश्च भवति एवं गार्हपत्याग्निरेकोऽपि यथान्यसंसर्गाद्दक्षिणाहवनीयादिपृथङ् नाम्नाऽनुभूयते, तथा सा देवी उमा, एकाऽपि सत्त्वादिगुणवशतो ब्रह्मादिनानामूर्त्या

नाम्ना च विराजते। सर्वत्र शङ्करी देवी तनुभिर्नामभिश्च जगन्मङ्गलं साधयति। **ललितासहस्रनाम-स्तोत्रे** भगवान् हयग्रीवोऽगस्त्यमृषिमवदत्—"देवी नामसहस्राणि कोटिशः सन्ति कुम्भज।" अर्थाद्देव्या अनन्तानि नामानि सन्ति। उक्तञ्च **देवीभागवते**—

असंख्यातानि नामानि तस्या ब्रह्मादिभिः सुरैः।
गुणकर्मविधानाद्यैः कल्पितानि च किं ब्रुवे॥

देव्या असंख्यनामानि ब्रह्मादिदेवैर्गुणकर्मानुसारतः कल्पितानि, तद्विषये वयं किं वदामः। श्रीश्रीविष्णुसहस्रनामस्तोत्रस्य द्वादशश्लोकभाष्ये आचार्यपादः शङ्करोऽद्वैतब्रह्मणो नामभेदकारणं नामविशेषोच्चारणेन विशेषफलोत्पत्तिकारणञ्च **विष्णुधर्मोत्तरतो** निम्नलिखितप्रमाणमुखेनोद्धृतवान्—

एकस्यैव समस्तस्य ब्रह्मणो द्विजसत्तम।
नाम्नां सहस्रं लोकानामुपकारकरं खलु॥
निमित्तशक्तयो नाम्नां भेदिन्यस्तदुदीरणात्।
विभिन्नान्येव साध्यन्ते कल्पानि द्विजसत्तम॥
यच्छक्तिर्नाम यत्तस्य तत्तस्मिन्नेव वस्तुनि।
साधकं पुरुषव्याघ्र सौम्य क्रूरेषु वस्तुषु॥



अद्वैतब्रह्मणोऽनन्त-नाम प्रसिद्धम्। श्लोके सहस्रशब्दोऽनन्तशब्दवाची। तन्नामानि च लोकानां महोपकारं साधयन्ति। निमित्तं शक्तिश्च नामभेदकारणम्। अर्थादेकस्यापि ब्रह्मणो निमित्तशक्तिभेदादनन्तनामान्यासन्। तेषां नाम्नां पृथगुच्चारणादभिलषितफलानि च लभ्यन्ते। यस्य वस्तुनो यच्छक्तिरस्ति तच्छक्त्यनुसारेण तस्य नाम भवति। सदसत्सर्ववस्तूनामेतदेव नामभेदकारणमभूत्। नामतत्त्वमुक्तं श्रीमदरविन्देन,—इह नामरूपयोर्जगति नाम्नामेकं गभीरतात्पर्यं वर्तते। न केवलमिच्छाकौटिल्येनासंख्यनामोत्पत्तिः। प्रत्येकनामान्तर्हिता एकैका शक्तिर्गुणश्च विद्यते। प्रतिशब्दान्तरं नामान्तरेऽपि च, नाम, नामी, शक्तिश्चेत्युपलभ्यन्ते। अनाम्यरूपं ब्रह्मैव केवलं समग्रनामरूपकेन्द्रम्। अनन्तनामान्यनन्तरूपाणि च तस्मिन् ब्रह्मण्येव परस्परं मिलित्वा वर्तन्ते, तस्यैकनामहीनसत्तया ग्रथितानि भवेयुः। देव्या विभिन्ननामानि च तस्या विशेषगुणशक्तिप्रतीकस्वरूपाणि। नाम्नामेतेषां साहाय्येनैव देव्या विशेषगुणशक्त्यनुध्यानं करणीयम्। देवी शब्दब्रह्मस्वरूपिणी। शब्दजातं सर्वमपि देवीनामैव केवलम्।

श्रीश्रीललितासहस्रनामस्तोत्रस्य **सौभाग्यभास्करभाष्ये** श्रीमद्भास्कररायोक्तमतेन विशेषविशेषनामभिर्महामहिमान्विता देवीभक्ता: पूर्वाचार्या महामायां स्तुत्वा प्रसाद्य च स्वस्वाभीष्टसिद्धिं लभन्ते, देवी स्वयं वरदानेन च तत्तन्नामविशेषं शक्तिमन्तमकरोत्तन च सर्वेषां नाम्नामन्तरे विशेषतात्पर्यपूर्णा शक्तिर्निहिता भवेत्। देव्या नाम-विशेष-साधनेन साधकस्याप्यन्तरे तन्नाम्नोऽन्तर्निहिता शक्तिर्जाग्रता क्रियाशीला च भवेत्। देव्या: सर्वाण्येव नामानि मङ्गलानि, तथापि निर्द्दिष्टफललाभाय नामविशेषजपो विधीयते। नामविशेषाश्रयेण फलविशेष:। योऽन्नं कामयते स: "अन्नदाय नम:" इति मन्त्रं जपेत्। धनप्रार्थी "वसुदायै नम:" इति मन्त्रं जपेत्। भयदूरीकरणार्थं "भयापहार्यै नम:" इति मन्त्रं जपेत्।

श्रीमद्भास्कररायोऽवदत्, "नामसु गौणमुख्यभेदेन फलभेद: स्मर्यते" इति (**सौभाग्यभास्कर:**)। फलविशेषलाभार्थं साधको देव्या "अन्नदा", "वसुदा" प्रभृतिगौणनामजपात् शीघ्रमेव तन्नामानुयायि फलं लभते। परन्तु देवी-महामाया-दुर्गा-ऽम्बिकाप्रभृतिमुख्यनाम-स्मरणजपन-कीर्तनै: साधकस्य मुक्तिर्भवति। उक्तञ्च **सूतसंहितायाम्**—

नामानि सर्वाणि तु कल्पितानि स्वमायया निजसुखात्मरूपे।
तथापि मुख्यास्तु शिवादिशब्दा भवन्ति संकल्पनया शिवस्य।।
मुख्यशब्दंजपन्तो मुनीश्वरा: सत्यमेव परमेश्वरा जाता:।
तेषां वक्त्रकमले सदाशिवो नृत्यति च परमेशया सह।।

नित्यसुखस्वरूपे ब्रह्मणि तस्यैव मायया नामानि कल्पितानि। तथापि शिवस्य सङ्कल्पानुसारेण शिवादि नाम मुख्यम्। हे मुनिश्रेष्ठा:। मुख्यनामजपेन साधको निश्चितमेवेश्वरत्वप्राप्तो भवति। तस्य मुखकमले शक्त्या सह शिवो नृत्यति। देव्या मुख्यनामजपमाहात्म्यमुक्तं **कालिकापुराणे**,--

ये स्तुवन्ति जगन्मातर्भवतीमम्बिकेति च।
जगन्मयीति मायेति सर्वं तेषां प्रसिध्यति।।

हे जगन्मात: यैस्त्वमम्बिका जगन्मयी मायेति च नाम्ना स्तूयसे, तेषां सर्वसिद्धिलाभो भवति। उक्तञ्च **विष्णुपुराणे**,—

ये त्वां मायेति दुर्गेति वेदगर्भाम्बिकेति च।
भद्रेति भद्रकालीति क्षेम्या क्षेमङ्करीति च।।

प्रातश्चैवापराह्ने च स्तोष्यन्त्यानम्रमूर्तयः।
तेषां हि प्रार्थितं सर्वं मत्प्रसादाद् भविष्यति॥

विष्णुर्देवीमुवाच,—हे देवि! ये प्रणता जनास्त्वां प्रातरपराह्णे च माया, दुर्गा, भद्रा, वेदगर्भा, अम्बिका, भद्रकाली, क्षेम्या, क्षेमङ्करी चेति नाम्ना स्तुवन्ति। मत्प्रसादात्तेषां सर्वप्रार्थना पूर्णा भविष्यति। उक्तञ्च हरिवंशे,—

ब्रह्मा विष्णुश्च रुद्रश्च चन्द्रसूर्याग्निमारुताः।
अश्विनौ वसवश्चैव विश्वे साध्यास्तथैव च॥
महेन्द्रः सह-पर्जन्यो धाता भूमिर्दिशो दश।
गावो नक्षत्रवंशाश्च ग्रहा नद्यो ह्रदास्तथा॥
सरितः सागराश्चैव नाना विद्याधरोरगाः।
तथा नागाः सुपर्णाश्च गन्धर्वाप्सरसां गणाः॥
कृत्स्नं जगदिदं प्रीतं देवीनामानुकीर्तनात्॥

ब्रह्मा, विष्णुः, रुद्रः, चन्द्रः, सूर्यः, अग्निः, मरुत्, अश्विद्वयम्, वसुगणाः, विश्वदेवगणाः, साध्यगणाः, महेन्द्रः, पर्जन्यः, धाता, पृथिवी, दश दिशः, गोसमूहः, नक्षत्राणि, राशयः, ग्रहाः, नदीनां समूहः, ह्रदसमूहः, सरितः, सागराः, विद्याधरगणाः, सर्पगणाः, नागाः, सुपर्णा, गन्धर्वाः, अप्सरसश्चेति समग्रं जगद्देवीनामकीर्तनेन प्रीतं भवति।

### महालक्ष्म्या महासरस्वतीरूपम्

तामित्युक्त्वा महालक्ष्मीः स्वरूपमपरं नृप।
सत्त्वाख्येनातिशुद्धेन गुणेनेन्दुप्रभं दधौ॥१३॥
अक्षमालांकुशधरा वीणापुस्तकधारिणी।
सा बभूव वरा नारी नामान्यस्यैव सा ददौ॥१४॥
महाविद्या महावाणी भारती वाक् सरस्वती।
आर्या ब्राह्मी कामधेनुर्वेदगर्भा च धीश्वरी॥१५॥

मूल प्रकृतिस्तुरीया महालक्ष्मीः शुद्धसत्त्वमयी महासरस्वतीत्वेऽपि सैव परिणतेत्याह-तामिति। हे राजन्! महालक्ष्मीर्महाकालीमित्युक्त्वा, शुद्धसत्त्वगुणेन चन्द्रवत्प्रभाविशिष्टम् अपरमेकं महासरस्वती-रूपं धारयामास। सा श्रेष्ठा नारी महासरस्वती चतुर्षु भुजेष्वक्षमालामंकुशं वीणां पुस्तकञ्च

घृतवती। सा महालक्ष्मीर्महासरस्वत्यै नामानि दश ददौ। तानि हि (१) महाविद्या, (२) महावाणी, (३) भारती, (४) वाक्, (५) सरस्वती, (६) आर्या, (७) ब्राह्मी, (८) कामधेनुः, (९) वेदगर्भा, (१०) धीश्वरीति। महासरस्वत्या यानि दश नामान्यत्रोल्लिखितानि, तानि नामानि देव्याः कर्म-विशेषेण प्रतिपादितानि। तन्नाम्नामर्थज्ञानसमन्वितपठनेन साधकः परमसुखं लभते। इति पूर्वोक्तद्वादशमन्त्रे कथितम्।

"महाविद्या"—महती च सा विद्या च। सर्वानर्थनिवारकत्वात् महत्त्वम् (**सौभाग्यभास्करः**)। यया विद्यया सर्वेऽनर्था निवार्यन्ते, सा देवी महाविद्या।

"भारती"—आप्री, आप्रीसूक्ते च (ऋग्वेदे १।१७२।९, १।१८८।८, २।१।११, २।३।८, ३।४।८) यज्ञदेवता देवीत्रयीत्युक्तम्। इड़ा, भारती, सरस्वती च। वैदिकसाहित्ये एषा वाग् वाग्देव्या सहाऽभिन्ना। सायणाचार्येण १।१८८।८ संख्यके ऋग्भाष्ये उक्तम्, इड़ा पृथिवीसम्बन्धिनी, भारती आदित्यसम्बन्धिनी, सरस्वती च द्युलोकसम्बन्धिनी वाग्देवी। वाक्—शतपथब्राह्मणे (३, ९, १, ७) उक्तम्—"वाग् वै सरस्वती मन्त्रांशेऽस्मिन् वाक्यमात्राधिष्ठात्री देवी सरस्वती वाग्" इत्युच्यते। तन्त्रे "वागीश्वरी-मृतुस्नाता" मित्यादिवागीश्वरीध्यानमुक्तम्। ऋग्वेदे कतिपयमन्त्रेषु वाग्देवता-स्वरूपमुद्घाटितम्—

(१) चत्वारि वाक् परिमिता पदानि,
तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति,
तुरीयं वाचो मनुष्या वदन्ति॥

वाक् चतुःप्रकारा। मेधावी ऋत्विक् तज्जानाति। तन्मध्ये त्रीणि गुहा-र्पितानि न प्रकाशन्ते। चतुर्थं वाचो मनुष्या भाषन्ते। तान्त्रिकदर्शनमतेनापि वाक् चतुर्धा परा, पश्यन्ती, मध्यमा, वैखरी चेति। तासां त्रीणि गुहायामर्था देहाभ्यन्तरे मेरुदण्डमध्ये सुषुम्नायां सुगुप्ता अप्रकाश्यास्तिष्ठन्ति। चतुर्थी वाक् वैखरी कण्ठ-मूर्ध-तात्वादिसाहाय्येनोच्चारिता प्रकाशिता च। मनुष्यास्तां भाषात्वेन व्यवहरन्ति। वाग्देवी प्रोक्तचतुर्विधवाक्यजननीति।

(२) यद्वाग् वदन्त्यविचेतनानि
राष्ट्री देवानां निषसाद मन्द्रा
चतस्र ऊर्जं दुदुहे पयांसि
क्व स्विदस्या परमं जगाम ॥

यदा दीप्तिशालिनी (राष्ट्री) देवानामानन्ददायिनी (मन्द्रा) वाग्देवी ज्ञानहीनाय यजमानाय ज्ञानं प्रदाय (अविचेतनानि वदन्ती) यज्ञे उपविशति, तदा सा तेषामर्थे चतुर्दिक्षु सर्वविधानि भोग्यानि वस्तुनि, अन्नानि जलानि च दुग्धवती (चतस्र ऊर्जं दुदुहे पयांसि)। (मुमुक्षुर्यजमानो ह्यैहिकभोगैर्न तृप्तो जिज्ञासते) अस्या वाग्देव्याः समीपस्थं यत् परमं धनमस्ति (अमृतत्वम्) तत् क्व गतम् (क्व स्विदस्याः परमं जगाम)?

अस्या ऋचस्तात्पर्यमेतत्—वाग्देवी ज्ञानिभ्यो ज्ञानं ददाति, तज्ज्ञान-प्रभावेण सकामः साधकोऽभ्युदयं निष्कामश्च साधको निःश्रेयसं लभते।

(३) देवीं वाचमजनयन्त देवा-
स्तां विश्वरूपाः पशवो वदन्ति।
सा नो मन्द्रेषमूर्जं दुहाना
धेनुर्वागस्मानुपसुष्टुतैतु ॥

देवगणा, यां दीप्तिमतीं वाग्देवतामुत्पादयन्ति (८।१००।११) सर्वविधपशुगणास्तद्वाक्यमुच्चारयन्ति, सा हर्षदायिनी तथान्नरसप्रदायिनी। वाक्, धेनुवत् संस्तुता सती (सुष्टुता) अस्मभ्यमागच्छतु (अस्मान् उप एतु)

सर्वदेवानां ज्ञानज्योतिःसमुच्चयं प्राप्य वाग्देवीरूपेण प्रकाशिता (देवीं वाचम् अजनयन्त देवाः)। वाक् शब्दब्रह्मरूपेण मनुष्य-पशु-पक्षी-कीट-पतङ्गादि-सर्वजीवेषु विद्यमाना। जीवो हि स्पष्टमस्पष्टं वा शब्दोच्चारणपूर्वकं तां प्रकाश-यति। (तां विश्वरूपाः पशवो वदन्ति)। धेनुर्यथा दोहनकारिभ्यो दुग्धं ददाति, तथा भक्तेभ्यः पार्थिवमपार्थिवं च खाद्यपानीयं प्रयच्छति (इषम् ऊर्जं दुहाना)। एवम्भावेन प्रार्थनानुसारतो भोगं मोक्षञ्च प्रदाय वाग्देवी साधकानामा-नन्ददायिनी (मन्द्रा) भवति। श्रद्धावदेकनिष्ठसाधकाय वाग्देवी सम्पूर्णमात्मान-प्रकाशयति।

"सरस्वती"—सरस्वतीनाम्नः विविधप्रकारा निरुक्तिर्दृश्यते। उक्तञ्च **योगावशिष्ठे रामायणे**—

(१) सरणात् सर्वदृष्टीनां कथितैषा सरस्वती। ६(२)।८४।१२

स्वर्गमोक्षप्रभृतिनिखिलोपासनायां ज्ञानदृष्टिधाराप्रकाशनपरत्वेन कथितैषा "सरस्वती"ति। उक्तञ्च **भरद्वाजस्मृतौ**—

(२) या वसेत् प्राणिजिह्वासु सदा वागुपवर्तनात्।
सरस्वतीति नाम्नेयं सदा ख्याता महर्षिभिः॥

या खलु सदा प्राणिनां जिह्वासु वाक्यमुत्पाद्य वसति, महर्षिभिः सा सरस्वतीनाम्ना सर्वदा कथिता। **देवीपुराणे**ऽन्यप्रकारं निर्वचनमुक्तम्—

(३) स्वरैः स्मरणशीलत्वाज् ज्ञेया सप्तस्वरात्मिका।
'अति' प्रापणे दाने वा तेन देवी सरस्वती॥३७।५३॥

सप्तविधस्वरयोगेन स्मरणीयत्वेन सा सप्तस्वरात्मिका, 'अते'रर्थः प्रापणं दानञ्चेति; अतएव प्रोक्तसप्तस्वरदातृत्वेन सा सरस्वतीनाम्नाऽभिहिता।

"आर्या"—सरस्वती, सर्वश्रेष्ठत्वेन नाम्ना आर्येति कथिता। ये तस्याः कृपां लभन्ते, त आर्याः श्रेष्ठा भवन्ति। सरस्वत्या "आर्या" नाम्नस्तात्पर्यम् **ऋग्वेद** उक्तम्—

अम्बीतमे नदीतमे देवीतमे सरस्वति।
अप्रशस्ताइव स्मसि प्रशस्तिमम्ब नस्कृधि॥(२।४१।१६)

हे सरस्वति! त्वं मातॄणां श्रेष्ठा, नदीनां श्रेष्ठा, देवीनां श्रेष्ठा; हे मातः। असमृद्धिशालिनोऽस्मान् त्वं समृद्धिशालिनः कुरु।

"ब्राह्मी"—**देवीपुराणे** उक्तम्—

बृहदस्य शरीरं यदप्रमेयं प्रमाणतः।
बृहद् विस्तीर्णमित्युक्तं ब्राह्मी देवी ततः स्मृता॥(३७।४०)

यतो बृहदस्याः शरीरं, सर्वव्यापि, अप्रमेयं च, तस्माद् ब्राह्मीनाम्नाऽभिहिता।

"कामधेनुः"--वेदे वाक्, धेनुरूपेणोपासिता। "वाचं धेनुमुपासीत"—(बृहदारण्यकोपनिषद् ५।८।१)। यथा धेनुरभीष्टं दुग्धं ददाति, तथा वाग्देव्यपि धेनुरूपेणोपासिता साधकाय सर्वाभीष्टं प्रददाति। उक्तञ्च ऋग्वेदे,—"सा नोमन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु।" आनन्ददायिनी वाग्देवी, अन्नरसप्रदायिनी धेनुरिवास्माकं स्तुतिं गृहीत्वाऽस्मभ्यमागच्छतु। **सरस्वतीरहस्योपनिषद्यप्युक्तम्**—

व्यक्ताव्यक्तगिरः सर्वे वेदाद्या व्याहरन्ति याम्।
सर्वकामदुघा धेनुः सा मां पातु सरस्वती।(२८)

स्पष्टमस्पष्टं वा वाक्योच्चारणकारिणः सर्वजीवा वेदवेदान्तादिशास्त्राणि च यस्या महिमानं कीर्तयन्ति, सा सर्वाभीष्टदात्री कामधेनुरूपा सरस्वती, अस्मान् रक्षतु।

"वेदगर्भा"--वेदा गर्भे यस्याः सा। शब्दब्रह्मरूपिण्याः सरस्वत्या निखिलवेदमन्त्रराशयो निःसृता आसन्। तेन सा वेदगर्भा वेदजननी वेदमातृप्रभृतिनामभिः प्रसिद्धा। उक्तञ्च **देवीपुराणे**--

यतः शृङ्गाटकाकारकुण्डलिन्याः समुद्गता।
स्वराश्च व्यञ्जनानीति वेदमाता ततः स्मृता॥(३७।४२)

यतस्त्रिकोणाकृतेः कुण्डलिन्याः स्वरव्यञ्जनवर्णसमूहा निर्गता आसन्, ततः सा "वेदमाता" इति नाम्नाभिहिता।

"धीश्वरी"--धीशक्तेः प्रेरयित्रीत्वेन सा सरस्वती प्रोक्तनाम्नाभिहिता भवति। गायत्रीरूपिणी च। उक्तञ्च **देवीभागवते**--

सर्वचैतन्यरूपां तामाद्यां विद्याञ्च धीमहि।
बुद्धिं या नः प्रचोदयात्॥ (१।१।१)

याऽस्माकं बुद्धिवृत्तिं प्रेरयति, तां सर्वचैतन्यरूपिणीम् आद्यविद्यां धीमहि। "सुरेश्वरी" इति नाम्नस्तात्पर्यं **सरस्वतीरहस्योपनिषदि** उक्तम्—

अध्यात्ममधिदैवं च देवानां सम्यगीश्वरी।
प्रत्यगास्ते वदन्ती या सा मां पातु सरस्वती ॥(१६)

अध्यात्माधिदैवतसर्वदेवानामुपरि या सम्पूर्णप्रभुत्वमकरोत्, हृदयाभ्यन्तरवर्तिनी सा वाङ्मयी देवी सरस्वती, अस्मान् रक्षतु।

सर्वविधसरस्वतीमूर्तीनां साधारणलक्षणमेतद्यन् मुखमेकं हस्ताः चत्वारः मूर्ध्नि च मुकुटं, कर्णौ कुण्डलशोभितौ मस्तकमावेष्टय विराजितेन प्रभामण्डलेन सा समन्विता वर्तते। देव्याश्चतुर्भुजे आयुधवैचित्र्यादायुधचतुष्टयसन्निवेशवैचित्र्याच्च नवरूपा मूर्तिभेदा भवन्ति।

एकवक्त्रा चतुर्भुजा मकुटेन विराजिता।
प्रभामण्डलसंयुक्ता कुण्डलान्वितशेखरा ॥

(१) अक्षपद्मं वीणापुस्तकं "महाविद्या" प्रकीर्तिता।
(२) अक्षं पुस्तकं वीणापद्मं "महावाणी" च नामतः ॥
(३) वराक्ष-पद्म-पुस्तकं शुभावहा च "भारती"।
(४) वराम्बुजाक्ष-पुस्तकं "सरस्वती" प्रकीर्तिता ॥
(५) वराक्षं पुस्तकं पद्मम् "आर्या" नाम प्रकीर्तिता।
(६) वर-पुस्तकाक्षपद्मं "ब्राह्मी" नाम सुखावहा ॥
(७) वर-पद्म-वीणा-पुस्तकं "कामधेनुश्च" नामतः।
(८) वरञ्च पुस्तकं वीणा "वेदगर्भा" तथाम्बुजम् ॥
(९) अक्षं तथाऽभयं पद्मं पुस्तकेनेश्वरी भवेत्।
(८।७९-८३)

### (क) महालक्ष्म्या मिथुनसृष्टिः

अथोवाच महालक्ष्मीर्महाकालीं सरस्वतीम्।
युवां जनयतां देव्यौ मिथुने स्वानुरूपतः ॥१६॥
इत्युक्त्वा ते महालक्ष्मीः ससर्ज मिथुनं स्वयम्।
हिरण्यगर्भौ रुचिरौ स्त्रीपुंसौ कमलासनौ ॥१७॥

अनन्तरं महालक्षीर्महाकालीं महासरस्वतीं चावदत्,—युवां देव्यौ निजानुरूपतः स्त्रीं पुरुषं च जनयतमिति। महालक्ष्मीर्महाकालीं महासरस्वतीमित्युक्त्वा स्वयं मिथनसृष्टिमकरोत्। एतौ स्त्रीपुरुषौ मनोहरस्वर्णवर्णविशिष्टौ। पद्मासनस्थौ "हिरण्यगर्भौ" हिरण्यवत् निर्मलं ज्ञानं हिरण्यं तद् गर्भे ययोः

महालक्ष्मीर्ब्रह्माणं श्रियञ्च पुत्रकन्यात्वेनोत्पादयति स्म। तावुभौ स्वर्णवन्निर्मलज्ञानसम्पन्नौ। इत्येकं तात्पर्यम्। स्वयं समष्टिशक्तिरूपिणी महालक्ष्मीः स्वीयरजोगुणव्यष्टिरूपमाश्रित्य ब्रह्माणं श्रियं चोत्पादयति स्म।

ब्रह्मन् विधे विरिञ्चेति धातरित्याह तं नरम्।
श्रीः पद्मे कमले लक्ष्मीत्याह माता स्त्रियं च ताम्।।१८।।

माता महालक्ष्मीस्तं पुरुषं ब्रह्मन्, विधे, विरिञ्चे, धातः, इति सम्बोधयति। श्लोके "विरिञ्चेति" इत्यत्र इतिशब्दस्येकारलोप आर्षः। तां च स्त्रियं श्रीः, पद्मे, कमले, लक्ष्मि इति च सम्बोधयति। "विरिञ्चिः"— वि रच् सृजने अ कर्तरि। विविधप्राणिनां सृष्टिकर्तृत्वेन ब्रह्मा "विरिञ्चि"-नाम्ना प्रख्यातः।

लक्ष्म्या नामरूपभेदो वर्ण्यते;—श्रीः–श्रियतेऽसौ सर्वैः उपजीव्यतया (श्रि क्विप्)। या सर्वेषामुपजीव्यतया आश्रयविषया, सैव श्रीः। श्रीसूक्तस्य पञ्चदशे ऋङ्मन्त्रे श्रीदेव्या लक्ष्मीदेव्याश्च महिमा कीर्तितः। ऋग्वेदस्य ५।८७ सूक्तात् परतः खिलांशे श्रीसूक्तं द्रष्टव्यम्।

अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम्।
श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम्।।(श्रीसूक्त ३)

अश्वसमूहा यस्याः पूर्वगामिनः, रथसमूहा मध्यभागे, या च हस्तिसमूहकृतबृंहणध्वनिना प्रबुद्धा, तां सेनारूपिणीं श्रीदेवीमुपह्वये,—श्रीर्देवी मां प्रापयतु।

लक्ष्मीदेव्या नामभेदाः सौभाग्यलक्ष्म्युपनिषदि—श्रीः, लक्ष्मीः, वरदा, विष्णुपत्नी, वसुप्रदा, हिरण्यरूपा, स्वर्णमालिनी, रजतस्रजा, स्वर्णप्रभा, स्वर्णप्राकारा, पद्मवासिनी, पद्महस्ता, पद्मप्रिया, मुक्तालङ्कारा, चन्द्रा, सूर्या, बिल्वप्रिया, ईश्वरी, भक्तिः, मुक्तिः, विभूतिः, ऋद्धिः, समृद्धिः, कृष्टिः, पुष्टिः, धनदा, धनेश्वरी, श्रद्धा, भोगिनी, भोगदा, सावित्री, धात्री, विधात्री, पद्मा, कमला इति।

### (ख) महाकाल्या मिथुनसृष्टिः

नीलकण्ठं रक्तबाहुं श्वेताङ्गं चन्द्रशेखरम्।
जनयामास पुरुषं महाकाली सितां स्त्रियम्।।२०।।

महाकाली नीलकण्ठं, रक्तबाहुं, शुक्लवर्णं, चन्द्रशेखरं पुरुषं, श्वेतवर्णां स्त्रियं च जनयामास। सितां श्वेताम्। अतएव महाकाल्याम् अन्तर्निहितः सत्त्वगुणोऽप्यस्तीति बोध्यम्।

स रुद्रः शङ्करः स्थानुः कपर्द्दी च त्रिलोचनः।
त्रयी विद्या कामधेनुः सा स्त्री भाषा स्वराक्षरा॥२१॥

स पुरुषः रुद्रः, शङ्करः, स्थानुः, कपर्द्दी, त्रिलोचनश्चाभिहितः। एवं सा स्त्री त्रयी, विद्या, कामधेनुः, भाषा, स्वरा, अक्षरा इति नामभिरभिहिता।

## (१) रुद्रस्य नाममूर्तिभेदः

**प्राधानिकरहस्यमतेन** रुद्रो महाकालीपुत्रः महाकाली च मूलप्रकृतिस्तुरीया महालक्ष्म्यास्तामसस्वरूपा। **बह्वृचोपनिषद्यु**क्तम्—देवी ह्येकाग्र आसीत्। तस्या एव ब्रह्मा अजायत। विष्णुरजायत। रुद्रोऽजायत

**प्राधानिकरहस्य**मतेन मूलप्रकृतिर्महालक्ष्मीरेका, अद्वितीया देवी। तस्या राजस-स्वरूपतो ब्रह्मा, सात्त्विक-स्वरूपतो महासरस्वतीतो विष्णुः, तामस-स्वरूपतो महाकालीतो रुद्र उत्पन्नः।

"रुद्रः"—रोदयति क्रन्दयतीति रुद्रः। यस्य कार्येण जीवसमूहाः क्रन्दन्ति, स एव रुद्रः। रुद्रस्य कोपेन सर्वनाशो भवति। प्रियजनो नश्यति, धनहानिर्जायते, प्राणनाशोऽपि भवति। तस्मादृग्वेदे संहारकं रुद्रं तस्य कोपदृष्टि-दूरीकरणार्थमृषिः प्रार्थितवान्।

मा नो महान्तमुत मा नो अर्भकं
मा न उक्षन्तमुत मा न उक्षितम्।
मा नो वधीः पितरं मोत मातरम्
मा नाः प्रियास्तन्वो रुद्र रीरिषः॥(ऋ १।११४।७)

हे रुद्र! त्वमस्माकं वृद्धं मा वधीः। सन्तानजनयितारं मा वधीः। गर्भस्थं सन्तानं मा वधीः। अस्माकं पितरौ मा वधीः। अस्माकं प्रियशरीर-मपि न घातय।

मा नः स्तोके तनये मा न आयौ
मा नो गोषु मा नो अश्वेषु रीरिषः।

वीरान्मा नो रुद्र भामितो वधी-
र्हविष्मन्तः सदमित् त्वा हवामहे॥(१।११४।८)

हे रुद्र! अस्माकं पुत्रं मा हिंस्याः। तेषां पुत्रान् मा हिंस्याः। अस्मान् मा हिंस्याः। अस्माकं गवश्वान् मा हिंस्याः। हे रुद्र! क्रुद्धः सन्नस्माकं वीरान् मा हिंस्याः। वयं हव्येन सर्वदा त्वामाह्वयामः।

"शङ्करः" शं मङ्गलं करोतीति शङ्करः शिवश्चेति नाम्नाभिहितः। यो हि क्रोधान्वितः स रुद्रः "भयानां भयं भीषणं भीषणानाम्"—सः प्रसन्नावस्थायां परम-प्रशान्तः शिव-शङ्करः। यजुर्वेदे ऋषिस्तं प्रसन्न-मङ्गल-स्वरूपं प्रार्थयते।

**यजुर्वेदे**—

या ते रुद्र शिवा तनुरघोराऽपापकाशिनी।
तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि॥१६।२॥

हे रुद्र! हे गिरिशन्त! तव यन्मङ्गलमयमभयपुण्यप्रकाशकरूपन्तेन सुखतमरूपेण त्वमस्मान् पश्य। (यो गिरौ तिष्ठन् सुखं विस्तारयति स गिरिशन्तः)



"स्थाणुः"—गृहस्तम्भवत् सर्वाश्रयः। यथोक्तम् "संसारमण्डपस्यास्य मूलस्तम्भाय शम्भवे" इति (**महाभारते**, अनुशासनपर्वणि १७।३१ टीकायाम्)

(१) "कपर्दी"—कपर्दः जटा; कपर्दी जटाधारी शिवः। ऋग्वेदे,—रुद्रः कपर्दीत्युक्तम्। यथा—इमा रुद्राय तरसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः। (१।११४।१)। महान्तं कपर्दिनं वीरनाशिनं रुद्रं स्तुवामो वयम्। सायणाचार्यः कपर्दीति पदस्यार्थो जटाधारीति कथयति।

(२) नीलकण्ठेन कपर्द्दिनामनिरुक्तिरेवमुच्यते। कं जलं पिबतीति कपः। ऋतम् ऐश्वर्यं ददातीति ऋद्दः। कपश्चासौ ऋद्दश्चेति कपर्द्दः। महादेवस्य हि जटाजूटेन स्वर्गात् पतन्ती गङ्गा प्रथमं पीता, पश्चाद् भगीरथप्रार्थनया तस्या निर्गमनसामर्थ्यं दत्तम्। अतः स कपर्द्दवान् महेश्वरः कपर्द्दी। (**महाभारते** अनुशासनपर्वणि १७।४६ टीकायाम्)। **रामायणस्य** बालकाण्डे शिवजटायां गङ्गाप्रादुर्भावविवरणमस्ति। कपिलमुनिशापाद् भस्मीभूतस्य पितृकुलस्योद्धरणाय भगीरथः पृथिव्यां गङ्गावतरणार्थं सुदीर्घकालं तपसा

ब्रह्माणमस्तौत्। ब्रह्मा प्रसन्नो वरं दत्त्वाऽवदत्-गङ्गायाः पृथिव्यवतरणकाले शिवादन्यो न कोऽपि वेगधारणसमर्थो भविष्यतीति। ब्रह्मवाक्याद् भगीरथः शिवमस्तौत्। ततः प्रसन्न आशुतोषो गङ्गावेगं धारयितुं स्वीकरोति स्म। गङ्गा च सगर्वमचिन्तयत्,—मम दुर्वारस्रोतसा शङ्करमपि प्लावयित्वा पाताल-प्रवेशं करिष्यामि। ततः सर्वज्ञो महादेवो गङ्गागर्वनाशार्थं स्वीयजटाजालस्य विस्तारमकरोत्। हिमालयस्य विशालगह्वरवज्जटागर्भे प्रविष्टा जाह्नवी निर्गमनपथमप्राप्य व्याकुलीभूय शिवजटायां बहुदिनानि व्याप्य विचचार। उक्तञ्च **बालकाण्डे**—

हिमवत्प्रतिमे राम जटामण्डलगह्वरे।
सा कथञ्चिन्महीं गन्तुं नाशक्नोद् यत्नमास्थिता॥
नैव सा निर्गमं लेभे जटामण्डलमन्ततः।
तत्रैवाभ्रमद्देवी संवत्सरगणान् बहून्॥

पुनर्भगीरथः शिवाराधनायां प्रवृत्तः। ततस्तस्य कातर-प्रार्थनया कारुण्य-परवशः कपर्दी स्वकीयजटातो गङ्गां मुक्तामकरोत्। शङ्कराचार्योऽपि कपर्दिनं महादेवमस्तौद्**वेदसारशिवस्तोत्रे**,—

जटाजूटमध्ये स्फुरद्गाङ्गवारिं
महादेवमेकं स्मरामि स्मरामि।

यस्य खलु जटाजूटमध्ये गङ्गावारि तरङ्गायितमासीत्, तमद्वितीयं मदन-भस्मकारिणं महादेवं स्मरामि।

"त्रिलोचनः"—त्रीणि शास्त्राचार्यध्यानानि दर्शनसाधनानि यस्य सः त्रिलोचनः। (नीलकण्ठः अनु. टीका १७।१२८) त्रीणि सोमसूर्याग्निरूपाणि नेत्राणि यस्य। (अनु. टीका १७।१३९)। वाजसनेयसंहितायां रुद्रस्त्र्यम्बक इति नाम्नाऽभिहितः। "अव रुद्रमदीमह्यव देवं त्र्यम्बकम्।" (३।५८)। त्रीणि-अम्बकानि-नेत्राणि यस्य तादृश इति महीधरः।

## शिवाष्टमूर्तिरहस्यम्

**शिवपुराणे** वायवीयसंहितायामुत्तरभागे चतुर्थाध्याये शिवस्याष्टमूर्तयो वर्णिताः सन्ति। परमशैवविप्रर्षिरुपमन्युः श्रीकृष्णमवदत्,—

तस्य देवादिदेवस्य मूर्त्यष्टकमयं जगत्।
तस्मिन् व्याप्य स्थितं विश्वं सूत्रे मणिगणा इव॥

शर्वो भवस्तथा रुद्र उग्रो भीमः पशोः पतिः।
ईशानश्च महादेवो मूर्तयश्चाष्ट विश्रुताः॥
भूम्यम्भोऽग्निमरुद्व्योम-क्षेत्रज्ञार्कनिशाकराः।
अधिष्ठाता महेशस्य शर्वाद्यैरष्टमूर्तिभिः॥(४।१७-१९)

तस्य देवादिदेवस्याष्टमूर्तिमयं निखिलमिदं जगदष्टमूर्तिभिः सूत्रं मणिगणैरिव व्याप्तं वर्तते। ता अष्टमूर्तयो यथा शर्वो भवो रुद्रो भीमः पशुपतिरीशानो महादेवश्चेति प्रसिद्धाः। प्रोक्ताः शर्वाद्यष्टमूर्तयो यथाक्रमं क्षितिजलाग्निवाय्वाकाशक्षेत्रज्ञसूर्यचन्द्रेष्वधिष्ठिताः।

चराचरात्मकं विश्वं धत्ते विश्वम्भरात्मिका।
शार्वी शर्वाह्वया मूर्तिरिति शास्त्रस्य निश्चयः॥
सञ्जीवनं समस्तस्य जगतः सलिलात्मकम्।
भव इत्युच्यते मूर्तिर्भवस्य परमात्मनः॥(२०।२१)

अयमेव शास्त्रनिश्चयो यत्परमात्मनः पृथिवीरूपिणी शर्वनाम्नी मूर्तिः स्थावरजङ्गमात्मकं विश्वं धारयति। जलरूपिणी भवनाम्नी द्वितीयमूर्तिः समस्तजगतां जीवान् रक्षति।

बहिरन्तर्जगद्विश्वं व्याप्य तेजोमयी शुभा।
रौद्री रुद्राह्वया मूर्तिरास्थिताऽघोररूपिणी॥
स्पन्दयन् पवनो विश्वं बिभर्ति स्पन्दते स्वयम्।
उग्र इत्युच्यते सद्भिर्मूर्तिरुग्रस्य वेधसः॥(२२-२३)

रुद्रस्याघोररूपिणी शुभकरी तेजोमयी रुद्रनाम्नी मूर्तिर्जगतो बाह्यमाभ्यन्तरञ्च व्याप्य तिष्ठति। वेधा उग्रस्य पवनात्मकमूर्त्या विश्वमिदं स्पन्दयन् धारयति स्वयं च स्पन्दते, पण्डितस्तां मूर्तिम् उग्र इत्याख्ययाह्वयति।

सर्वावकाशदा सर्वव्यापिका गगनात्मिका।
मूर्तिर्भीमस्य भीमाख्या भूतवृन्दस्य भेदिका॥
सर्वात्मनामधिष्ठात्री सर्वक्षेत्रनिवासिनाम्।
मूर्तिः पशुपतेर्ज्ञेया पशुपाशनिकृन्तनी॥(२४।२५)

सर्वावकाशदायिका गगनमयी भीमस्य "भीम"नाम्नी मूर्तिः सर्वभूतानां भेदं साधयन्त्यखिलं विश्वं व्याप्य तिष्ठति। सर्वक्षेत्रनिवासिनः सर्वक्षेत्रज्ञस्य जीवात्मनोऽधिष्ठात्री पशुपतेः "पशुपति"नाम्नी षष्ठमूर्तिः पशूनामर्थाद् बद्धजीवानां पाशं छिनत्ति।

दीपयन्ती जगत्सर्वं दिवाकर-समाह्वया।
ईशानाख्या महेशस्य मूर्तिर्दिवि विसर्पति॥
आप्याययति यो विश्वममृतांशुर्निशाकरः।
महादेवस्य सा मूर्तिर्महादेवसमाह्वया॥(२६-२७)॥

निखिलजगतां प्रकाशिका दिवाकररूपा महेशस्य "ईशान"-नामिका मूर्तिराकाशे सूर्यरूपेण विराजते। तस्य च "महादेव"-नामिका मूर्तिश्चन्द्रस्य सुधांशुवर्षणेनाखिलभुवनानन्दोत्पादनं करोति।

आत्मनश्चाष्टमी मूर्तिः शिवस्य परमात्मनः।
व्यापिकेतरमूर्तीनां विश्वं तस्माच्छिवात्मकम्॥
वृक्षमूलस्य सेकेन शाखाः पुष्यन्ति वै यथा।
शिवस्य पूजया तद्वत् पुष्यत्यस्य वपुर्जगत्॥(२८-२९)



परमात्मनः शिवस्याष्टममूर्तिर्महादेवः स्वकीयापरसप्तमूर्तीनां व्यापकत्वेन विश्वं शिवात्मकं सम्पादयति। यथा वृक्षमूलसेचनेन फलपुष्पपत्रशाखादीनां पुष्टिर्जायते, तथा शिवपूजनेन तस्य जगद्रूपशरीरस्य पुष्टिर्जायते।

## (२) त्रयीनाममूर्तिभेदः

महाकाली यां श्वेतवर्णां नारीमसृजत्, सा निम्नोक्तनामभिः प्रसिद्धा,—(१) त्रयी, (२) विद्या, (३) कामधेनुः, (४) भाषा, (५) स्वरा, (६) अक्षरा चेति। एताः सर्वविद्याधिष्ठात्र्याः सरस्वत्या नामरूपभेदा एव। तत्र,—

"त्रयी"—ऋग्यजुः सामानि इति वेदत्रयस्याधिष्ठात्री देवी। उक्तञ्च **देवीपुराणे**,—

ऋग्यजुः सामभागेन साङ्गवेदगताऽपि वा।
त्रयीति पठ्यते लोके दृष्टादृष्टप्रसाधनी॥ (३७।६०)

दृष्टादृष्ट-फल-प्रदायिनी सा भगवती ऋग्यजुःसामेतिभागत्रयविभक्त-सषडङ्ग-सर्ववेदाधिष्ठात्रीत्वेन त्रयीति नाम्ना प्रसिद्धा।

"विद्या"—अष्टादशविद्याधिष्ठात्री देवी। उक्तञ्च **नारायणीस्तुतौ**, "विद्याः समस्तास्तव देवि भेदाः।" (**चण्डी** ११।६) हे देवि! सर्वा एव विद्यास्तव रूपविशेषा भवन्ति। सर्वविद्यारूपया मूर्त्या त्वमेवावस्थिता।

"कामधेनु"स्वरूपमुक्तं पञ्चदशश्लोके।

"भाषा"—अष्टादशभाषाधिष्ठात्री देवी वाग्देवता। शास्त्रीयाष्टादश भाषा, यथा, (१) प्राकृतम्, (२) संस्कृतम्, (३) उदीची, (४) महाराष्ट्री, (५) मागधी, (६) मिश्रार्धमागधी, (७) शकाभीरी, (८) आवन्ती, (९) द्राविड़ी, (१०) उड्रीया, (११) पाश्चात्या, (१२) प्राच्या, (१३) वाह्लीका, (१४) रन्तिका, (१५) दाक्षिणात्या, (१६) पैशाची, (१७) आवन्ती, (१८) सौरसेनी चेति। एतासां भाषाणां—प्राकृतलङ्केश्वरग्रन्थे लक्षणोदाहरणे उक्ते—

१। "स्वरा"—षोड़शस्वररूपा। षोड़श-स्वराणां प्रत्येकमेका शक्तिः। तासां नामानि यथा, (१) कीर्तिः, (२) कान्तिः, (३) तुष्टिः, (४) पुष्टिः, (५) धृतिः, (६) शान्तिः, (७) क्रिया, (८) दया, (९) मेधा, (१०) हर्षा, (११) श्रद्धा, (१२) लज्जा (१३) लक्ष्मीः, (१४) सरस्वती, (१५) प्रीतिः, (१६) रतिश्चेति। आसां **तन्त्रसारे** पृथग्ध्यानानि सन्ति।

२। "स्वरा"—**पद्मपुराणे**,—ब्रह्मणो ज्येष्ठायाः पत्न्याः गायत्र्याः सपत्नी। पद्मपुराणस्योत्तरखण्डे कार्तिकमाहात्म्ये (१५६ तमाध्याये) स्वराया विस्तृत-विवरणम् अस्ति।

"अक्षरा"—नित्या स्फोटरूपा व्यञ्जनरूपा वा। पञ्चत्रिंशद् व्यञ्जन-वर्णानामधिष्ठात्रीशक्तीनां नामानि यथा—(१) जया, (२) दुर्गा, (३) प्रभा, (४) सत्या, (५) चण्डा, (६) वाणी, (७) विलासिनी, (८) विजया, (९) विरजा, (१०) विश्वा, (११) विनदा, (१२) सुनदा, (१३) स्मृतिः, (१४) ऋद्धिः, (१५) समृद्धिः, (१६) शुद्धिः, (१७) भक्तिः, (१८) बुद्धिः, (१९) मतिः, (२०) क्षमा, (२२) रमा, (२२) उमा, (२३) मेदिनी, (२४) क्लिन्ना, (२५) वसुदा, (२६) वसुधा, (२७) परा, (२८) परायणा, (२९) सूक्ष्मा, (३०) सन्ध्या, (३१) प्रज्ञा, (३२) सुप्रभा, (३३) निशा, (३४) अमोघा, (३५) विद्युता चेति। आसां पञ्चत्रिंशद्व्यञ्जनशक्तीनां प्रत्येकं पृथक् पृथग् ध्यानमस्ति। षोड़श-स्वरशक्तीनां पञ्चत्रिंशद्व्यञ्जनशक्तीनां समष्टिरेकपञ्चाशद् वर्णशक्तय-

**स्तन्त्रसारे** कथिताः। ताः सर्वाः सर्वकामफलप्रदाः स्वस्वपतिसङ्गताः सहास्य-वदना विद्युत्कान्तयो द्विभुजाः पद्माभयमुद्राधारिण्यो भवन्ति। उक्तञ्च **तन्त्रसारे**—

एताः प्रियतमाङ्केषु निमग्नाः संस्मिताननाः।
विद्युद्दामसमाभाः स्युः पङ्कजाभयबाहवः॥इति॥

## (ग) महासरस्वत्या मिथुनसृष्टिः

सरस्वती स्त्रियं गौरीं कृष्णञ्च पुरुषं नृप।
जनयामास नामानि तयोरपि वदामि ते॥(२२)

हे राजन्! महासरस्वती गौरवर्णा स्त्रियमेकां कृष्णवर्णं पुरुषञ्चैकं जनयामास। तयोर्नाम तुभ्यं वदामि। स्त्रियं गौरीं गौरवर्णाम् "उमा"-देवीं, कृष्णं च पुरुषं विष्णुमुत्पादयामास।

विष्णुः कृष्णो हृषीकेशो वासुदेवो जनार्दनः।
उमा गौरी सती चण्डी सुन्दरी सुभगा शिवा॥२३॥



सः कृष्णवर्णः पुरुषो विष्णुः कृष्णो हृषीकेशो वासुदेवो जनार्दनश्चेति। सा गौरवर्णा स्त्री उमा, गौरी, सती, चण्डी, सुन्दरी, सुभगा शिवा चेति।

## (३) विष्णोर्नाममूर्त्तिभेदः

"विष्णुः"—(१) निरुक्तकारो यास्कोऽवदत्—"विष्णुर्विशतेर्वा व्याप्नोतेर्वा। विष्णु-शब्दः प्रवेशार्थक—"विश्" धातुतोऽथवा व्याप्तिबोधक—"वि-अशू" धातुतो निष्पन्नः। यः सर्वत्र प्रविष्टत्वेन, व्यापकत्वेन वाऽऽस्ते स एव विष्णुः। सर्वव्यापकः परमेश्वरो विष्णुपदवाच्यः। ऋग्वेदे विष्णोः सूक्त-संख्या पञ्चष-संख्यातो नाधिका। परन्तु तेषां सूक्तानां भावगाम्भीर्यं तात्त्विक-दृष्टितोऽतीव गुरुत्वपूर्णम्। ऋग्वेदीयवर्णनायां विष्णोरेकं प्रधानतमं विशेषत्वं हि तदीयस्त्रिपादविक्षेपः। यास्काचार्येणोक्तम्—"विष्णुर्विचक्रमणात्" इति। यश्चरणविस्तारपूर्वकं विश्वं परिव्याप्नोति स्म, स एव "विष्णुः"। (ऋ, १।२२।१७)

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्।

समूढमस्य पांसुरे॥

तथा च सर्वव्यापी विष्णुः सर्वजगदुद्दिश्य यदा चरणविस्तारमकरोत्, तदा स पृथिव्यन्तरीक्षस्वर्लोकेषु त्रिधा चरणक्षेपमकरोद् यथा तदीयधूलिकणायुक्तपदप्रान्ते समग्रं जगदन्तर्भुक्तमासीत्। ऋग्वेदभाष्यकारो माधवाचार्यः, छान्दोग्यमन्त्रभाष्यकारो भट्टगुणविष्णुः, वेदभाष्यकारः सायणाचार्यश्चावदत्,—"त्रेधा निदधे पद" मित्यनेन विष्णोर्वामनावतारः सूचितः। वामनरूपी विष्णुस्त्रिपादक्षेपेण सर्वं भूर्भुवःस्वर्लोकमजीजयत्। एतद्विवरणं शतपथ-तैत्तिरीयैतरेयब्राह्मणानां स्थाने स्थाने उल्लिखितम्।

निरुक्तकारस्य और्णवाभस्य मतेनादित्यरूपिणो विष्णोः प्रातराकाशे उदयो माध्यन्दिनाकाशेऽवस्थितिः सायमस्ताचले गमनमेव त्रिपादविक्षेप इत्युक्तः। निरुक्तकारस्य शाकपुणेर्मतेनादित्यरूपी विष्णुः पृथिव्यामग्निरूपेण, अन्तरीक्षे विद्युद्रूपेण तथा द्युलोके सूर्यरूपेण चावतिष्ठते। एष एव विष्णोस्त्रिपादविक्षेपः।

ऋग्वेदस्य १।२२।२० मन्त्रे ऋषिर्मेधातिथिरवदत्—अत्र वयं बहिराकाशे सूर्यं यथा सुस्पष्टं पश्यामस्तथा ज्ञानिनोऽप्यन्तराकाशे विष्णोः परं पदं जाज्वल्यमानं नित्यं पश्यन्ति।

तद्विष्णोः परमं पदं सदा पश्यन्ति सुरयः।
दिवीव चक्षुराततम्।

विष्णुपुराणे,—दिवीव चक्षुराततं योगिनां तन्मयात्मनाम्।
विवेकज्ञानदृष्टञ्च तद्विष्णोः परमं पदम्॥(२।८।९८)

तथा हि, यद् आकाशे प्रकाशमानं सूर्यरूपं चक्षुरिव सर्वभासकं, तन्मयात्मानो, योगिनो विवेकज्ञानबलाद् यस्य साक्षात्कारं लभन्ते, तदेव विष्णोः परमं पदम्।

(२) विष्णोर्नामनिरुक्तिविषये आचार्यः शङ्करोऽवदत्—विषेर्व्याप्त्यभिधायिनो नुक् प्रत्ययान्तस्य रूपं विष्णुरिति देशकालवस्तुपरिच्छेदशून्य इत्यर्थः। यथा **श्रुतिः**—

"अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः।" (४६) (नारायणोपनिषद्) विशतेर्वा ष्णुक्प्रत्ययान्तस्य रूपं विष्णुरिति। **विष्णुपुराणे**—

यस्माद्विष्टमिदं सर्वं तस्य शक्त्या महात्मनः।
तस्माद्विष्णुरिति ख्यातो विशेर्वतोः प्रवेशनात्॥

(१) कृष्णः—आचार्यशङ्करेण विष्णुसहस्रनामभाष्ये उक्तं, सच्चिदानन्दात्मकः कृष्ण इति।

कृषिर्भूवाचकः शब्दो णश्चनिवृत्तिवाचकः।
विष्णुसद्भावयोगाच्च कृष्णो भवति शाश्वतः॥
(**महाभारते** उद्योगपर्वणि, ७०।५)

कृष्धातोरर्थः सत्ता, न-शब्दार्थ आनन्दः। सनातनो विष्णुः सद् आनन्दस्वरूपत्वाच्च कृष्ण इत्यभिहितः।

(२) **गोपालतापन्युपनिषदि** कृष्णनामतात्पर्यमुक्तम्—प्रारब्धानि सञ्चितानि पापानि कर्षयति नाशयति पापं चित्तमपि स्वलीलायामाकर्षतीति "कृष्णः"।

(१) "हृषीकेशः"—हृषीकाणि इन्द्रियाणि, तेषाम् ईशः क्षेत्रज्ञरूपभाक् (शङ्कराचार्यः)। हृषीकाणि विषयेन्द्रियाणि तेषामीश्वरो नियन्तृत्वेन भगवान् विष्णुहृषीकेशनाम्नाऽभिहितः, क्षेत्रज्ञरूपेण स इन्द्रियाणि परिचालयति।



(२) सूर्यरूपस्य चन्द्ररूपस्य च तस्य जगत्प्रीतिकरा हृष्टाः केशा इव रश्मयः स "हृषीकेशः"। "हृषी" आनन्ददायकाः केशाः किरणानि। सूर्यचन्द्ररूपस्य निजविभूतिसमूहस्य किरणैः सर्वेषामानन्ददातृत्वेनायं हृषीकेशः। **महाभारतस्य** शान्तिपर्वणि, (३४३।६२-६३)—

सूर्याचन्द्रमसोः शश्वदंशुभिः केशसंज्ञितैः।
बोधयन् स्वापयंश्चैव जगदुत्तिष्ठते पृथक्॥
बोधनात् स्वापनाच्चैव जगतो हर्षणं भवेत्।
अग्नीषोमकृतैरेवं कर्मभिः पाण्डुनन्दन॥
हृषीकेशोऽहमीशानो वरदो लोकभावनः॥

"वासुदेवः"—वसति, वासयति-आच्छादयति स्वयं सर्वमिति वा वासुः। दीव्यति क्रीड़ते विजिगीषते व्यवहरति द्योतते सूयते कामयते गच्छति वा इति देवः। वासुश्चासौ देवश्चेति वासुदेवः (**विष्णुसहस्रनाम-शाङ्करभाष्यम्**)।

छादयामि जगद्विश्वं भूत्वा सूर्य इवांशवः।
सर्वभूताधिवासश्च वासुदेवस्ततः स्मृतः॥

वसनात् सर्वभूतानां वसुत्वाद्देवयोनितः।
वासुदेवस्ततो ज्ञेयो योगिभिस्तत्वदर्शिभिः॥

तथाहि,––यथा सूर्यः किरणसमूहैर्जगदाच्छादयति, तद्वदहमपि समग्रं जगदाच्छाद्य तिष्ठामि। एवं सर्वभूतानामधिवासः, अतोऽहं "वासुदेव" इति कथ्ये। उक्तञ्च **विष्णुपुराणे**––

सर्वत्रासौ समस्तञ्च वसत्यत्रैव वै यतः।
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते॥(१।२।१२)

तथा चेह जगति सर्वत्रासौ वर्तते, तस्मिंश्च समस्तं जगत्प्रतिवसति; अतएव विद्वांसस्तं "वासुदेव" इति वदन्ति।

"जनार्दनः"––जनान् दुर्जनान् अर्दयति हिनस्ति नरकादीन् गमयतीति वा "जनार्दनः"। जनैः पुरुषार्थम् अभ्युदयमपवर्गलक्षणं याच्यत इति वा जनार्दनः। (**विष्णु-सहस्रनामस्तोत्रस्य शाङ्करभास्यम्**)।



## उमा-नाममूर्तिभेदः

उमा-गौरी-सती-चण्डी-सुन्दरी-सुभगा-शिवा-प्रभृति नाम–समूहस्य तात्पर्यं निरूप्यते। **योगवाशिष्ठे**––

(१) "उमा"––"ॐकारसारशक्तित्वादुमेति परिकीर्तिता।"
(६(२)८४।११)

यथा प्रणवस्य सारशक्तित्वेनास्या नाम 'उमा' इति। (उ-म-आ), तथा (अ-उ-म स्त्रियाम्-आ=ॐ)।

सुप्तानामथ बुद्धानामामात्रोच्चारणाद्धृदि।
नित्यं त्रैलोक्यभूतानामुमेतीन्दुकलोच्यते॥(तत्रैव १४)

तथा च, सुप्तः प्रबुद्धो वा निखिलप्राणिनां हृदयेषु "अनाहतनादरूपेण, आकारादिमात्रात्रितयशून्य-शब्दब्रह्मनामकप्रणवस्य नादभागोच्चारणमनेन सम्पद्यते; एवं हृत्पद्मान्तर्वर्त्यंगुष्ठप्रमाण-छिद्रस्थ-लिङ्गरूपिणो दहरनाम्नःशिवस्य शिरोभूषणबिन्दुरूपा इन्दुकला च। अत उमेति प्रसिद्धा।

(२) शक्ति-रहस्यविदां मते "उमा" देवी प्रणवः। **लिङ्गपुराणे** परमशिवो देवीमकथयत्,—

अकारोकारमकारा मदीये प्रणवे स्थिताः।
उकारञ्च मकारञ्च अकारञ्च क्रमेरितम्।
तदीयं प्रणवं विद्धि त्रिमात्रं प्लुतमुत्तमम्॥

मम प्रणवे (ॐ) अकार उकारो मकारश्चावस्थिताः। एवम् उकारो मकारोऽकारः इतिक्रमेणोच्चारितस्त्रिमात्रायुक्त उत्तमप्लुतः "उमा" शब्दस्तदीयं प्रणवं जानीहि।

(३) उः उत्तमा च सा मा चित्तवृत्तिश्चेति वा। उ उत्तमा मा चित्तवृत्तिः, उत्तमचित्तवृत्तेर्नाम "उमा" इति। (**सौभाग्यभास्करः**)

परानुभूतिं भवपाशनाशिनीं
सदाशिवस्याप्यतिशोभनाद्याम्।
उमाभिधामुत्तमचित्तवृत्तिं
नमामि नानाविधलोकवैभवम्॥(**सूतसंहितायाम्**)



तथाहि,—सा परानुभूतिर्भवपाशच्छेदनमकरोत्। या सदाशिवस्य पक्षे अतिशोभना, या च सर्वलोकानामैश्वर्यस्वरूपा, तामुत्तमां चित्तवृत्तिमुमां प्रणमामि।

(४) शिवसूत्रमतेन शिवत्वप्राप्त्यर्थं योगिनां या प्रचण्डेच्छाशक्तिः, सा कुमारी "उमा" नाम्नाऽभिहिता।

"इच्छाशक्तिरुमा कुमारी" (**शिवसूत्रम्** १।१३)

टीकाकारेण क्षेमराजेनोक्तम्—

परभैरवतामुक्तां ग्रसमानस्य शाश्वतीम्।
तस्यैव योगिनो येच्छाशक्तिस्तां निगदन्त्युमाम्॥

(५) पौराणिका भगवत्या "उमा" नामधारणस्य कारणं निर्धारयन्ति। उ इत्यामन्त्रणे, मा इति निषेधे। बाल्ये तपस्यन्ती भगवती मात्रा आमन्त्र्य निषिद्धा इति "उमा" वा (**सौभाग्यभास्करः**) बाल्यकाले भगवती यदा

शिवं पतित्वेन प्राप्तुं कृच्छ्रां तपस्यां कर्तुं वनगमनमैच्छत्, तदा माता मेनका (उ! मा तपस्यां कुरु) इत्यनेन निषिद्धत्वाद् "उमा" इति कथ्यते। उक्तञ्च **कालिकापुराणे**—

यतो निरस्ता तपसे वनं गन्तुं तु मेनया।
उमेति, तेन सोमेति नाम प्राप तदा सती॥

महाकविकालिदासेन लिखितम्—

उ मेति मात्रा तपसो निषिद्धा
पश्चादुमाख्यां सुमुखी जगाम (**कुमारसम्भवम्** १।२६)

सामवेदस्य केनोपनिषदि प्रथमतो हैमवत्या उमायाः परिचय उक्तः—देवराड़िन्द्रः प्रथमं कथं ब्रह्मविद्यारूपिणीं ब्रह्मशक्ति हैमवतीमुमां दृष्ट्वा धन्योऽभवत्, तत् सर्वं केनोपनिषदि (१४-२८)मन्त्रे संक्षेपेणोक्तम्। तदाख्यानमग्रे वर्णितम्।

भाष्यकारेण शङ्कराचार्येण उमा ब्रह्मविद्येति व्याख्याता। सा ब्रह्मविद्या हैमवतीरूपेण स्वर्गता सती दैववाणीमकरोत्। इन्द्रश्च दैववाणीश्रवणानन्तरं मायाबीजं (ह्रीं) मन्त्रं जपन् निराहारः समाहितचित्तः सुदीर्घकालं यावत्तपस्यारतोऽभवत्। ततोऽकस्माच्चैत्रमासीयशुक्लनवम्यान्तिथौ मध्याह्नसमये इन्द्रसम्मुखेऽत्युज्ज्वलं तेजोमण्डलं प्रकाशितम्बभूव। एवं क्रमशस्तत्तेजोमण्डलमध्यान्मङ्गलमयी कुमारीमूर्तिरेकाऽऽविर्भूताऽभवत्।

**हैमवत्या उमायाः स्वरूपम्,—**

तेजोमण्डलमध्ये तु कुमारीं नवयौवनाम्।
भास्वज्जवाप्रसूनाभां कोटिबालरविप्रभाम्॥
बालशीतांशुमुकुटां वस्त्रान्तर्व्यञ्जितस्तनीम्।
चतुर्भिर्वरहस्तैस्तु वरपाशांकुशाभयाम्॥
(**देवीभागवतम्** १२।८।५२-५३)

तथाहि,—इन्द्रस्तत्तेजोराशिमध्ये नवयौवनामेकां कुमारीमूर्तिमपश्यत्। तस्याः शरीरकान्तिर्नवोदितकोटिसूर्यवज्जवाकुसुमरक्तवर्णा। सा चन्द्रशेखरा, वस्त्राच्छादितेनापि वहिर्व्यञ्जितस्तनयुगलेनातिशोभान्विता, चतुर्षु हस्तेषु पाशांकुशवराभीतिमुद्राधारिणी।

निर्व्याज-करुणामूर्तिं सर्वकारणकारणम्।
दर्दश वासवस्त प्रेमगद्गदितान्तरम्॥५८॥

इन्द्रस्तत्र सम्मुखे सर्वकारणानां कारणरूपाम् अमलकरुणामूर्तिं सर्वमङ्गलमयीं हैमवतीमुमां दृष्ट्वा प्रेमगद्गदचित्तां देवीं प्रणम्यावदत्,—"हे देवि सुशोभने! भवती किं परममहत्तत्तेजःपुञ्जरूपो यक्षः? कृपया तवाविर्भावकारणं कथय।"

इति कामरूपान्तर्वर्ति-श्रीमदुग्रतारामहापीठाध्यक्षश्रीचक्रेश्वरभट्टाचार्यसङ्कलिते **शाक्तदर्शने** विश्वनिरूपको नाम द्वितीयः परिच्छेदः।

---



# तृतीयः परिच्छेदः

### इन्द्रं प्रति हैमवत्युमाकथितं ब्रह्मतत्त्वम्

देवीभागवते,—

रूपं मदीयं ब्रह्मैतत् सर्वकारणकारणम् ।
मायाधिष्ठानं भूतन्तु सर्वसाक्षि निरामयम् ।।६२।।

हैमवत्युमाऽवदत्, "हे इन्द्र ! त्वं मदीयं यद् रूपं दृष्टवानसि, तन्ममैव परब्रह्मरूपम् । तच्च सर्वकारणानामपि कारणस्वरूपम् । तन्मध्ये त्रिगुणात्मिका माया साम्यावस्थात्वेनावतिष्ठते । सा सर्वसाक्षिरूपा, सर्वोपरि विनिर्मुक्ततया च निरामया ।

निर्गुणं सगुणं चेति द्विधामद्रूपमुच्यते ।
निर्गुणं मायया हीनं सगुणं मायया युतम् ।।७५।।
साहं सर्वं जगत् सृष्ट्वा तदन्तः संप्रविश्य च ।
प्रेरयाम्यनिशं जीवं यथाकर्म यथाश्रुतम् ।।७६।।
सृष्टि-स्थिति-तिरोधाने प्रेरयाम्यहमेव हि ।
ब्रह्माणञ्च तथा विष्णुं रुद्रं वै कारणात्मकम् ।।७७।।



मम हि सगुणनिर्गुणभेदेन रूपद्वयम् । या मायातीता सा निर्गुणा; या च मायान्तर्गता सा सगुणेति कीर्त्यते । अहमेवेदं विश्वसंसारं सर्वं सृष्ट्वा तन्मध्येऽन्तर्यामित्वेन प्रविश्य सर्वजीवानां निरन्तरं स्वस्वकर्मणो वेदविधानानुरूपं फलं तेभ्यः प्रयच्छामि । किमधिकेनाहमेव ब्रह्माणं विष्णुं कारणाभिमानिनं रुद्रमप्यस्य विश्वसंसारस्य सृष्टि स्थितिलयकार्ये नियोजयामि । अतः परं देवी इन्द्रं प्रति तस्याः प्रादुर्भावकारणमुक्तवती !

मत्प्रसादाद्भवद्भिस्तु जयो लब्धोऽस्ति सर्वथा ।
युष्मानहं नर्तयामि काष्ठपुत्तलिकोपमान् ।।७९।।
कदाचिद्देवविजयं दैत्यानां विजयं क्वचित् ।
स्वतन्त्रा स्वेच्छया सर्वं कुर्वे कर्मानुरोधतः ।।८०

मत्प्रसादाद् यूयं जयलाभं कुरुथ। अहमेव युष्मान् काष्ठपुत्तलिकावन्नर्तयामि। अहमेव कदाचिद्देवविजयं कदाचिच्च दैत्यविजयं विदधामि। स्वतन्त्राहं जीवानां कर्मानुसारतः स्वेच्छया सर्वं सम्पादयामि।

तां मां सर्वात्मिकां यूयं विस्मृत्य निजगर्वतः।
अहङ्कारावृतात्मानो मोहमाप्ता दुरन्तकम्॥८१॥
अनुग्रहं ततः कर्तुं युष्मद्देहादनुत्तमम्।
निःसृतं सहसा तेजो मदीयं यक्षमित्यपि॥८२॥

यूयं गर्ववशतः सर्वात्मिकां मां विस्मृत्य स्वयं कर्तेत्यहङ्कारं कृतवन्तः सन्तो दुर्दान्तमोहे निपतिता आसन्। अत एव भवतामनुग्रहाय युष्मत्शरीरेभ्यो मदीयं तैजसांशं सहसा बहिष्कृत्याहमेव तेजोमययक्षरूपेणाविर्भूतोऽभवम्। तदुक्तं **देवीभागवते,**—

"अतः परं सर्वभावैर्हित्वा गर्वन्तु देहजम्।
मामेव शरणं यात सच्चिदानन्दरूपिणीम्॥८३(१२।८ म अः)

अतः परं सर्वप्रकारं देहाभिमानं परित्यज्य सच्चिदानन्दरूपिणीं मामेव शरणं व्रजत। इति।



(१) उमा नामनिरुक्तिर्द्वितीयपरिच्छेदे व्याख्याता।
(२) गौरी-गौराङ्गिणीत्वादित्यग्रे वक्ष्यते।
(३) चण्डी-च ण्डमूर्तिःकोपनस्वभावा।
(४) सती-विषये **देवीभागवते** एवमुक्तम्, यथा—

मङ्गलायान्तु जातायां जातं सर्वत्र मङ्गलम्।
तस्या नाम सतीं चक्रे सत्यत्वात्परसंविदः॥(७।३०।२२)

जगज्जीवानां जन्ममृत्युनिवारणकारिण्या देव्या जगन्मङ्गलाया दक्षालये जन्मग्रहणानन्तरं सर्वत्र मङ्गलसंचारोऽभवत्। सा परब्रह्मस्वरूपिणी देवी सत्यस्वरूपिणीत्वेन तत्त्वज्ञानिनो मुनयस्तस्याः "सती"ति नामकरणमकुर्वन्त।

(५) सुन्दरी—त्रिपुरसुन्दरी। कालिकापुराणे भगवत्यास्त्रिपुरायास्त्रिविधरूपवर्णना दृश्यते,—

सिन्दूरपुञ्जसंकाशां त्रिनेत्रान्तु चतुर्भुजाम्।
वामोर्ध्वे पुष्पकोदण्डं धृत्वाधः पुस्तकं तथा॥

दक्षिणोर्ध्वे पञ्चवाणानक्षमालां दधात्यधः।
चतुर्णां कुणपानान्तु पृष्ठेऽन्यं कुणपान्तरम्॥
निधाय तस्य पृष्ठे तु समपादेन संस्थिताम्।
जटाजूटार्धचन्द्रेण समाबद्धशिरोधराम्॥
नग्नां त्रिबलिभेदेन चारुमध्यां मनोहराम्।
सर्वालङ्कारसम्पन्नां सर्वाङ्गसुन्दरीं शुभाम्॥
स्रवद्द्रविणसन्दोहां सर्वलक्षणसंयुताम्।
एनान्तु प्रथमं ध्यात्वा त्रिधात्मानन्तु चिन्तयेत्॥
(६३।८५-८६)

त्रिपुरादेवी, सिन्दूर-सङ्काशा, त्रिनेत्रा, चतुर्भुजा, वामोर्ध्वहस्ते पुष्पधनुर्वामाधोहस्ते पुस्तकं दक्षिणोर्ध्वहस्ते पञ्चवाणान् तदधोहस्तेऽक्षमालां धारयन्ती चतुःशवपृष्ठोपरि शवं संस्थाप्य तस्य पृष्ठे समपादेन दण्डायमाना। जटाजूटार्धचन्द्रेण समाबद्धकेशा, नग्ना, बलित्रयशोभितमध्या, मनोहरा, सर्वालङ्कारभूषिता, सर्वाङ्गसुन्दरी, शुभधनवितरणकारिणी च। सर्वलक्षणसम्पन्नामेनां मूर्तिं प्रथमं ध्यात्वात्मानं त्रिधा चिन्तयेत्। त्रिपुरोपनिषदि, त्रिपुरातापिन्युपनिषदि च भगवत्यास्त्रिपुरसुन्दर्याः स्वरूपं साधनरहस्यञ्च वर्णितम्।

(६) सुभगा—श्री-काम-महिमा-वीर्य-यत्न-कीर्त्यादयो भगपदवाच्याः। शोभनो भगो यस्याः सा सुभगा (सौभाग्यभास्करः)। यत्र भगपदवाच्याः शोभना गुणसमूहा वर्तन्ते, सा "सुभगे"ति नम्ना कीर्तिता। अथर्ववेदे सौभाग्यकाण्डे पराशक्तिर्जगज्जननी "सुभगा" नाम्नीति कथ्यते। ऋग्वेदे इन्द्रमाहात्म्यं कथितम्। अथर्ववेदस्य "सुभगा"सूक्ते इन्द्रजननी-पराशक्ति-"सुभगा"-देव्या माहात्म्यं तारस्वरेण कीर्तितम्। सुभगासूक्तमथर्ववेदे,—

सिंहे व्याघ्र उत या पृदाकौ त्विषिरग्नौ ब्राह्मणे सूर्ये वा।
इन्द्रं या देवी सुभगा जजान सा न एतु वचसा संविदाना॥
(६।३८।१)

या सिंहे व्याघ्रे सर्पे तेजोरूपेण (त्विषिः) अवस्थिता, या अग्नि-ब्राह्मण सूर्येषु च तेजोरूपेण प्रकाशिता, या सुभगा देवी इन्द्रं जनयति सा ज्योतिर्मयीरूपेणास्मभ्यमाविर्भवतु।

या हस्तिनि द्वीपिनि या हिरण्ये त्विषिरप्सु गोषु या पुरुषेषु।
इन्द्रं या देवी सुभगा जजान सा न एतु वचसा संविदाना॥
(६।३८।२)

या हस्तिनि व्याघ्रे च स्वर्णे जले गोषु मनुष्येषु च तेजोरूपेण विराजिता, या सुभगा देवी इन्द्रं जनयति, सा सुभगा देवी ज्योतिर्मयीरूपेणास्मभ्यमाविर्भवतु।

या देवी सर्वभूतेषु शक्तिरूपेण संस्थिता।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः ।। (**चण्डी**)
(७) शिवा––मङ्गलदायिनीत्वादिति।
एवं युवतयः सद्यः पुरुषत्वं प्रपेदिरे।
चक्षुष्मन्तोनुपश्यन्ति नेतरेऽतद्विदो जनाः ।।२४।।

मिथुनत्रयसृष्टिकरणान्तरं युवतयः (महाकाली, महालक्ष्मीर्महासरस्वती च) अकस्मात्पुरुषत्वमवाप। तत्तु ज्ञानिन एव पश्यन्ति, अतत्त्वज्ञा जना न पश्यन्ति। "एवं मिथुनत्रयं सृष्ट्वा" (गुप्तवती)। मिथुनत्रयं यथा (१) महालक्ष्मीतो ब्रह्मसृष्टिः तथा श्रीसृष्टिः, (२) महाकालीतो रुद्रसृष्टिस्तथा त्रयीसृष्टिः, (३) महासरस्वतीतो विष्णुसृष्टिस्तथा गौरीसृष्टिः।

एतन्मिथुनत्रयं सृष्ट्वा तेषां विवाहार्थं कन्यादातृदम्पतीप्रयोजनत्वेन पुरुषान्तराभावात्, महालक्ष्मीमहाकालीमहासरस्वत्यः प्रत्येकैका स्वयं द्वे द्वे रूपे प्रकृतिपुरुषात्मके धारयतीति तात्पर्यम्।



"पुरुषत्वं प्रपेदिरे" पुरुषत्वं महालक्ष्मीः ब्रह्मत्वं, महाकाली रुद्रत्वं, महासरस्वती च विष्णुत्वं प्रपेदे इत्यर्थः (गुप्तवती)। अर्थात् स्वस्वनारीमूर्ति संरक्षति पुरुषमूर्तिमपि धारयति।

"चक्षुष्मन्तोनुपश्यन्ति", एतद्धि युवतीत्वपुरुषत्वयोर्युगपत् सिद्धिः चर्मचक्षुषोऽदृश्यम्। तत्त्वज्ञानेन दिव्यं चक्षुर्लब्ध्वा तेनैव द्रष्टुं शक्यते।

"**ब्रह्ममिथुन-विष्णुमिथुन-शिवमिथुनानि**"

ब्रह्मणे प्रददौ पत्नीं महालक्ष्मीर्नृप त्रयीम्।
रुद्राय गौरीं वरदां वासुदेवाय च श्रियम् ।।२५।।

हे राजन्! महालक्ष्मीर्ब्रह्मणे त्रयीं, रुद्राय गौरीम्, एवं वासुदेवाय श्रियं पत्नीत्वेन प्रददौ।

तत्र स्वस्वपत्न्या सह ब्रह्मा सृष्टयधिकारं, विष्णुः पालनाधिकारं, रुद्रश्च संहाराधिकारं प्राप्तवान्। (ब्रह्मा स्वपत्न्या त्रय्यां सरस्वत्या सह सृष्टयधि-

कारं, विष्णुः स्वपत्न्या श्रिया लक्ष्म्या सह पालनाधिकारं, रुद्रश्च स्वपत्न्या गौर्या सह संहाराधिकारं प्राप्तवानिति बोद्धव्यम्।)

"त्रयी"—महाकालीत उत्पन्नत्वेन कर्मणा तमोमयी महाकाली "सितां स्त्रियं" श्वेतवर्णां स्त्रियमुत्पादयति। एतेन त्रयीरूपेण सत्त्वमयीति प्रतिपादिता। अतएव त्रय्यां तमःसत्त्वगुणयोः साम्यं सूचितम्।

"ब्रह्मा"—महालक्ष्मीत उत्पन्नत्वेन, "हिरण्यगर्भा"भिधानेन च स्वरूपतः कर्मतश्च रजोगुणप्रधानः सूचितः।

"श्री"र्लक्ष्मीर्वा ब्रह्मसदृशी रजोगुणप्रधाना।

"विष्णुः"—महासरस्वतीत उत्पन्नत्वेन कर्मणा सात्त्विकः।

"कृष्णञ्च पुरुषम्"—महासरस्वत्याः कृष्णवर्णपुरुषोत्पादनाद् विष्णुस्तमोरूपस्तमोमयः। अतएव विष्णौ सत्त्वतमोगुणयोः समत्वं विद्यते।

"गौरी"—महासरस्वतीतो जातत्वेन "सरस्वती स्त्रियं गौरी"मित्युक्तत्वेन च रूपेण कर्मणा च सत्त्वमयी। अतएव गौर्यां सत्त्वगुणस्य द्वैगुण्यं विद्यते।

"रुद्रः"—महाकालीतो जातत्वेन कर्मणा तमोमयः, "श्वेताङ्ग"मित्युक्तत्वेन रूपेण सत्त्वमयः। अतएव रुद्रे सत्त्वतमोगुणयोः साम्यं विद्यते।

अतएव "ब्रह्मा त्रयी चे"ति ब्रह्ममिथुने सत्त्वमेकगुणं, रजो द्विगुणं, तमश्च त्रिगुणं विद्यते। "विष्णुर्लक्ष्मीश्चे" ति विष्णु-मिथुने सत्त्वमेकगुणं, रजो द्विगुणं, तमश्चैकगुणं विद्यते। "रुद्रो गौरी चे"ति शिवमिथुने सत्त्वं त्रिगुणं, रजो नास्ति, तमश्चैकगुणं विद्यत इति (नागोजीभट्टः)।

### ब्रह्ममिथुनयोर्जगत्सृष्टिरहस्यम्

स्वरया सह सम्भूय विरिञ्चोऽण्डमजीजनत्।
विभेद भगवान् रुद्रस्तद् गौर्या सह वीर्यवान्॥२६॥

ब्रह्मा सरया सरस्वत्या सह मिलित्वा "अण्डमेकपादयत्। महावीर्यशाली भगवान् रुद्रो गौर्या सह तदण्डं द्विखण्डमकरोत्।

इत्थं परस्परविवाहे सञ्जातेऽनन्तरां सृष्टिमाह स्वरयेति। ब्रह्मा त्रयी च, विष्णुर्लक्ष्मीश्च, रुद्रो गौरी चापि परस्परविवाहं सम्पाद्य यां सृष्टिमकुर्वन्

तामाह्--इदञ्च मिथुनत्रयं, ब्रह्ममिथुन-विष्णुमिथुन-शिवमिथुनानि कारणदेह-सूक्ष्मदेह-स्थूलदेहानामभिमानीनि, इति तापनीयोपनिषदादौ स्पष्टमेवोक्तम्।

"स्वरया सह...अजीजनत्"--पूर्वकल्पे यो विरिञ्चिः स स्वरया शक्त्या सह युक्तः सन् प्रलयकाले सर्वप्राणिकर्मवृन्दं स्वाधिष्ठितमेकत्राण्डरूपं कृत्वा सुषुप्तौ संस्थाप्य स्वयं लीयते इत्येतदभिप्रायेण आह-स्वरया इत्यनेन--अजीजनत् पूर्वकल्पे, इत्यर्थः। अर्थात् पूर्वकल्पे यो विरिञ्चिः (ब्रह्मा) स स्वरानाम्ना शक्त्या सह युक्तः सन् प्रलयकाले स्वाधिष्ठितानां सर्वप्राणिनां कर्मराशिमेकत्राण्डरूपं कृत्वा, सुषुप्तौ स्थापनपूर्वकं स्वयं तत्र लीनोऽभवत्।

"विभेद भगवान्......वीर्यवान्।" तत्र सुषुप्तेरभिमानी गौरीसहितो रुद्रोऽस्मिन् कल्पे प्रलय-चरम-काले नामरूपविवेचन-रूपभेदेन सुषुप्तौ लीनं तदण्डं विभेदेत्यमुमर्थमाह-विभेदेति। प्रलयावसाने पुषुप्त्यभिमानिनी देवता गौरी रुद्रेण सह मिलिताऽभवत्। एवमवस्थो रुद्रः सुषुप्तौ लीनमण्डं विभेद, नामरूपभेदेन पृथक् कृतवानित्यर्थः।

अण्डमध्ये प्रधानादिकार्यजातमभून्नृप।
महाभूतात्मकं सर्वं जगत् स्थावरजङ्गमम्॥२७॥

हे नृप सुरथ! तदण्डमध्ये प्रधानादिकार्यसमूहः पञ्चमहाभूतनिर्मितं सर्वं चेतनमचेतनं जगदुत्पन्नमभूत्।

"प्रधानादिकार्यजातम्"--तद् ब्रह्माण्डं प्रधानादिमूलप्रकृति-महदहङ्कारादि-क्रमेण सांख्यशास्त्रोक्ततत्त्वसमूहम् (गुप्तवती)। (१) मूलप्रकृतिर्वा प्रधाना (२) प्रकृतितो महत्तत्वम् (३) महत्तत्त्वतोऽहङ्कारः (४-१९) अहङ्कारत एकादशेन्द्रियाणि, पञ्चतन्मात्राणि च, एवं पञ्चतन्मात्रातः (२०-२४) पञ्चमहाभूतानि, सांख्यशास्त्रोक्तक्रमेण-चतुर्विंशतितत्त्वानि चोत्पन्नान्यभवन्। "षट्त्रिंशत्तत्त्व"मित्यागमैः सिद्धान्तितम्। "षट्त्रिंशत्तत्त्वानि विश्वम्" इति परशुरामकल्पसूत्रम् (१।४)। विश्वमिदं षट्त्रिंशत्तत्त्वात्मकम्। यथा--(१) शिवः (२) शक्तिः (३) सदाशिवः (४) ईश्वरः (५) विद्या (६) माया (७) अविद्या (८) कला (९) रागः (१०) कालः (११) नियतिः (१२) जीवः (पुरुषः) (१३) प्रकृतिः (१४) मनः (१५) बुद्धिः (१६) अहङ्कारः (१७) श्रोत्रं (१८) त्वक् (१९) चक्षुः (२०) जिह्वा (२१) घ्राणं (२२) वाक् (२३) पाणिः (२४) पायुः (२६) उपस्थः

(२७) शब्दः (२८) स्पर्शः (२९) रूपं (३०) रसः (३१) गन्धः (३२) आकाशः (३३) वायुः (३४) तेजः (३५) जलं (३६) पृथिवी—चैतानि षट्त्रिंशत्तत्त्वानि। जगत्येतत्-षट्त्रिंशत्तत्त्वेभ्यो बहिः पदार्थान्तरं नास्ति। तथ्यमिदं विस्तरेण वक्ष्यते।

### विष्णुमिथुनस्य जगत्पालनं शिवमिथुनस्य संहारश्च

पुपोष पालयामास तल्लक्ष्म्या सह केशवः।
संजहार जगत्सर्वं सह गौर्या महेश्वरः ॥२८॥

केशवो लक्ष्मीदेव्या सहास्य जगतः पोषणपालने करोति। महेश्वरो गौर्या सह सर्वं जगत् संहरते। "पुपोष पालयामास"—तदेव नामरूपाभ्यां व्याकृतं जगल्लक्ष्म्या सहितः केशवः पुपोष तदेव पालयामास।

"संजहार महेश्वरः"—तदेव पुनः प्रलयकाले गौर्या सह महेश्वरः स्व-सृष्टमेव जगत् संजहार।



महालक्ष्मीर्महाराज सर्वसत्त्वमयीश्वरी।
निराकारा च साकारा सैव नानाभिधानभृत्॥
नामान्तरैर्निरूप्यैषा नाम्ना नान्येन केनचित्॥

हे महाराज सुरथ! शुद्धसत्त्वमयीश्वरी महालक्ष्मीर्निकारा साकारा च। सा (साकाररूपेण) विविधनामानि धारयति। एषा महालक्ष्मीः (निराकाररूपेण) अन्यनाम्ना (सत्-चित्-आनन्द-स्वरूपलक्षणया) लक्षणीया। नान्येन केनापि नाम्ना लक्षणीया।

महालक्ष्मीर्निर्गुणाऽपि साकारा, सगुणरूपेण विविधनामरूपाणि धारयति। उक्तञ्च **प्राधानिकरहस्ये** चतुर्थश्लोके—"लक्ष्यालक्ष्यस्वरूपा सा व्याप्य कृत्स्नं व्यवस्थिता"।

"नाम्ना नान्येन केनचित्"—महालक्ष्मीर्निराकारा निर्गुणारूपेण केनापि नाम्ना वा प्रत्यक्षादिप्रमाणेन निरूप्या न भवति। सा अलक्ष्या। श्रुतावप्युक्तम्—"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह।" **तैत्तिरीयोपनिषत्** (२।४)।

## प्राधानिक-रहस्ये महालक्ष्मीतत्त्वम्

पुराणादौ तन्त्रशास्त्रे च लक्ष्मीदेवी द्विप्रकारेत्युच्यते। प्रथमतो महालक्ष्मीः। आद्या मूलप्रकृतिः, पराशक्तिः, परमेश्वरी, चण्डी, महामाया, अम्बिका, भगवती इत्यादिनामभिः कथ्यते। द्वितीया महालक्ष्मीस्त्रिगुणमयी परमेश्वर्या राजसी मूर्तिर्महिषासुरवधार्थमवतीर्णा। मार्कण्डेयपुराणे प्राधानिक रहस्ये महालक्ष्मीदेव्याः प्रथमस्वरूपं वर्णितम्। प्राधानिकरहस्यमते पराशक्तिर्महालक्ष्मीदेवीतः समस्तदेवदेवीनामुत्पत्तिस्तथा विश्वप्रपञ्चोत्पत्तिर्बभूव। सैव मूलप्रकृतिरथवा प्रधानप्रकृतिरन्यत् सर्वं विकृतिरथवा कार्यम्। देवीमाहात्म्ये वर्णित-महाकालीतो भ्रामरीपर्यन्तं दशावतारास्तुरीयमहालक्ष्मीदेव्या विभिन्नलीलाविलासमात्रम्। स्थूलं सूक्ष्मं, दृश्यमदृश्यं, व्यक्तमव्यक्तम् इत्येवंक्रमेण सर्वं तस्याः स्वरूपं सा खलु सर्वव्यापिका। अस्ति-भाति-प्रिय-नामरूपाणि च सर्वमेवैषा। सच्चिदानन्दमयी परमेश्वरी महालक्ष्मीः सूक्ष्मरूपेण सर्वत्र विद्यमानापि भक्तानुग्रहाय परमदिव्य-चिन्मयी सगुण-रूपेण सा सर्वदा विराजिता। तस्याः श्रीविग्रहकान्तिसुप्तकाञ्चनवदत्युज्ज्वला। सा चतुर्भुजे मातुलुङ्गं, गदां, खेटकं, पानपात्रञ्च धारयति। मस्तके नागं, लिङ्गं, धारयति। चतुर्भुजा त्रिगुणमयी महालक्ष्मीः क्रमशस्तमोगुण-सत्त्वगुणोपाधिना स्वीयव्यष्टिरूपद्वयं प्रकटयति। ते च यथाक्रमं महाकालीमहासरस्वतीनामभ्यां प्रसिद्धे। प्राधानिकरहस्योक्तमहाकालीमहासरस्वतीतो वैकृतिकरहस्योक्तमहाकाली महासरस्वती च स्वरूतोऽभिन्नापि कार्यतो भिन्ना, आसां ध्यानानि च भिन्नान्येव। वैकृतिक-महालक्ष्मीः महाकाली महासरस्वती च प्रत्येकमेकं स्त्रीपुंमिथुनमुत्पादयति। महालक्ष्मीतो ब्रह्मलक्ष्म्यौ, महाकालीतो रुद्रसरस्वत्यौ, महासरस्वतीतो विष्णुगौर्यौ च प्रादुर्बभूवुः। प्रधानमहालक्ष्मीदेव्या निर्देशाद् ब्रह्मा सरस्वतीं, विष्णुर्लक्ष्मीं रुद्रश्च गौरीं पत्नीत्वेन जग्राह। ततः स्वस्वपत्नीभिः सह, अर्थात् सरस्वत्या सह ब्रह्मा जगत्सृष्टिं करोति। लक्ष्म्या सह विष्णुः पालयति। गौर्या सह रुद्रः संहरति।

उक्तञ्च सौभाग्यलक्ष्म्युपनिषदि यत् श्रीसूक्तस्य पञ्चदशभिः ऋङ्मन्त्रैः पराशक्तिः सौभाग्यलक्ष्मीः (महालक्ष्मीः) ध्यातव्या—"तुरीयरूपां तुरीयातीतां सर्वोत्कटां सर्वमन्त्रासनगतां पीठोपपीठदेवतापरिवृतां चतुर्भुजां श्रियं हिरण्यवर्णामिति पञ्चदशर्ग्भिर्ध्यायेथ।" (**सौभाग्यलक्ष्मीः** १।१)। इयं सौभाग्यलक्ष्मीर्महालक्ष्मीः "श्रीविद्यानाम्ना शाक्तसम्प्रदाये सुप्रसिद्धा। **सौभाग्यलक्ष्म्युपनिषद्युक्तम्**—निष्कामसाधकानामेव श्रीविद्यासिद्धिर्भवति। कदापि सकामसाधकानां श्रीविद्यासिद्धिर्न भवति।

"निष्कामानामेव श्रीविद्यासिद्धिः।
न कदापि सकामानाम्।" (**सौभाग्यलक्ष्मी: १।१२**)

पञ्चरात्रागमान्तर्भुक्त–**लक्ष्मीतन्त्रे** परदेवतेन्द्रसंवादे कथितम्—

एतासां परमा प्रोक्ता कूटस्था सा महीयसी।
महालक्ष्मीर्महाभागा प्रकृतिः परमेश्वरी॥

महाकाल्यादि-भ्रामर्यन्तदशावताराणां या मूलकारणं प्रकृतिः सा महालक्ष्मीः। सैव परमा, कूटस्था, महीयसी महाभागा परमेश्वरी कथिता।

सप्तशतीचण्डीदेव्याः पञ्चमाध्यायोक्त–"नमो देव्यै महादेव्या" इत्यादि-सूक्तं महालक्ष्म्यास्तुरीयस्वरूपस्य स्तवः। एतदन्यस्तवत्रये तामसी महाकाली, राजसी महालक्ष्मीः, सात्त्विकी महासरस्वती चेति महालक्ष्मीदेव्या व्यष्टि-रूपाणां त्रयाणां स्वरूपमहिमा कीर्तितः। उक्तञ्च **लक्ष्मीतन्त्रे**,—

अमुष्याः स्तुतये दृष्टं ब्रह्माद्यैः सकलैः सुरैः।
"नमो देव्या"दिकं सूक्तं सर्वकामफलप्रदम्॥
इमां देवीं स्तुवन्नित्यं स्तोत्रेणानेन मामिह।
क्लेशानतीत्य सकलानैश्वर्यं महदश्नुते॥

अमुष्या महालक्ष्मीदेव्याः स्तुतये ब्रह्मादिसकला देवाः सर्वकामफलप्रदं "नमो देव्यै" इत्यादिसूक्तं प्रत्यक्षमकुर्वन्त। मामिह यो जनः सर्वदा स्तोत्रेणानेन स्तौति, स सकलक्लेशानतिक्रम्य महैश्वर्यं लभते। ऋषिरुवाच,—

त्रिगुणा तामसी देवी सात्त्विकी या त्रिधोदिता।
सा सर्वा चण्डिका दुर्गा भद्रा भगवतीर्यते॥१॥

मेधाऋषिरवदत्, हे महाराज सुरथ! या त्रिगुणमयी देवी, यस्यास्तामसी राजसी सात्त्विकी चेति व्यष्टिरूपा त्रिधा मूर्तिरुक्ता, सा खलु मूलप्रकृतिर्महालक्ष्मीः, शर्वा, चण्डिका, दुर्गा, भद्रा, भगवती चेति पञ्चनामभिरभिहिता भवति।

## वैकृतिकरहस्यम्

प्राधानिकरहस्ये मूलप्रकृति-महालक्ष्मीदेव्या जगत्सृष्टिरुक्ता। वैकृतिक-रहस्ये महालक्ष्मीदेव्या विकृतिरवतारत्रयम्—अर्थात्तामसी महाकाली, राजसी

महालक्ष्मीः, सात्त्विकी महासरस्वतीत्येत्त्रयं तत्स्वरूपोपासनादिकञ्च व्याख्यातं भवति। महाकाली मधुकैटभविनाशार्थं, महालक्ष्मीः महिषासुरविनाशार्थं, महासरस्वती शुम्भ-निशुम्भासुरविनाशार्थञ्चावतीर्णाऽभवत्।

"त्रिगुणा"—प्रोक्तमूर्तित्रयस्य समष्टिरूपा। "त्रिधोदिता" प्राधानिकरहस्योक्ता मूलप्रकृतिर्महालक्ष्मीदेव्याः सात्त्विकी मूर्त्तिर्महासरस्वती विष्णुगौर्योर्जननी। महालक्ष्मीदेव्यास्तामसीमूर्तिर्महाकाली रुद्रसरस्वत्योर्जननी। महालक्ष्मीदेव्या राजसी मूर्तिर्ब्रह्मलक्ष्म्योर्जननी च कथिता। इत्येवंप्रकारेण लीलया व्यष्टिरूपत्रयं धृतवत्यपि मूलप्रकृतिः पराशक्तिर्महालक्ष्मीः स्वरूपत एकाऽद्वितीया। "त्रिविधाऽपि सा वस्तुत एकैव।" उक्तञ्च "दुर्गा"विषये कृष्णयजुर्वेदीय **तैत्तिरीयारण्यके**—

तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम्।
दुर्गां देवीं शरणमहं प्रपद्ये सुतरसि तरसे नमः॥" इति

"येयं नवदुर्गाकल्पादिषु मन्त्रशास्त्रेषु प्रसिद्धा, तां दुर्गां देवीमहं शरणं प्रपद्ये। कीदृशीम्? अग्निसमानवर्णाम्। तपसा स्वकीयेन सन्तापेन ज्वलन्तीम् अस्मच्छत्रून् दहन्तीम्। विशेषेण रोचते स्वयमेव प्रकाशते इति विरोचनः परमात्मा, तेन दृष्टत्वाद् वैरोचनीं कर्मफलेषु स्वर्ग-पशु-पुत्रादिषु निमित्तभूतेषु जुष्टाम् उपासकैः सेविताम्। हे सुतरसि! सुष्ठु संसारतरणे हेतो, देवि, तरसे तारयित्र्यै तुभ्यं नमोऽस्तु।"

"दुर्गानाममाहात्म्यम्"—शाक्तानन्दतरङ्गिण्याम् अष्टादशोल्लासे श्रीमद्ब्रह्मानन्दगिरिर्दुर्गानाममाहात्म्यमुक्तवान्। "अशेषं जयसे दुर्गं दुर्गा तेन निगद्यते।" हे देवि! सर्वदुर्गं सर्वदुःखं जयसे, तस्माद्दुर्गेत्यभिहिता भवसि।

संसारार्णवमग्नानां सर्वेषां प्राणिनामिह।
दुर्गैका हि परं पोतो नराणां मुक्तये सदा॥
संसारार्णवमग्नानां दुर्गैका परमं पदम्।
दुर्गैका देवताः सर्वा दुर्गैका परमं बलम्॥
दुर्गैका परमं ज्ञानं दुर्गैका कर्म वैदिकम्।
न तया रहितं किञ्चिद् भूतं स्थावर-जङ्गमम्॥

तथा च, संसार-समुद्रे मग्नानां प्राणिनामेषा एका दुर्गा एव पोतस्वरूपा। सा च भक्तानामुद्धरणाय सर्वदा तत्परा वर्तते। एका दुर्गैव सर्वदेवतास्वरूपिणी। दुर्गैव चतुर्वेदेषु कर्मकाण्डस्वरूपा। दुर्गैव ब्रह्मविद्यास्वरूपा, परमं बलञ्च

दुर्गैव। हे देवि! तया रहितया पञ्चभूतात्मकं स्थावरजङ्गमादिकं किमपि न विद्यते।

"भद्रा"—भद्रं करोति या। साधकानां मङ्गलविधातृत्वाद् देवी "भद्रा" नाम्नाभिहिता। **शिवपुराणस्य** ज्ञानसंहितायामुक्तम्—

गुणरूपा महाकाली या वै रुद्रमुपाश्रिता।
पुनश्च पार्वती जाता सा शिवं समुपागता॥
ततो नामान्यनेकानि प्राप सा पर्वतात्मजा।
कालिका चण्डिका भद्रा चामुण्डा विजया जया॥
(६।२२-२३)

या गुणमयी देवी रुद्रमुपाश्रिता, सा महाकालीति नाम्ना प्रसिद्धा। पुनश्च परजन्मनि सा पार्वतीरूपेण शिवमुपागताऽभवत्। अनन्तरं सा पर्वतात्मजानेकनामानि प्राप्तवती; तानि हि कालिका, चण्डिका, भद्रा, चामुण्डा, विजया, जया चेति।

"भगवती"—**देवीपुराणे** भगवतीनामनिरुक्तिर्यथा—



भयं नरकमाहुः स्यात्कु गति-प्रापणेषु च।
अवति रक्षणे त्राणे भगवत्येव मङ्गला॥(३७।६६)

"भग" शब्देनाष्टसिद्धय ऐश्वर्यादयः कथ्यन्ते। अष्टसिद्धय ऐश्वर्यादयः शक्तयो यस्या युगे-युगे विद्यन्ते, सैव "भगवती"नाम्नाभिहिता।

अष्टसिद्धिरहस्यम्।

अणिमा लघिमा व्याप्तिः प्राकाम्यं महिमा तथा।
ईशित्वञ्च वशित्वञ्च तथा कामावसायिता॥

अष्टपाशरहस्यम्।

घृणा लज्जा भयं शङ्का जुगुप्सा चेति पञ्चमी।
कुलं शीलं तथा मानमष्टौ पाशाः प्रकीर्तिताः॥
पाशबद्धो भवेज्जीवः पाशमुक्तः सदाशिवः॥

**वैकृतिके महाकालीरहस्यम्**

योगनिद्रा हरेरुक्ता महाकाली तमोगुणा।
मधुकैटभनाशार्थं यां तुष्टावाम्बुजासनः ॥

कमलासनो ब्रह्मा मधुकैटभासुरनाशार्थं यां देवीं तुष्टाव सा हरयोगनिद्रा तामसी महाकालीति कथ्यते! प्राधानिकरहस्ये महाकाल्या यत्स्वरूपं वर्णितं, वैकृतिकरहस्ये तस्या अपरं रूपमेकं कथितम्।

"महाकाल्याः स्वरूपद्वयं" महाकाली, समष्टिशक्तिस्वरूपिणी त्रिगुणमयी तामसी महालक्ष्मीः। प्राधानिकरहस्योक्ता महाकाली, वैकृतिकरहस्योक्ता च महाकाली मूलतोऽभिन्नापि लीलाभेदेनैतयोः पृथक् पृथक् रूपे भवतः। प्राधानिकरहस्योक्ता महाकाली रुद्र-त्रय्याश्च जननी। एषा हि अञ्जनतुल्य-गाढ़-नीलवर्णा, चतुर्भुजा, वक्षे कबन्धहारेण मस्तके च मुण्डमालया शोभिता। अस्याश्चतुर्षु भुजेषु खड्गः, पानपात्रं, नृमुण्डं खेटकञ्च शोभन्ते।

वैकृतिकरहस्योक्ता महाकाली ब्रह्मकृतस्तवान्मधुकटैमविनाशार्थमवतीर्णा। एषा हि देवीमाहात्म्ये प्रथमचरित्रस्याधिदेवता। अस्याः शरीरकान्तिर्नील-कान्तमणिसदृशी। सा दशानना, दशभुजा, दशपादा, त्रिंशल्लोचनयुक्ता। दशसु भुजेषु खड्गवाणं, गदां, शूलं, शङ्खं, चक्रं, भुशुण्डि, परिघं, धनुर्नरमुण्डञ्च दधती विराजते।

**योगनिद्रारहस्यम्**

"हरेर्योगनिद्रा,"––योगरूपा निद्रा, योगनिद्रा, परमानन्दमयी शक्तिः (तत्त्वप्रकाशिका)। महाप्रलयदशायां विष्णुर्योगमग्नः, समाधिनिद्रामग्नो वाऽभूत्। स तदा बहिर्वृत्त्यभावान्निद्रित इव निष्क्रियोऽभवत्। यस्यां निद्रायां विष्णुर्मग्नोऽभूत्, सा समाधिरूपेण परमानन्दमय्याश्चितिशक्तेरवस्थाविशेषः। उक्तञ्च श्रीमद्भागवते प्रह्लादकृतस्तवे योगनिद्रास्वरूपम्,––

न्यस्येदमात्मनि जगद्विलयाम्बुमध्ये,
शेषेत्मना निजसुखानुभवो निरीहः।
योगेन मिलितदृगात्मनिपीतनिद्र-
स्तुर्ये स्थितो न तु तमो न गुणांश्च युङ्क्षे ॥
(७।९।३२)

हे भगवन् स्वयं परिदृश्यमानमिदं जगदात्मनि विलीनं कृत्वात्मसुखे निमग्नो भूत्वा, निष्क्रियावस्थया प्रलयपयोधिजले निद्रित आसीत्। एवं योगाश्रयेण निमीलितनेत्रयुगलः स्वप्रकाशे जितनिद्रो, जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयातीतस्तुरीयस्वरूपेणावस्थानमकरोत्।

साधारणजीववद् भगवानपि किं तमोवृत्तिरूपे निद्राश्रये तृप्तिमनुभवति? योगः समाधिः, स एव निद्रा, यतो निद्रायां समाधौ वा, उभयावस्थायामेव बाह्यवृत्तेरभावसादृश्यं वर्तते। भगवतो विष्णोर्निद्रा साधारणनिद्रा न भवति, परन्तु योगाश्रये तस्य केवलं नेत्रयुग्मं निमीलितं तिष्ठति (योगेन मिलितदृक्) स्व-स्वरूपप्रकाशत्वात् स निद्रां जितवान् (आत्मनिपीतनिद्रः)। भगवांस्तदा तादृगवस्थायां जाग्रत्स्वप्न-सुषुप्तेरतीतायां तुरीयावस्थायां वर्तते (तुर्ये स्थितः)। तदवस्थायां भगवान् जीवानां सुषुप्तिमिव तमोमयीं निद्राम् अथवा जाग्रतां जीवानां स्वपतां वा जीवानां रूपरसादिविषयभोगमपि न करोति (न तु तमो न गुणांश्च युङ्क्षे)।

**विष्णुधर्मोत्तरे—**

निद्रा तु शयनारूढ़ा सुसौम्या मुकुलेक्षणा।
पानपात्रधरा चेयं द्विभुजा परिकीर्तिता॥

योगनिद्रादेवी द्विभुजा पानपात्रधरा निमीलितनेत्रयुगला शय्याशायिता निद्रायुक्ता सौम्यमूर्तिरुक्ता।

दशवक्त्रा दशभुजा दशपादाऽञ्जनप्रभा।
विशालया राजमाना त्रिंशल्लोचनमालया॥३॥

महाकाली दशवदना दशभुजा दशपादविशिष्टा, अञ्जनतुल्यप्रभायुक्ता (महानीलवर्णा) त्रिंशद्विशालनेत्रमालया शोभमाना।

खड्ग-वाण-गदा-शूल-शङ्ख-चक्र-भुशुण्डिभृत्।
परिघं कार्मुकं शीर्षं निश्च्योतद्रुधिरं दधौ॥५॥

महाकाली तदीयदशभुजेषु दक्षिणाधःक्रमेण खड्ग-वाण-गदा-शूल-शङ्ख-चक्र-भुशुण्डि-परिघ-धनुः-रक्तक्षरितनृमुण्डञ्च धृतवती।

एषा सा वैष्णवी माया महाकाली दुरत्यया।
आराधिता वशीकुर्यात् पूजाकर्तुश्चराचरम्॥६॥

एषा सा महाकाली दुरतिक्रमणीया वैष्णवी माया, पूजिता चेदेषा पूजा-कर्तुश्चराचरं जगत् वशीभूतं करोति।

### वैकृतिके महालक्ष्मीरहस्यम् ।

सर्वदेवशरीरेभ्यो याऽऽविर्भूताऽमितप्रभा।
त्रिगुणा सा महालक्ष्मीः साक्षान्महिषमर्दिनी ॥७॥

सर्वदेव-शरीरेभ्यो याअपरिमितज्योतिःसम्पन्ना देवी-आविर्भूता, सा त्रिगुण-मयी साक्षान्महालक्ष्मीर्महिषमर्दिनी चेति कथ्यते।

महालक्ष्म्या रूपान्तरमाह प्राधानिकरहस्ये महालक्ष्म्या यद्रूपं वर्णितम-भूत्, वैकृतिकरहस्ये ततोऽप्यपरं तस्या रूपमेकं कथितम्। स्वरूपतो द्वयोर-भिन्नत्वेऽपि लीलाभेदेन पृथक् पृथग् भवतः।

महालक्ष्म्या रूपद्वयम्,—प्राधानिकरहस्योक्ता महालक्ष्मीस्त्रिगुणा परा-प्रकृतिः समष्टिशक्तिस्वरूपिणी। वैकृतिकरहस्योक्ता महालक्ष्मीस्तस्या एव राजसी मूर्तिर्व्यष्टिशक्तिस्वरूपिणी। एषा हि महिषासुरवधार्थमवतीर्णा महिष-मर्दिनी देवीमाहात्म्यस्थमध्यमचरित्रस्याधिदेवता।

प्राधानिकरहस्योक्ता त्रिगुणा महालक्ष्मीस्तप्तकाञ्चनवर्णा चतुर्भुजा। सा चतुर्हस्तेषु मातुलुङ्गं, गदां, खेटं, पानपात्रञ्च तथा मस्तके नागं, लिङ्गं, योनिञ्च धारयति। राजसी महालक्ष्मीर्महिषमर्दिनी वा अष्टादशभुजा। सा अष्टादशभुजेषु दक्षिणाधः क्रमेण (१) अक्षमालां, (२) पद्मं, (३) वाणम्, (४) असिं, (५) वज्रं, (६) गदां, (७) चक्रं, (८) शूलं, (९) परशुं, (१०) शङ्खं, (११) घण्टां, (१२) पाशं, (१३) शक्तिं, (१४) दण्डं, (१५) ढालं, (१६) धनुः, (१७) पानपात्रं, (१८) कमण्डलुञ्च धारयति।

विभिन्नानां देवानान्तेजसा देव्या विभिन्नान्यङ्गानि रचितानीति सा विचित्रवर्णा। तस्या मुखमण्डलं श्वेतवर्णं, करसमूहो नीलवर्णः, स्तनयुग्मं श्वेतवर्णं, देहमध्यभागो रक्तवर्णः, उरुद्वयं जङ्घाद्वयञ्च नीलवर्णं, चरण-युगलं च रक्तवर्णम्।

### महिषमर्दिनीमहालक्ष्मीरूपभेदरहस्यम्

**कालिकापुराणे,—**

आदिसृष्टावुग्रचण्डामूर्त्या त्वं निहतः पुरा।
द्वितीयसृष्टौ तु भवान् भद्रकाल्या मया हतः॥
दुर्गारूपेणाधुना त्वां हनिष्यामि सहानुगम्॥
(६०।११८-१९)

कालिकापुराण उक्तम्—प्रथमसृष्टौ भगवती अष्टादशभुजा, उग्रचण्डारूपेण महिषासुरं जघान, द्वितीयसृष्टौ षोड़शभुजभद्रकालीरूपेण तमेव जघान, वर्तमानसृष्टौ तु दशभुजदुर्गारूपेण पुनस्तं जघान।

### महिसासुरस्य ब्रह्मशापरहस्यम्

पुरा हिमालयस्य कस्मिंश्चिन्निभृते स्थाने कात्यायनमुनेः शिष्यो रौद्राश्वमुनिस्तपस्यारत आसीत्। मायाविमहिषासुरः कौतुकवशात् कस्याश्चित् परमरूपवत्या नार्या रूपं धृत्वा तं मोहयामास। कात्यायनो योगबलेन महिषासुरस्येदृशं चेष्टितं ज्ञात्वा तमभिशशाप। उक्तञ्च **कालिकापुराणे—**

यस्मात्त्वया मे शिष्योऽयं मोहितस्तपसश्च्युतः।
कृतस्त्वया स्त्रीरूपेण तत्त्वां स्त्री निहनिष्यति॥(६०।१०२)

यतस्त्वं नारीरूपेण मम शिष्यं मोहितं कृत्वा तपसश्च्युतमकार्षीः, तस्मात्त्वां स्त्री निहनिष्यतीति।

पूर्वप्रतिज्ञया भगवान् शिवो रम्भासुरस्य त्रिषु जन्मसु पुत्ररूपेण जन्मग्रहणमकरोत्। प्रतिजन्म महिषासुरं कात्यायनमुनिः प्रशस्तवान्। कल्पे कल्पे तृतीयकल्पे महिषासुरो देवीमाराध्य वरमयाचत,—"अतः परमिहलोके मम जन्म न भवे"दिति। तस्मादेव स देवीपदतले संलग्नोऽभूत्। तस्य पुनरनेकेष्वपि कल्पेषु जन्म न भविष्यतीति तस्य जन्मवृत्तान्त उक्तः।

### वैकृतिके महासरस्वतीरहस्यम्

गौरीदेहात् समुद्भूता या सत्त्वैकगुणाश्रया।
साक्षात् सरस्वती प्रोक्ता शुम्भासुरनिर्बर्हिणी॥१३॥

गौरी देहात् शुद्धसत्त्वगुणमयी या देव्याविर्भूता, सा शुम्भासुरनाशिनी कौशिकी साक्षान्महासरस्वतीति कथ्यते।

दधौ चाष्टभुजा वाणमुसले शूलचक्रभृत्।
शङ्खं घण्टां लाङ्गलञ्च कार्मुकं वसुधाधिप ॥१४॥

हे महीपते! देवी-अष्टभुजा महासरस्वती वाणमुसलशूल-चक्र-शङ्ख-घण्टा-लाङ्गल-कार्मुकञ्च धारयति।

एषा सम्पूजिता भक्त्या सर्वज्ञत्वं प्रयच्छति।
निशुम्भमथिनी देवी शुम्भासुरनिर्वर्हिणी ॥१५॥

एषा निशुम्भ-शुम्भघातिनी देवी भक्त्या पूजिता सती साधकाय सर्वज्ञत्वं प्रयच्छति।

**महासरस्वत्या रूपभेदः**

प्राधानिकरहस्योक्ता महासरस्वती वैकृतिकरहस्योक्त-महासरस्वतीतः स्वरूपतोऽभिन्ना सत्यपि लीलाभेदेन पृथग्रूपा। प्राधानिकरहस्योक्ता महासरस्वती चतुर्भुजा। वैकृतिकरहस्योक्तमहासरस्वती चाष्टभुजा, एषा हि शुम्भनिशुम्भविनाशार्थमवतीर्णा, देवीमाहात्म्यस्योत्तरचरित्रस्याधिदेवता।

**श्री-लक्ष्मीरहस्यम्**



विष्णुपुराणे भगवद्विष्णोर्लक्ष्म्याश्च स्वरूपं तयोः पारस्परिकसम्बन्धं च मैत्रेयर्षि प्रति महर्षिः पराशरोऽवदत्––

नित्यैव सा जगन्माता विष्णोः श्रीरनपायिनी।
यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम ॥(१।८।१५)

हे द्विजोत्तम मैत्रेय! श्री-देवी विष्णोः स्वरूपशक्तिः। एषा नित्य-विनाशरहिता, विष्णुर्यथा सर्वजगत्यनुप्रविष्टस्तथैवैषाऽप्यनुप्रविष्टा।

"प्रोच्यते परमेशो हि यः शुद्धोऽप्युपचारतः।" (**विष्णुपुराणम्** १।६।४५)

अस्य टीकायां श्रीधरस्वाम्यवदत्––ननु यदि लक्ष्मीस्तत्स्वरूपाऽभिन्ना, कथं तर्हि लक्ष्म्याः पतिरित्युच्यत इति? यः शुद्धः केवलमुपचारवशतो लक्षणावशतो वा भेदविवक्षया लक्ष्मीपतिरुच्यते। तस्यैतदेव तात्पर्यं, विष्णुर्लक्ष्मीश्च स्वरूपतोऽभिन्नावपि लीलाहेतोर्भिन्नवत् प्रतीयेते। तदुक्तं **विष्णुपुराणे,**—

अर्थो विष्णुरियं वाणी नीतिरेषा नयो हरिः।
बोधो विष्णुरियं बुद्धिर्धर्मोऽसौ सत्क्रिया त्वियम् ॥

विष्णुरर्थः श्रीर्वाक् । श्रीर्नीति-र्हरिर्नयः । विष्णुर्बोधः श्रीर्बुद्धिः । विष्णु-र्धर्मः श्रीः सत्क्रिया भवति ।

स्रष्टा विष्णुरियं सृष्टिः श्रीर्भूमिर्भूधरो हरिः ।
सन्तोषो भगवान् लक्ष्मीस्तुष्टिर्मैत्रेय शाश्वती ॥

हे मैत्रेय ! विष्णुः स्रष्टा, लक्ष्मीः सृष्टिः, लक्ष्मीर्भूमिः, हरिः भूधरः । भगवान् सन्तोषः लक्ष्मीः शाश्वती तुष्टिः ।

इच्छा श्रीर्भगवान् कामो यज्ञोऽसौ दक्षिणातु सा ।
आद्याहुतिरसौ देवी पुरोडाशो जनार्दनः ॥

श्रीः इच्छा, भगवान् कामः । विष्णुर्यज्ञः, श्रीर्दक्षिणा । श्रीदेवी आद्याहुतिः, जनार्दनः पुरोडाशः ।

मैत्रेय केशवः सूर्यस्तत्प्रभा कमलालया ।
शशाङ्कः श्रीधरः कान्तिः श्रीस्तस्यैवानपायिनी ॥
ज्योत्स्ना लक्ष्मीः प्रदीपोऽसौ सर्वः सर्वेश्वरो हरिः ।
लता भूता जगन्माता श्रीर्विष्णुर्द्रुमः संस्थितः ॥
विभावरी श्रीर्दिवसो देवश्चक्रगदाधरः ।
वरप्रदो वरो विष्णुर्वधः पद्मवनालया ॥

हे मैत्रेय ! केशवः सूर्यः कमलालया लक्ष्मीस्तस्य प्रभा । श्रीधरश्चन्द्रो विनाशरहिता श्रीर्देवी तस्य कान्तिः । लक्ष्मीर्ज्योत्स्ना सर्वेश्वरः सर्वस्वरूपो हरिः प्रदीपः । जगन्माता श्रीर्लतासदृशी, विष्णुश्च वृक्षरूपोऽवस्थितः । श्रीदेवी रात्रिश्चक्रधारी देवश्च दिवसः । वरप्रदो विष्णुर्वरः पद्मालया लक्ष्मीर्वधूश्चेति ।

किञ्चातिबहुनोक्तेन संक्षेपेणेदमुच्यते ।
देवतिर्यङ्मनुष्यादौ पुंनाम्नि भगवान् हरिः ॥
स्त्रीनाम्नि लक्ष्मीर्मैत्रेय नानयोर्विद्यते परम् ॥

**विष्णुपुराणम्** (१।८ अः)

किमधिकं वच्मि ? संक्षेपेणेदं कथयामि यद् देवमनुष्य-पशुपक्षिप्रभृतीनां मध्ये पुंनाम्नि भगवान् हरिः, स्त्रीनाम्नि च लक्ष्मीदेवी विराजमाना । हे मैत्रेय ! अनयोः परं किमपि न विद्यते ।

"श्रीरवतारः"—भगवतो विष्णोः विभिन्नावतारे तस्य स्वरूपशक्तिः श्रीदेवी, तेन सार्धमवतीर्य तस्य लीलाकार्ये सहाया बभूव। उक्तञ्च **विष्णुपुराणे,—**

एवं यथा जगत्स्वामी देवदेवो जनार्दनः।
अवतारं करोत्येषा तथा श्रीस्तत्सहायिनी॥
पुनश्च पद्मादुद्भूता आदित्योऽभूद् यदा हरिः।
यदा तु भार्गवो रामस्तदाभूद् धरणी त्वियम्॥
राघवत्वेऽभवत् सीता रुक्मिणी कृष्ण जन्मनि।
अन्येषु चावतारेषु विष्णोरेषा सहायिनी॥
देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी।
विष्णोर्देहानुरूपां वै करोत्येषात्मजनस्तनुम्॥
(१।९।१४०-३)

जगत्स्वामी देवदेवो जनार्दनो यद्रूपेणाविर्भवति, तत्सहायिनी श्रीरपि तद्रूपेणाविर्भवति। यदा हरिरादित्योऽदितिगर्भे वामनरूपेणावतीर्णः, तदा श्रीदेवी पद्मजाऽभूत्। हरिर्यदा भार्गवः परशुरामरूपेणावतीर्णस्तदा श्रीर्धरण्यभूत्। रामावतारे सीता, कृष्णावतारे रुक्मिणीरूपेणावतीर्णासीत्। अन्यान्यावतारेषु च श्रीर्विष्णुसहायिन्यभूत्। विष्णोर्देवावतारे श्रीर्देवदेहधारिणी, मनुष्यावतारे च मानुषी भूत्वा, विष्णोरनुरूपात्मतनुपरिग्रहं करोति।

## पञ्चरात्रागमे शक्तितत्त्वम्।

पञ्चरात्रागमे शक्तिवादसम्बन्धे बहुमूल्यवत्तथ्यं निहितमस्ति। जयाख्यसंहितायामुक्तम्—

शक्त्यात्मकः स भगवान् सर्वशक्त्युपबृंहितः। (६।२२३)

शक्त्यात्मको हि भगवान् सर्वशक्तिभिः समृद्धः। भगवान् तस्य तत्सर्वशक्तिमत्तया जगत् सृजति। जयाख्यसंहितायां परमेश्वरस्य चतुर्विधा शक्तिरुक्ता;—लक्ष्मीः, कीर्तिः, जया, माया चेति ताः सदा भगवदाश्रिताः। तदुक्तम्—

लक्ष्मीः कीर्तिर्जया माया देव्यस्तस्याश्रिताः सदा (६।७७)

एतासां चतुःशक्तीनां मध्ये लक्ष्मीदेवी सर्वश्रेष्ठा। ईश्वरस्यैश्वर्य-षाड्गुण्यानां ज्ञानशक्त्यैश्वर्यबलवीर्यतेजसां मध्ये लक्ष्मीदेवी खल्वैश्वर्यस्वरूपिणी। रश्मि-सूर्ययोरिव, तरङ्गसमुद्रयोरिव लक्ष्मीश्वरयोरविनाभावः सम्बन्धः।

सूर्यस्य रश्मयो यद्वदूर्मयश्चम्बुधेरिव॥
सर्वैश्वर्यप्रभावेण कमला श्रीपतेस्तथा॥(६।८७)

उक्तञ्च **हयशीर्षपञ्चरात्रे,—**

परमात्मा हरिर्देवस्तच्छक्तिः श्रीरिहोदिता।
श्रीर्देवी प्रकृतिः प्रोक्ता केशवः पुरुषः स्मृतः॥
न विष्णुना विना देवी न हरिः पद्मजां विना॥

हरिः परमात्मा, तदीया शक्तिः श्रीरित्यभिहिता। श्रीर्देवी प्रकृतिः, केशवः पुरुषः। श्रीदेवी विष्णुं विना, विष्णुश्च श्रीदेवीं विना कदापि न तिष्ठति।

पञ्चरात्रागमान्तर्भुक्तायाम् अहिर्बुध्न्यसंहितायां श्रीदेव्याः स्वरूपं विशद-भावेनालोचितं वर्तते। ग्रन्थप्रारम्भे "इन्दुशेखरा पञ्चकृत्यकरी" हरेः शक्तिः संस्तुता। सर्ग(सृष्टि)स्थितिसंहारतिरोभावानुग्रहश्चेति पञ्च कृत्यानि। हरेः शक्ति—श्रीदेवीप्रोक्तपञ्चकृत्यानि सम्पादितानि।

सोमसूर्यानलाकल्पामकल्पामिन्दुशेखराम्।
पञ्चबिन्दुं हरेः शक्तिं पञ्चकृत्यकरीं नुमः॥
(अहि. सं. १।२)

## परब्रह्मस्वरूपरहस्यम्

परब्रह्म एकमद्वितीयं दुःखरहितं निःसीमसुखानुभवरूपमनादि अनन्तञ्च सत् सर्वभूतनिवासि सर्वजगद्व्याप्य स्थितिकारि निरवद्यं निर्विकारञ्च। पर-ब्रह्मणः समोपमो निस्तरङ्गः समुद्रः।

"अविक्षिप्तम् अतरङ्गार्णवोपमम्।" (२।२३)

एष हि प्राकृतगुणसम्पर्कहीनोऽप्राकृतगुणराशेरास्पदम्। आकार-देश-कालै-रनवच्छिन्नः पूर्णो नित्यो व्यापकश्च। हेयोपादेयवर्जित इदन्तेदृक्ताभ्या (स्वरूप-प्रकाराभ्या) मियत्तया (परिमाणेन) चानवच्छिन्नः। परब्रह्म हि षाड्गुण्ययोगे

भगवान्, सर्वभूतनिवासित्वे वासुदेवः, सर्वात्मनां श्रेष्ठत्वे परमात्मेतिनाम्ना कीर्तितश्च। एवञ्च गुणसमूहानामविशेषत्वेनायमव्यक्तः, प्रधानः, अनन्तः, अपरिमितः, अचिन्त्यः, ब्रह्म, हिरण्यगर्भः, शिव—इत्यादिविविधनामभिः प्रख्यातः। पञ्चरात्रमते परब्रह्मणो निर्गुणः सगुणश्चोभयोऽपि भावः स्वीकृतः। परमात्मा भूतवर्तमानभविष्यत्परिच्छेदशून्यः। न ह्रस्वो न दीर्घो न स्थूलो न तनुरिति, आदिमध्यान्तवर्जितश्च। उक्तञ्च,—

सर्वद्वन्द्वविनिर्मुक्तं　सर्वोपाधिविवर्जितम्।
षाड्गुण्यं तत्परं ब्रह्म सर्वकारणकारणम्॥(अहि. सं. २।५३)

परब्रह्म निर्गुणमपि सगुणम्। प्रकृतगुणरहितत्वेन निर्गुणम्। जगद्व्यापार-निर्वाहार्थम् अप्राकृतषड्गुणयुक्तत्वेन सगुणम्। प्रोक्तषड्गुणा यथा,—(१) ज्ञानं (२) शक्तिः, (३) ऐश्वर्यम्, (४) बलम्, (५) वीर्यम्, (६) तेजश्चेति। एतेन भगवतोऽनन्तशक्तिमत्ता प्रकटिता। एतद्विषये स्मर्तव्यं यत्, षाड्गुण्यस्य पृथक्त्वेन वर्णितत्वेऽपि परमार्थतो भगवच्छक्तेरेकस्या एव विभिन्न-दृङ्मात्रम्। परब्रह्म स्वशक्तियोगेनैव स्वात्मानं बहुभावेन प्रकाशितवत्।

षाड्गुण्यं तत्परं ब्रह्म स्वशक्ति-परिबृंहितम्।(२।३२)



(१) ज्ञानम्—अजड़ं स्वात्मसंबोधिनं (स्वप्रकाशं) नित्यं सर्वावगाहिनं गुणं ज्ञानं कथयति। ज्ञानं ब्रह्मणो गुणं स्वरूपमपि प्रवदन्ति।

(२) शक्तिः—जगदुपादानकारणत्वं शक्तिः।

(३) ऐश्वर्यम्—स्वातन्त्र्यमूलकं जगत्कर्तृत्वमैश्वर्यम्।

(४) बलम्—जगन्निर्माणव्यापारे ईश्वरस्य श्रमहानित्वं बलनाम्नाऽभिहितम्।

(५) वीर्यम्—जगत उपादानकारणत्वेऽपि ब्रह्मणो विकारराहित्यस्य शास्त्रीयं नाम "वीर्यम्"। जगत उपादानकारणसमूहमध्ये कार्यावस्थायां विविधविकारा दृश्यन्ते; परन्तु निर्विकारजगदीश्वरे जगत उपादनकारणत्वेऽपि न कोऽपि विकारः। अस्यैव नाम "वीर्य" मिति।

(६) तेजः—जगत्सृष्टावनपेक्षता "तेजः"। एवम्प्रकारेण परब्रह्मणि जगत उभयविधकारणता,—उपादानकारणता निमित्तकारणता च विद्यते। ब्रह्म कस्यापि सहायतां विनैव स्वातन्त्र्येणैव सृष्टेरुत्पादकः। "सर्वकारणकारणम्"

इति विशेषणेन ब्रह्मणः सर्वशक्तिमत्ता स्वातन्त्र्यञ्च प्रकाशते। पूर्वोक्तषड्-गुण्यमध्ये ज्ञानमेव परब्रह्मण उत्कृष्टं रूपं, शक्त्यादि-पञ्चकं ज्ञानस्यैव गुणत्वेन सर्वदा तस्य परब्रह्मणो ज्ञानेनैव संबद्धम्। उक्तञ्च,—

एते शक्त्यादयः पञ्च गुणा ज्ञानस्य कीर्तिताः।
ज्ञानमेव परं रूपं ब्रह्मणः परमात्मनः॥(अहि. सं. २।६१)

"शक्तितत्त्वम्",—शक्तेः स्वरूपविषये **अहिर्बुध्न्यसंहितायामुक्तम्**—

शक्तयः सर्वभावानामचिन्त्या अपृथक् स्थिताः।
स्वरूपे नैव दृश्यन्ते दृश्यन्ते कार्यतस्तु ताः॥
सूक्ष्मावस्था हि सा तासां सर्वभावानुगामिनी॥

सर्ववस्तुनः शक्तिरचिन्तनीया सा वस्तुतोऽपृथग्भावेनावस्थिता। शक्ति स्वरूपमस्माभिः कदापि न दृश्यते, किन्तु कार्येणैव तस्या अस्तित्वमनुमीयते। शक्तेः सूक्ष्मावस्था सर्वपदार्थेष्वनुप्रविश्य तिष्ठति। सा शक्तिर्ब्रह्मात्मभूता उक्तञ्च—

एवं भगवतस्तस्य परस्य ब्रह्मणो मुने।
सर्वभावानुगा शक्तिर्ज्योत्स्नेव हिमदीधितेः॥(३।४)

ब्रह्मण आत्मभूता शक्तिर्नानाशास्त्रेषु नानानामभिः कथ्यते। यथा—आनन्दा, स्वतन्त्रा, नित्या, व्यापिनी, पूर्णा, लक्ष्मीः, श्रीः, पद्मा, कमला वैष्णवी, कुण्डलिनी, अनाहता, गायत्री, माता चेति। नामान्येतानि परायाः शक्तेरनन्तविभवानि। तदुक्तम्—

नामधेयैरियं तैस्तैर्नानाशास्त्रसमाश्रयैः।
अन्वर्थैर्दर्शिताशेषविभवा वैष्णवी परा॥(३।२२)

पञ्चरात्रागमे ब्रह्मणः परा शक्तिः साधारणतः लक्ष्मीरित्यभिहिता।

### लक्ष्मीस्वरूपतत्त्वम्

भगवान् विष्णुर्वै शक्तिमान्, लक्ष्मीस्तस्यैव शक्तिः। धर्मो धर्मी, अहन्ता अहं, चन्द्रिका चन्द्रः, रश्मिः सूर्यः, शक्तिः शक्तिमान्,—एतेषां गुणगुणिनाम-विनाभावसम्बन्धे स्वीकृतेऽपि लक्ष्मीविष्णवोर्मध्य एको द्वैतभावो नित्यवर्तमानः। प्रलयकालेऽपि सर्वतोभावेन तयोरेकीभावो नानुभूयते, परन्त्वेकमात्रतत्त्वरूपेण

तयोरवस्थानमात्रम्। "व्यापकावतिसंश्लेषादेकं तत्त्वमिव स्थितौ" (४।७८)। अहिर्बुध्न्यसंहितायां लक्ष्मी-विष्ण्वोरद्वैतभावमध्येऽप्येको द्वैतभावः स्पष्टरूपेण स्वीक्रियते।

देव्यः शक्तिमतो भिन्ना ब्रह्मणः परमेष्ठिनः।
एष चैषा च शास्त्रेषु धर्मधर्मिस्वभावतः॥(३।२५)
उदधेरिव च स्थैर्यं महत्तेव विहायसः।
प्रभेव दिवसेशस्य ज्योत्स्नेव हिमदीधितेः॥
विष्णोः सर्वाङ्गसम्भूता भावाभावानुगामिनी।
शक्तिर्नारायणी दिव्या सर्वसिद्धान्तसम्मता॥(३।२३-२५)

वैष्णवीशक्तेः समुद्रवत् स्थैर्यम्, आकाशवन्महत्त्वम, सूर्यतुल्या प्रभा, चन्द्रतुल्या ज्योत्स्ना। विष्णोः सर्वाङ्गसम्भूता दिव्या नारायणी शक्तिरेषा भावाभावजड़चेतनसर्वपदार्थेष्वनुप्रविष्टेति सर्ववादिसम्मतम्।

## सृष्टिः

प्रलयकल्पे आदिकारणं परब्रह्म नारायण एव विद्यते। विश्वं हि बीजाकारेण तस्मिन् परब्रह्मणि लीयते। तदा ज्ञानादिषाड्गुण्यं स्तिमितवद् वायुविक्षोभहीनं निष्कम्पाकाशवद् ब्रह्मण्येवावतिष्ठति। तदुक्तम्—

प्रसुप्ताखिलकार्यं यत् सर्वतः समतां गतम्।
नारायणः परं ब्रह्म सर्ववासमनाहतम्॥
पूर्णस्तिमितषाड्गुण्यम् असमीराम्बरोपमम्॥(५।२-३)

ब्रह्मणो यदेतत् स्तिमितरूपम्, एतन्महाशून्यता, एषा शक्तिरेवावस्थाविशेषरूपेति वर्ण्यते। "तस्य स्तैमित्यरूपा या शक्तिः शून्यत्वरूपिणी" (५।३) प्रलयकाले शक्तिर्ब्रह्मणा सहैकीभूय तस्मिन्नव्यक्तभावेनैवावलिष्ठते। भगवतो विष्णोरात्मभूता स्वतन्त्रशक्तिरूपिणी लक्ष्मीः प्रलयान्ते केनाप्यचिन्त्यकारणेन "उन्मेषं" प्राप्तवती सती जगद्रचनाव्यापारे प्रविशति।

स्वातन्त्र्यादेव कस्माच्चित्क्वचित् सोन्मेषमृच्छति।
आत्मभूता हि या शक्तिः परस्य ब्रह्मणो हरेः॥(५।४)

पौरुषीरात्रेरष्टमे, अथवा शेषभागे भगवतः परा शक्तिस्तदभिप्रायेण जागरिता सती चक्षुरुन्मिलयति। लक्ष्मीदेव्या एतदुन्मेषः, अथवा चक्षुरुन्मिलनमनन्तमहाकाशेऽकस्माद् विद्युत्स्फुरणवद् वर्ण्यते।

देवी विद्युदिव व्योम्नि क्वचिदुद्द्योतते तु सा।
शक्तिविद्योतमाना सा शक्तिरित्युच्यतेऽम्बरे ॥(५।५)

### "क्रियाशक्तिर्भूतिशक्तिश्च"

परा शक्तिर्लक्ष्मी: सृष्टिकाले क्रियाशक्तिर्भूतिशक्तिश्चेति द्विविधरूपेणात्मानं प्रकाशयति। सा भूतिशक्ति-स्वरूपेण जगद्रूपेण प्रकाशिताऽभवत् (भवनं भूतिः)। एवं क्रियाशक्तिस्वरूपेण जगत् प्राणवत् कृत्वा परिचालयति। उक्तञ्च,—

लक्ष्मीमयः समुन्मेषः स द्विधा व्यवतिष्ठते।
क्रिया-भूतिविभेदेनेत्यादि... (३।२८)

### "शुद्धसृष्टिः"

परशक्त्या लक्ष्मीदेव्या अभिव्यक्तेः प्रथमपर्यायस्य नाम "शुद्धसृष्टि" "गुणोन्मेषो" वा। तरङ्ग-हीने प्रशान्तसमुद्रे यथा प्रथमं बुद्बुदोत्पत्तिर्भवति, तथा परब्रह्मणि प्रथमं ज्ञानादिषाड्गुण्यस्योदयो भवति। षाड्गुण्यास्य विकाशेनैव जगत्सृष्टिः सम्पद्यते। सृष्टिः "शुद्धा", तथा "शुद्धेतरा" इति द्विविधा भवति।

पूर्वोक्त-षाड्गुण्यस्य मध्यतो गुणद्वयप्राधान्येन सङ्कर्षणः प्रद्युम्नोऽनिरुद्धश्चेति व्यूहत्रयस्य सृष्टिरभवत्। सङ्कर्षणे ज्ञानस्य बलस्य च प्राधान्यं, प्रद्युम्ने ऐश्वर्य-वीर्ययोः प्राधान्यम्, एवमनिरुद्धे शक्तितेजसोः प्राधान्यम्। व्यूहत्रयस्य प्रत्येकस्मिन् सर्जनात्मकं शिक्षणात्मकञ्च द्विविधं कार्यमस्ति (अहि. सं. ५।१७-६०)। सङ्कर्षणस्य कार्यं जगत्सृष्टिरेवम् ऐकान्तिकमार्गस्य (पञ्चरात्रतत्त्वस्य) उपदेशप्रदानम्। प्रद्युम्नस्य कार्यम् ऐकान्तिकमार्गसम्मतक्रियायाः शिक्षादानम्, एवमनिरुद्धस्य कार्यं कर्मफलं मोक्षतत्त्वशिक्षादानं वा। केषाञ्चिन्मते वासुदेवात् परमात्मणो वा सङ्कर्षणो जीवो वा समुत्पद्यते। सङ्कर्षणात्प्रद्युम्नो मनो वा, प्रद्युम्नाच्चानिरुद्धोऽहङ्कारो वोत्पद्यते।

### "शुद्धेतरसृष्टिः"

शुद्धसृष्टेराधारोपरि शुद्धेतरा सृष्टिः प्रतिष्ठिता। अस्याः क्रमो यथा—अनिरुद्धात् कूटस्थः पुरुषः, ततो मायाशक्तिः, तस्या नियतिस्ततः कालस्तस्मात् सत्त्वगुणः, तस्माद्रजस्ततस्तमः, तस्माद्बुद्धिः, तस्या अहङ्कारस्ततो वैकारिक-

तेजसो भूतादिश्चेति। वैकारिकादेकादशेन्द्रियाणि, भूतादिपञ्चतन्मात्राणि, तेभ्यः स्थूलपञ्चभूतानि च जायन्ते।

### सुदर्शनतत्त्वम्

विश्वाधिपतेर्नारायणस्य स्वातन्त्र्यं दिव्यम् (अलौकिकम्)। स सर्वतोभावेनाप्तकामोऽपि विश्वसृष्टिं कृत्वा राजवत् क्रीड़ति। तदुक्तम्—

सर्वैरननुयोज्यं तत् स्वातन्त्र्यं दिव्यमीशितुः।
अवाप्तविश्वकामोऽपि क्रीड़ते राजवद्वशी॥(१४।१३)

भगवतः संकल्पस्याथवा इच्छाशक्तेर्नाम "सुदर्शनम्"। अस्यानन्तरूपत्वेऽपि प्रधानतः पञ्चप्रकारेणैव प्रकाशो भवति। यथा—उत्पत्तिः, स्थितिः, विनाशकारिणी शक्तिर्निग्रहशक्तिः (मायाऽविद्यादिनामधारिणी तिरोधानशक्तिः), एवमनुग्रहशक्तिश्चेति।

जीवो हि स्वरूपतः सर्वशक्तिमान् विभुः सर्वज्ञः। परन्तु सृष्टिकाले भगवतस्तिरोधानशक्त्या जीवस्य विभूत्व-सर्वशक्तिमत्ता-सर्वज्ञतादीनां तिरोधानं संघटते, येन जीवोऽणुः किञ्चित्करः किञ्चिज्ज्ञश्च जायते। एतदणुत्वादिकं "मल"-मित्यभिधीयते। एभिर्जीवो बद्धः सन् पूर्वकर्मानुसारेण जातिम् आयुं भोगञ्चापि प्राप्नोति। अस्मिन् विकट-भवचक्रे जीवो जन्मजन्मान्तरं भ्राम्यमाणो भवति।

### "शक्तिपातः"

जीवानामशेषक्लेशराशिदर्शनेन भगवतो हृदये स्वत एव कृपाविर्भावो भवति। तस्या एव कृपाया नाम "अनुग्रहशक्तिः"। आगमशास्त्रे "शक्तिपातो"ऽयं "शक्तिपाक" इत्यभिधीयते।

या ह्युक्ता पञ्चमी शक्तिर्विष्णुसंकल्परूपिणी।
अनुग्रहात्मिका शक्तिः सा कृपा वैष्णवी परा॥(१४।३०)

एतदवस्थायां यदा करुणामयो भगवान् जीवोपरि करुणाधारां वर्षति, तदा जीवानां शुभम् अशुभं वा कर्म समं भूत्वा फलोत्पादने क्रियाहीनं जायते। जीव एतद्दशायां वैराग्यविवेकं लब्ध्वा मोक्षलाभाय स्वत एव प्रवर्तते।

अनुग्रहात्मिकायास्तु शक्तेः पातक्षणे तथा।
उदासाते सभीभूय कर्मणि ते शुभाशुभे॥
तत्पातानन्तरं जन्तुर्मुक्तो मोक्षसमीक्षया।
प्रवर्तमानवैराग्यो विवेकोऽभिनिवेशवान्॥(१४।३५-३६)

### प्रपत्तिः

भक्तवत्सल-करुणानिकेतनस्य भगवतोऽनुग्रहशक्तिर्जीवान् भवपङ्कादुद्धर्तुं समर्था। "प्रपत्तिः" शरणागतिर्वाऽनुग्रहशक्तेरुद्बोधने प्रधानोपायः। शरणागतिः षट्प्रकारा—

षोढा हि वेदविदुषो वदन्त्येनां महामुने।
आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम्॥
रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा।
आत्मनिक्षेपकार्पण्ये षड् विधा शरणागतिः॥(३७।२७-२८)

वैदिकाः शरणागति षड् विधां वदन्ति,—(१) आनुकूल्यसंकल्पः, सर्वदा भगवदनुकूले स्थातुं दृढ़प्रतिज्ञा। (२) प्रतिकूलतापरित्यागः, (३) सर्वदा मां रक्षतीति विश्वासः। (४) गोप्तृत्ववरणम्, अर्थाद् भगवन्तमेव केवलरक्षकत्वेन वृणोति। (५) आत्मनिक्षेपः—भगवत्यात्मसमर्पणम्। (६) कार्पण्यम्—दीनता।

शरणागतभक्तस्य प्रार्थना कीदृशी भवेद् इत्येतद्विषये **अहिर्बुध्न्यसंहितायामुक्तम्**—

अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः।
त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः॥
शरणागतिरित्युक्ता सा देवेऽस्मिन् प्रयुज्यताम्।(३७।३०-३१)

हे भगवन्। अहम् अपराधराशीनामालयोऽकिञ्चनो निराश्रयश्च। त्वमेव ममोपायो भव। इत्येवं प्रार्थनारूपो मनोभाव एव "शरणागति" नाम्नाभिहितो भवति। इत्थमहर्निशं परमेश्वरे प्रयुज्यम्।

### "मुक्तिः"

एवम्भावेन षड्विधशरणागतेः साधनया जीवो मुक्तिलाभं करोति। मुक्तजीवो दिव्यदेहधारणपूर्वकं भगवतः पररूपेण सह परमव्योम्नि (वैकुण्ठे)

परमानन्देन विहरति। वैकुण्ठे "अनन्त-गरुड़-विश्वक्सेनादयो नित्यदेहधारिणो जीवा निवसन्ति। मुक्तजीवा ज्ञानानन्दमयनित्यदेहप्राप्ताः सन्तः परमव्योम्नि भगवत्या लक्ष्मीदेव्या सह भगवन्तं नारायणं नित्यं दृष्ट्वा पूजयन्ति; तदुक्तम्—

स देशः परमं व्योम निर्मलं पुरुषं परम्।
निःसीमसुखसन्तानमनवद्यं जनाकुलम्॥
तत्रानन्दमया भोगा लोकाश्चानन्दलक्षणाः।
ज्ञानानन्दमया देहा मुक्तानां भावितात्मनाम्॥
सदा पश्यन्ति ते देवाः पुरुषं पुष्करेक्षणम्।
षाड्गुण्यविग्रहं देवं तादृश्या च श्रिया युतम्॥(६।२२-२४)

ये खलु प्रोक्तभावेन विष्णोः परं पदं लब्ध्वा कृतकृतार्थास्तेषां काल-कल्लोल-सङ्कुल संसारमार्गे पुनरावृत्तिर्न भवति। तदुक्तम्—

परमं तेऽध्वनः पारं वैष्णवं पदमाश्रिताः।
विशन्ति नेममध्वानं काल-कल्लोल-संकुलम्॥ (अहि सं २८)



इति कामरूपान्तर्वर्ति-श्रीमदुग्रतारा-महापीठाध्यक्ष-श्रीचक्रेश्वर-भट्टाचार्य-सङ्कलिते शाक्त-दर्शने विश्वनिरूपको नाम तृतीयः परिच्छेदः

———

# चतुर्थः परिच्छेदः

### जगद्रहस्यम्

मेधा ऋषिः सुरथं प्रति चण्डीतत्त्वकथाप्रसङ्गेन जगद्रहस्यमिदमुवाच, ——मूर्तिरहस्ये दशमश्लोके,——"अनया व्याप्तमखिलं जगत् स्थावर-जङ्गम" मिति। तथाहि,——चराचरमिदं सर्वं जगत् पराशक्त्या भगवत्या महालक्ष्म्या परिव्याप्तमासीत्। एतच्छ्लोकार्थमध्ये शाक्त-दर्शनस्य वैशिष्ट्यपूर्णः सिद्धान्त एकः सूचितः।

अद्वैत-वेदान्तमते जगत् चित्स्वरूपा परब्रह्मशक्तिर्माया;——एषा माया जड़ा मिथ्या च। अत एव तत्कार्यं जगदपि जड़ं मिथ्या च। शाक्तदर्शनमते तु जगत् स्वतःप्रकाश"श्चिति"शक्तेरुल्लासः। काश्मीरीयाद्वैतदर्शने चिति-शक्तेरपरं नाम "विमर्शः"। विमर्शस्य स्वातन्त्र्यशक्तिः स्वतःप्रकाश-ब्रह्म-स्वरूपा। अतस्तच्छक्तेः कार्यं जगदपि सत्यं, कदापि मिथ्या न भवति। तत्त्वमिदं क्रमशः सुस्पष्टं भविष्यति।

चितिशक्तिः शिवाद्वैतदर्शने शाक्ताद्वैतदर्शने च वस्तुत एकैव। यतः, शाक्तदर्शने शिव-शक्त्योरभिन्नत्वमखण्डत्वमद्वयत्वञ्च प्रतिपादितम्। न तु अद्वैतवेदान्तमतसिद्धाधिष्ठानवादोपरि तेषां निर्भरः। "प्रत्यभिज्ञाहृदयं" नाम शिवाद्वैतवादस्यान्यतमः प्रसिद्धो ग्रन्थः। राजानक-क्षेमराजेन प्रणीतोऽयं ग्रन्थः (११श शताब्द्याम्)। ग्रन्थप्रारम्भे चितिशक्तेः स्वरूपं, विश्वसृष्ट्यादिव्यापारे चितिशक्तेरेव केवलहेतुत्वञ्च प्रतिपादितम्। उक्तञ्च प्रथमसूत्रे,——"चितिः स्वतन्त्रा विश्वसिद्धिहेतुः" (१) विश्वसिद्धेः सृष्टिसंहारादिव्यापारस्य स्वतन्त्रा स्वयंप्रकाशशीला चितिशक्तिरेकमात्रहेतुः कारणम्।

अस्य टीकायामुक्तम्——"विश्वस्य सदाशिवादेर्भूम्यन्तस्य सिद्धौ निष्पत्तौ, प्रकाशने स्थित्यात्मनि, परप्रमातृविश्रान्त्यात्मनि च संहारे, पराशक्तिरूपा चितिरेव भगवती स्वतन्त्रा, अनुत्तरविमर्शमयी शिवभट्टारिकाऽभिन्ना हेतुः कारणम्।"

"विश्वस्य" सदाशिवात् स्थूलपृथिवीपर्यन्तसमस्ततत्त्वस्य सृष्टिप्रलये प्रकाशाऽप्रकाशविषये 'चिति'रेव मूलकारणम्। परा शक्तिरूपा भगवती स्वतन्त्रा चैतन्यमयी नाम 'चिति'रेषा परशिवतो वा परब्रह्मतो वा अभिन्नरूपा।

चितेर्विकाशे जगत उन्मेषोऽस्तित्वं, चितेः सङ्कोचे जगतो निमेषोऽप्रकाशत्वं च। सदा शुद्धा स्वतन्त्रा प्रकाशरूपा चितिशक्तिः। अस्याः प्रकाश एवास्या-नन्तजगतो विकाशः। अत एव एकाधारे युगपद् विश्वस्य कार्यं कारण-ञ्चोभयं भवति। द्वितीयसूत्रम्—"स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति।" (२) चितिशक्तिः स्वेच्छया स्वकीयस्वरूपभित्तेरुपरि विश्वप्रकाशं साधयति।

अस्य विश्वस्य चित्शक्तितो भिन्नत्वे प्रतीयमानेऽपि वस्तुतश्चित्शक्त्या सहाभिन्नत्वम्। यथा दर्पणप्रतिविम्बितनगरस्य। "विश्वं दर्पणे नगरवदभिन्न-मपि ततो भिन्नमिवोन्मीलयति।" उन्मीलनं सत्ताया अवस्थाविशेषस्य प्रकटी-करणम्। स्वप्रकाशचिज्ज्योतिष एव विश्वसत्तारूपेणोन्मीलनं, तस्या एवा-वस्थान्तरम्। परन्तु विश्वरूपेण यद् दृश्यते, तत्सर्वं चितिशक्तेरेवावस्थाविशेषः। अत एव जगत् सत्यम्।

## "षट्त्रिंशत्तत्त्वम्"



शाक्त-शैवोभयागमे षट्त्रिंशत्तत्त्वानि स्वीकृतानि। तदुक्तं परशुराम-कल्पसूत्रे,—"षट्त्रिंशत्तत्त्वानि विश्व" (१।४) मिति। विश्वमिदं षट्त्रिंशत्तत्त्वा-त्मकम्। एतेषां नामानि यथा (१) शिवः, (२) शक्तिः, (३) सदा-शिवः, (४) ईश्वरः, (५) शुद्धविद्या, (६) माया, (७) अविद्या, (८) कला, (९) रागः, (१०) कालः, (११) नियतिः, (१२) पुरुषो जीवो वा, (१३) प्रकृतिः, (१४) मनः, (१५) बुद्धिः, (१६) अहङ्कारः, (१७-२१) श्रोत्रादि-पञ्च ज्ञानेन्द्रियाणि, (२२-२६) वागादि-पञ्च कर्मेन्द्रियाणि, (२७-३१) रूपादि-पञ्च विषयेन्द्रियाणि, (३२-३६) आकाशादि-पञ्च भूतानि च।

## "तत्त्व"शब्दव्युत्पत्तिः

तन्-धातोरुत्तरं कर्तृवाच्ये क्विप्-प्रत्यये "तत्" इति सिद्धम्। तन्धातोरर्थः —विस्तारो विस्तृतिर्व्याप्तिरिति यावत्। यः सर्वदेशेषु सर्वकालेषु सर्वत्र सर्व्वं व्याप्य वर्तते, स एव "तत्"शब्दवाच्यः। ब्रह्म खलु सर्वदेशेषु सर्वकालेषु व्यापकत्वेन सर्वत्र वर्तते,—अत एव ब्रह्मैव तत्पदार्थः। "तत्" इत्यस्य भावो धर्मो वा "तत्त्वम्"। परमशिवतः क्षितिपर्यन्तं षट्त्रिंशत्पदार्थाः।

**"आत्मतत्त्वं-विद्यातत्त्वं-शिवतत्त्वञ्च"**

पूर्वोक्त-षट्त्रिंशत्तत्त्वानि विभज्य प्रधानतो भागत्रयं कृतम्। पृथिवीतो मायातत्त्वपर्यन्तान्येकविंशतितत्त्वानि "आत्मतत्त्वमिति कथितम्। शुद्धविद्या, ईश्वरः, सदाशिवश्चेति तत्त्वत्रयं विद्यातत्त्वमिति कथितम्। शक्तिशिवौ नाम तत्त्वद्वयं शिवतत्त्वमित्यभिहितम्। तदुक्तं **सेतुबन्धग्रन्थे**,—

"मायान्तमात्मतत्त्वं विद्यातत्त्वं सदाशिवान्तं स्यात्।
शक्तिशिवौ शिवतत्त्वं तुरीयतत्त्वं समष्टिरेतेषाम्॥"इति।

श्रीमद्भास्कररायेण सेतुबन्धे (१।४५-४६) उक्तं—ब्रह्म सच्चिदानन्दस्वरूपम्। पृथिवीतो मायातत्त्वान्तेष्वेकत्रिंशत्तत्त्वेषु "सत्"स्वरूपं प्रकटितम्; एवं चित्स्वरूपमानन्दस्वरूपञ्चेति द्वयमावृतत्वेनेति एकत्रिंशत्तत्त्वानि तावद् "आत्मतत्त्वम्"।

शुद्धविद्या, ईश्वरः, सदाशिवश्चेति-तत्त्वत्रये "सच्चित्"स्वरूपं प्रकटितम्, "आनन्द"-स्वरूपमावृतं तेनैतत्तत्त्वत्रयं विद्यातत्त्वम्।

शक्तिः शिवश्चेति तत्त्वद्वये न कस्यापि स्वरूपम् आवृतम्; अत एवोक्त-तत्त्वद्वयं शिवतत्त्वमिति नाम्नाऽभिहितम्। तान्त्रिकाचमने "आत्मतत्त्वाय स्वाहा" "विद्यातत्त्वाय स्वाहा", "शिवतत्त्वाय स्वाहे"ति मन्त्रत्रयस्योच्चारणपूर्वकं साधकः स्वीय-सच्चिदानन्दात्मकब्रह्मस्वरूपताभावनां करोति।

## (१) शिवतत्त्वम्

त्रिपुरासिद्धान्तान्तर्गत-परशुरामकल्पसूत्रे १।४ टीकायां रामेश्वरेण सङ्क्षेपेण षट्त्रिंशतत्त्वविवरणं प्रदत्तम्। मृगेन्द्रसंहितायां विस्तृतविवरणमपि प्रदत्तम्। काश्मीरीय-शिवाद्वैतापरनामधेय-त्रिकसिद्धान्तान्तर्भुक्त-"षट्त्रिंशत्तत्त्वसन्दोह"-नामकग्रन्थेऽप्युक्तविषय आलोचितः।

प्रथमतत्त्व-"शिव"स्वरूपविषये (परशुरामकल्पसूत्रटीकायाम् १।४) रामेश्वरोऽवदत्—"सृष्टयादौ केवलं स्वकीयस्वरूपेणावस्थितस्य परमशिवस्य 'बहु स्यां प्रजायेय'—अर्थादहं बहु भवेयं प्रजायेयेत्याकाराया इच्छाशक्तेरुदयोऽभवत्। इच्छाशक्तितो ज्ञानशक्तिस्ततः क्रियाशक्तिरुत्पन्ना। अस्य शक्तित्रयस्य सहयोगादंकुरच्छायेव युगपदर्थसृष्टिः शब्दसृष्टिश्चारब्धा। तादृक्सिसृक्षा-(अर्थात् सृजनेच्छाशक्ति) रूपोपाधिविशिष्टः परमशिवः

"शिवतत्त्वम्"। परमशिवो निर्गुणः, किन्तु सिसृक्षाया उदये सगुणः शक्तियुक्तश्च भवती"ति।

श्रीमद्भास्करराय: "सौभाग्यभास्कर"ग्रन्थे प्रोक्तवान्--प्रलयकाले सूक्ष्मावस्थापन्नं जगद् गर्भीकृत्य शक्तिः शिवे विलीनाऽभवत्, तदा च शक्तिक्रियापि नातिष्ठत्। एतदवस्थाप्राप्तं निर्गुणं ब्रह्मैव परमशिवः। सृष्टेरुन्मुखावस्थायां परमशिवस्येक्षण-काम-तपोविचिकीर्षादिरूप-प्रथमस्पन्दने शक्तेर्विकाशोऽभवत्। एतच्छक्तियुक्तः परमशिव एव प्रथमतत्त्वं "शिवः"। **षट्त्रिंशत्तत्त्वसन्दोह-ग्रन्थे** "शिवतत्त्व"स्य स्वरूपनिर्धारणे एतावदेवोक्तम्,--

"यदयमनुत्तरमूर्तिर्निजेच्छयाऽखिलमिदं जगत्स्रष्टुम्।
स्पन्दते स स्पन्दः प्रथमः शिवतत्त्वमुच्यते तज्ज्ञैः॥१॥" इति।

अनुत्तरमूर्तिः परमशिवः स्वेच्छावशतो यदाऽखिलमिदं जगत् स्रष्टुं स्पन्दितोऽभवत्, तदा सृष्टेरुन्मुखावस्थायां यत्तस्य प्रथमस्पन्दनं तदेव "शिवतत्त्व"मिति तत्त्वज्ञा वदन्ति।



## (२) शक्तितत्त्वम्

**परमानन्दतन्त्रे**,--

प्रपञ्चवासनारूपा शक्तिरित्यभिधीयते।
निष्प्रपञ्चचिदेकात्मा शिवतत्त्वं समीरितम्॥

शिवस्य विश्वसिसृक्षाशक्तिः "शक्तितत्त्व"मिति नाम्ना ख्याता। रामेश्वरः **परशुरामकल्पसूत्रटीकायामवदत्**,--निर्गुण एव शिवो यो "बहु स्यां प्रजायेय" इतीच्छाशक्त्या युक्तः सृष्ट्युन्मुखः स एव शिवः शक्तिपदवाच्योऽभवत्।

"प्रकाशो विमर्शः" त्रिकसिद्धान्तमते परमशिवस्य परमेश्वरस्य वा हृदये सिसृक्षाविर्भावमात्रं तस्य रूपद्वयमभवत्,--शिवरूपं शक्तिरूपञ्च, तत्र शिवः प्रकाशरूपी, शक्तिर्विमर्शरूपिणी। विमर्श-शब्दार्थः पूर्णोऽहं कृत्रिमोऽहमित्यस्य स्फूर्तिः। स्फूर्तिरियं सृष्टिकाले विश्वाकारा, स्थितिकाले विश्वप्रकाशा, प्रलयकाले च विश्वसंहरणरूपाऽभवत्। "विमर्शो" नाम विश्वाकारेण, विश्वप्रकाशेन, विश्वसंहारेण चाकृत्रिमाहमिति स्फूरणम् (परा-प्रवेशिका)। विमर्शशक्तेरपरनामानि,--चित्, चैतन्यम्, संवित्, स्वरमोदिता, परा वाक्, स्वातन्त्र्या, परमात्मनि मुख्यैश्वर्या, कर्तृत्वम् स्फूरत्ता, शारा, स्पन्द इत्यादीनि।

प्रमाया रूपद्वयम्--अहमंश इदमंशश्चेति। अहमंशग्राहकः शिवः प्रकाशो वा, इदमंशग्राहकः शक्तिर्वा विमर्शो वा। विमर्शेन प्रकाशानुभावो जायते, प्रकाशस्थितौ च विमर्शस्य कल्पना सम्भवति। यथा दर्पणं विना मुखमण्डलस्य रूपं प्रत्यक्षं न भवति, तथा विमर्शं विना प्रकाशस्य स्वरूपं न सम्भवति। मधुनि मिष्टत्वं नित्यं किन्तु मधु स्वमिष्टत्वग्रहणेऽसमर्थमेव। एवञ्च शक्तिं विना शिवस्य स्वीयप्रकाशरूपज्ञानं न भवति।

पुण्यानन्दस्तदीये "कामकलाविलास"-ग्रन्थे आद्यशक्तिं "शिवरूपविमर्श-निर्मलादर्शत्वेन" वर्णयंस्तस्याः स्वरूपस्य सुन्दरपरिचयमदात्। यथा कोऽपि राजा निर्मलदर्पणे स्वप्रतिबिम्बं दृष्ट्वा निजमुखसौन्दर्यं सम्यग् जानाति, तथा शिवोऽपि स्वाधीनभूतामात्मशक्तिं दृष्ट्वा स्वीय-परिपूर्णाहन्ताप्रकाशमयस्वरूपं जानाति। अत एव "प्रकाशो" विमर्शात्मकः, "विमर्श"श्च प्रकाशात्मकः। अत एव शिवः शक्तिं विना स्थातुं न शक्नोति। शक्तिरपि शिवं विना स्थातुं न शक्नोति। उक्तञ्च,--

न शिवेन विना देवी न देव्या च विना शिवः।
नानयोरन्तरं किञ्चिच्चन्द्रचन्द्रिकयोरिव॥



तथाहि,--यद्वच्चन्द्रज्योत्स्नयोः पार्थक्यं नास्ति, तद्वच्छिवशक्त्योरपि किमपि पार्थक्यं नास्ति। उक्तञ्च सोमानन्दधृत **शिवदृष्टौ**,--

न शिवः शक्तिरहितो न शक्तिर्व्यतिरेकिणी।
शिवः शक्तस्तथा भगवानिच्छया कर्तुमीहते॥
शक्तिशक्तिमतोर्भेदः शैवे जातु न वर्ण्यते॥(३।२।३)

श्रीशङ्कराचार्योऽप्याह—

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं
नो चेदेवं देवो न खलु कुशलः स्पन्दितुमपि।

## (३) सदाशिवो वा सादाख्यतत्त्वं वा

उक्तञ्च **षट्त्रिंशत्तत्त्वसन्दोहे**—

स्वेच्छाशक्त्युद्गीर्णं जगदात्मतया समासाद्य।
निवसन् निखिलानुग्रहनिरतः सदाशिवोऽभिहितः॥(३)

स्वेच्छाशक्त्या समुद्भूतं जगद् येनाहं-रूपेण समाच्छाद्यावस्थीयते तदेव निखिलजगतोऽनुग्रहनिरतं तत्त्वं "सदाशिव"तत्त्वमित्यभिहितम्।

रामेश्वरोऽवदत्,—पूर्वोक्ततादृशजगतोऽहन्तया यद् दर्शनं, तदहमितिता-दृशस्पष्टवृत्तिमत् "सदाशिव"पदवाच्यं तृतीयं तत्त्वम्। अर्थाद् यो विश्वेश्वरो-ऽहमिति मन्यते, विश्वेन सह यस्याभिन्नभावः स "सदाशिवः"। सदाशिवस्य अहन्ता पराहन्ता पूर्णाहन्ता।

चितिशक्तेः प्रथमस्पन्दने अहं-भावस्य स्फूरणं भवति; तदा शक्तिः केन्द्रीभूता, चेतना च केन्द्रगता सती स्फुटोऽहंबोधो भवति। केन्द्रगतायां चेतनायां ज्ञानं निरुपाधिस्वरूपं विहायाहं-केन्द्रे स्फूर्तं भवति। प्राथमिकबोधोऽयं शुद्धाहं-रूपेण स्फुटो भवति। तस्याहम्भावस्य न किमप्यावरणं वा पार्थक्यं वा, व्यक्तित्वबोधोऽपि वा न वर्तते।

एतदवस्थायां ज्ञानं विषय-विषयिसम्बन्धतो मुक्तन्तिष्ठति, सर्वदाहंवृत्ति-युक्तम् अथच विश्वदृश्यम् अत्र नास्ति, चितिस्पन्दनमप्यत्र शुद्धाहंरूपेण प्रवाहितं तिष्ठति। अस्यैव नाम "पूर्णाहन्ता", इदमेव "सदाशिवतत्त्वम्" इति कथ्यते। मन्त्रशास्त्रे सदाशिवतत्त्वं "नादशक्ति" रितिनाम्नाभिधीयते।



"सादाख्य"तत्त्वम्––सदाशिवतत्त्वादस्य सत्ता। अर्थाद्––विश्वसृष्टेः सूचनाजनितत्वेनेदं "सादाख्य"तत्त्वनाम्नाभिहितम्। सदाख्यायां भवं सादा-ख्यम्, यतः प्रभृति सदिति प्रख्या (**ईश्वरप्रत्यभिज्ञा-विमर्शिनी**) (३।१।२)

## (४) ईश्वरतत्त्वम्

इदं जगदिति केवलं भेदविषयिणी या वृत्तिः, तद्वद् "ईश्वर" पदवाच्यं तुरीयं तत्त्वम् (रामेश्वरः)। उक्तञ्च **षट्त्रिंशत्तत्त्वसन्दोहे**––

"विश्वं पश्चात् पश्यन् इदन्तया निखिलमीश्वरो जातः।"

(४) ब्रह्मा, विष्णुः, रुद्रश्चेति मूर्त्तित्रयम् ईश्वरतत्त्वान्तर्गतम्। भेद-कथाप्रकटने जाते, सृष्टेः पालनस्य संहारस्य च प्रयोजनं भवति, तदा ईश्वरः प्रोक्तरूपत्रयेण तत् क्रियात्रयं सम्पादयति। विकाशोन्मुखज्ञानस्य तृतीयावस्था "ईश्वरतत्त्वम्। अत एव सदाशिवस्य बाह्यरूपम्।

"ईश्वरो वहिरुन्मेषो निमेषोऽन्तः सदाशिवः।" (३।१।३)

शिवशक्तेर्बहिरुन्मेषः (चक्षुरुन्मीलनं) "ईश्वरः"। एवमन्तर्निमेषः (चक्षुर्निमीलनं) "सदाशिवः" कथ्यते। सदा शिवावस्थायामचलरूपे परमेश्वरे किञ्चिच्चलनात्मकरूपस्य स्फूरणं भवति। प्रमाज्ञानस्याहमंश इदमंशमाच्छाद्य वर्तते, किन्तु ईश्वरावस्थायाम् "अहम्" "इदम्"-जगत् स्पष्टरूपमेकात्मनोऽंशरूपेणात्मनोऽभिन्नत्वेनानुभूयते। सदाशिवतत्त्वे अहन्तायाः प्राधान्यम्, ईश्वरतत्त्वे इदन्तायाः स्फूर्तिरधिकतरा। मन्त्रशास्त्रे ईश्वरतत्त्वं "विन्दु"रिति नाम्नाभिहितम्।

## (५) शुद्धविद्यातत्त्वम्

जगदहमेवेत्याकारिका या सदाशिवसम्बन्धिनी वृत्तिः सा विद्यापदवाच्यं पञ्चमं तत्त्वम् (रामेश्वरः)। अहन्ता, इदन्ता, इत्येतदुभयोरैक्यप्रतिपत्तिः,—अर्थाज् "जगद"हमेवेत्याकारा या सदाशिववृत्तिः सा "विद्या" नाम पञ्चमतत्त्वम्। मलरहितत्त्वेन "शुद्धविद्या" सद्विद्या वा।

**षट्त्रिंशत्तत्त्वसन्दोहे** प्रोक्तम्—

"सा भवति शुद्धविद्या येदन्ताहन्तयोरभेदमतिः"॥(४)

इदन्ताहन्तयोर्यदभेदज्ञानं सा शुद्धविद्या कथिता।

**ईश्वरप्रत्यभिज्ञायामुक्तम्**—

"सामानाधिकरण्यं च सद्विद्याहमिदं धियः।" (३।१।३')

ज्ञानस्य यादृगवस्थायाम् "अहम्" "इदम्" इत्यनयोः पूर्णसामानाधिकरण्यमक्षुण्णं विद्यते, अर्थादुभयोरेकत्र समानत्वेन स्थितिर्भवेत्, सैव "सद्विद्या"। इत्याकारावस्थायां सदाशिवः सर्वं जगत् स्वविभवत्वेनानुभवति। उक्तञ्च-**ईश्वरप्रत्यभिज्ञायाम्**—

"सर्वे ममेमं विभवं परिजानन्ति।" (४।१।१२) शिवतत्त्वे "अहं" विमर्श (चितिशक्तिः)। सदाशिवतत्त्वे "अहम् इदं" विमर्शः। ईश्वरतत्त्वे च "इदम्-इदं" विमर्शो भवति। एतेषां मध्ये प्रतिस्थानं प्रथमपदस्य प्राधान्यं वर्तते। इदन्ताहन्ता च विभिन्नत्वेन स्थातुं न शक्नुतः। अहन्ताया इदन्ताभिन्नस्वरूपप्रकाशस्य न कोऽप्युपायः। पारस्परिकभावेनायं सन्निविष्टतायाः पूर्णविकाशो भवति,—यद्येतयोः समन्वयो भवति। एतदवस्थायाम्—इदन्ता तस्याः स्वरूपम्

अहन्तामध्ये पश्यति। अहन्ता च तस्याः प्रकाशम् इदन्तामध्ये पश्यति। एषा **ज्ञान-भूमिकातन्त्रे** "सद्विद्या" इति कथ्यते।

### (६) मायातत्त्वम्

इदं जगदित्याकारिका-ईश्वरनिष्टा भेदविषयिनी वृत्ति"र्माया"पदवाच्यं षष्ठं तत्त्वम् (रामेश्वरः)। इदं जगन् मत्तो भिन्नेत्याकारिका ईश्वरवृत्तिः "माये"त्यभिहिता। विद्या जन्याभेदबुद्धेरुदयो मायाजन्यश्च भेदबुद्धेरुदयो भवति। उक्तञ्च **षट्त्रिंशत्तत्त्वसन्दोहे**—

मायाविभेदबुद्धिर्निजांशजातेषु निखिलजीवेषु।
नित्यं तस्य निरंकुशविभवं वेलेव वारिधे रुन्धे ॥५॥

यया वृत्त्या ईश्वरांशजातनिखिलजीवगणमध्ये भेदज्ञानमुत्पद्यते सैव "माया"। वेलाभूमिर्यथा समुद्रस्य तरङ्गरूपविभवमवरुणद्धि, तद्वदीश्वरस्य नित्यनिरंकुशविभवस्वरूपं मायया सीमाबद्धं भवति।

#### "मायायाः पञ्च उपाधयः कञ्चुका वा"

मायायाः पञ्चोपाधीनां साहाय्येन ईश्वरो निजं सीमाबद्धं कृत्वा जीवरूपेण प्रकाशितो भवति। एतेषां पारिभाषिकं नाम कञ्चुक इति, अर्थादीश्वरस्यानन्तशक्तिमाच्छादियतुमावरणम्। मायायाः पञ्चोपाधयो यथा— (१) अविद्या, (२) कला, (३) रागः, (४) कालः, (५) नियतिश्चेति।

### (७) अविद्यातत्त्वम्

पूर्वोक्तविद्या-तिरोधान-शक्तिमत्, तद्विरोध्यविद्यापदवाच्यं सप्तमं तत्त्वम्। (रामेश्वरः)। पूर्वोक्त-विद्याया आच्छादनकारिणो विद्याविरोधिनस्तत्त्वस्य नाम"अविद्या"। ईश्वरस्य सर्वज्ञता—अविद्यायां संकुचिता भवति; तस्मात् कारणाज्जीवः किञ्चिज्ज्ञो भवति।

भास्करराय-क्षेमराज-भोजदेव-प्रभृतिभिरेषा विद्यातत्त्वत्त्वेन निर्देशिता। पञ्चमतत्त्वस्य नाम "शुद्धविद्यातत्त्वम्" इति, सप्तमतत्त्वस्य च नाम"अविद्या-तत्त्व" मिति। तेषामिदमेव मतम्,—शिवः सर्वज्ञः, अत एव सर्वज्ञताशक्तिस्तस्य विद्यते। शिवांशो जीवः, अर्थात् शिवस्य संकुचितावस्थैव जीवः। अत एव सर्वज्ञताशक्तिरपि संकुचिततया किञ्चिज्ज्ञतारूपेण जीवे वर्तते। अस्याः

किञ्चिज्ज्ञताशक्तेर्नाम "विद्ये"ति। अनया विद्यया सर्वज्ञता शिवभावश्चाव्रियते अत एव सा "अविद्या"पि भवितुमर्हति। एतद्विषये—**षट्त्रिंशत्तत्त्व-सन्दोहे** उक्तम्,—

> "सर्वज्ञताशक्तिः परिमिततनुरल्पवेद्यमात्रपरा।
> ज्ञानमुत्पादयन्ती विद्येति निगद्यते बुधैराद्यैः ॥९॥

ईश्वरस्य सर्वज्ञताशक्तिः प्राप्तसङ्कोचतया किञ्चिज्ज्ञतारूपं लभते; तदेवं किञ्चिज्ज्ञानोत्पादकत्वेना"ऽविद्यातत्त्व"मित्यभिहितम्।

## (८) कलातत्त्वम्

जीवनिष्ठं सर्वकर्तृत्वं यत्किञ्चित्कर्तृत्त्वेन संकुचितं, तदेव "कला" पदवाच्यमष्टमं तत्त्वम् (रामेश्वरः)। ईश्वरस्य सर्वकर्तृत्वशक्तिः संकुचिततया किञ्चित्कर्तृत्वरूपेण जीवेऽवतिष्ठते। एतत्किञ्चित्कर्तृत्वशक्तेर्नाम "कला"-तत्त्वमिति। उक्तञ्च **षट्त्रिंशत्तत्त्वसन्दोहे**—

> तत्सर्वकर्तृता सा संकुचिता कतिपयार्थपरा।
> किंचित्कर्तारममूं कलयन्ती कीर्त्यते कला नाम ॥८॥

यया ईश्वरस्य सर्वकर्तृत्वशक्तिः संकुचिता, या च जीवाय किञ्चित्कर्तृत्वं प्रयच्छति, सैव "कला" तत्त्वमित्यभिहिता।

## (९) रागतत्त्वम्

पूर्वोक्तरीत्या जीवनिष्ठा या नित्यतृप्तिः, सैव केषुचित् विषयेषुव्वतृप्त्या संकुचिता "राग" पदवाच्या नवमं तत्त्वम् (रामेश्वरः)। शिवो नित्यतृप्तः, सा शिवनिष्ठनित्यतृप्तता-शक्तिः संकुचिततया अपूर्णतृप्तिरूपेण जीवेऽवतिष्ठते। जीवस्यापूर्णतृप्तिहेतुत्वेन भोग्यविषयेऽनुरागो भवति। एतत्संकुचितनित्यतृप्तताशक्तिरेव "राग"तत्त्वम्। उक्तञ्च **षट्त्रिंशत्तत्त्वसन्दोहे**—

> नित्यपरिपूर्णतृप्तिः शक्तिस्तस्येव परिमिता सती।
> भोगेषु रञ्जयन्ती सततममूं रागतत्त्वतां याता ॥१०॥

परमेश्वरस्य नित्यपरिपूर्णतृप्तिर्नाम शक्तिर्येन संकुचिता सती जीवानामपूर्णतृप्तिहेतोर्भोग्यविषये सततमनुरागमुत्पादयति तस्यैव नाम रागतत्त्वमिति।

## (१०) कालतत्त्वम्

जीवनिष्ठा या नित्यता, तस्या आच्छादने सति, सैव नित्यता, अस्ति, जायते, वर्धते, परिणमति, अपक्षीयते, विनश्यतीति षड्भावयोगात् संकुचिता "काल"पदवाच्यं दशमं तत्त्वम्।

शिवो नित्यो ध्वंसप्रागभावरहितः (रामेश्वरः)। शिवस्य नित्यताशक्तिः षड्भावविकारयोगेन संकुचितत्वेन "काल"नाम्ना ख्याता जायते। जागतिकाः सर्वे पदार्थाः षड्भावविकारयुक्ताः, यथा,—(१) अस्ति—स्वरूपेणावतिष्ठते; (२) जायते—उत्पन्नो भवति; (३) वर्धते—वृद्धिप्राप्तो भवति; (४) विपरिणमति—अवस्थान्तरं प्राप्नोति; (५) अपक्षीयते—क्षयप्राप्तो भवति; (६) विनश्यति—विनाशं प्राप्नोति।

उक्तञ्च **षट्त्रिंशत्तत्त्वसन्दोहे,**—

> सा नित्यतास्य शक्तिर्निकृष्य निधनोदयप्रदानेन।
> नियतपरिच्छेदकरी क्लृप्ता स्यात्कालतत्त्वरूपेण ॥११॥

परमेश्वरस्य नित्यताशक्तिः कालतत्त्वेन संकुचिता भूत्वा जन्ममृत्युप्रदानेन जीवं नियतसीमाबद्धं करोति। कालोऽयं लोकव्यवहारे सूर्यचन्द्रयोर्गत्यनुसारेण त्रुटि-लव-घटिका-दिन-मास-वत्सर-युग-कल्प-मन्वन्तर-रूपेण विभक्तो भवति।

## (११) नियतितत्त्वम्

परशिवजीवयोरभेदाद् यथा परशिवे सर्वस्वातन्त्र्यं तथा जीवेऽप्यस्ति; तस्य सर्वस्वातन्त्र्यस्य पिधानं पूर्वोक्ताविद्यया कृतं, देव कारणान्तरापेक्षं यत्कारणम् अपेक्ष्यते, तन्नियतिपदवाच्यमेकादशं तत्त्वम् (रामेश्वरः)।

परशिवजीवयोः स्वरूपतोऽभिन्नत्वेन परशिवे यथा सर्वप्रकारा स्वाधीनता विद्यते, तथा जीवेऽपि स्वाधीनता विद्यते। परशिवस्य स्वतन्त्रताशक्तिरविद्यायोगेन जीवे संकुचिता भूत्वा 'नियति'नाम्नाऽभिहिता भवति। उक्तञ्च **षट्त्रिंशत्तत्त्वसन्दोहे,**—

> यास्य स्वतन्त्रताख्याशक्तिः संकोचशालिनी सैव।
> कृत्याकृत्येष्ववशं नियतममूं नियमयन्त्यभून्नियतिः ॥(१२)

परमेश्वरस्य स्वतन्त्रा नाम शक्तिर्या संकुचिता सती जीवं सर्वत्र कार्याकार्ये नियतं नियन्त्रयति, सैव "नियति"रिति कथ्यते।

## (१२) जीव-तत्त्वम्

एतादृशनियति-काल-राग-कला-विद्याख्यतत्त्वपञ्चकाश्रयो जीवो द्वादश-तत्त्वम् (रामेश्वरः)। मायाजनितपूर्वोक्तनियति-काल-राग-कलाऽविद्येति-पञ्चविधकञ्चुकस्याश्रयस्वरूपं तत्त्वं जीवः पुरुषो वेत्यभिहितः।

## (१३) प्रकृतितत्त्वम्

सत्त्वरजस्तमोगुणानां साम्यरूपा "प्रकृतिः" चित्तापरपर्यायं त्रयोदशं तत्त्वम् (रामेश्वरः)। सत्त्वरजस्तमोगुणत्रयस्य साम्यावस्था "प्रकृतिः", तस्या नामान्तरं चित्तम्।

## (१४) मनस्तत्त्वम्

यदा सत्त्वतमसी अभिभूते भवतो रजसश्च प्राधान्यं जायते, तदा तत्प्रधानभूतं रजो मनःपदवाच्यं संकल्पहेतुश्चतुर्दशं तत्त्वम् (रामेश्वरः)। रजोगुणप्रधानान्तःकरणं "मनो" नाम। एतदवस्थायां सत्त्वतमोगुणेऽभिभूतत्त्वेनावतिष्ठेते। मनः संकल्पहेतुः।

## (१५) बुद्धितत्त्वम्

यदा रजस्तमसी अभिभूते भवतः सत्त्वस्य च प्राधान्यं तदा सत्त्वप्रधानं तदन्तःकरणबुद्धिपदवाच्यं निश्चयहेतुः पञ्चदशं तत्त्वम् (रामेश्वरः)। सत्त्वगुणप्रधानान्तःकरणं नाम "बुद्धिः"। तदा हि रजस्तमोगुणावभिभूतावस्थायां तिष्ठतः। बुद्धिर्निश्चयज्ञानहेतुः।

## (१६) अहंकारतत्त्वम्

सत्त्वरजसोरभिभूतावस्थायां यत्तमःप्रधानमन्तःकरणं तदहंकारपदवाच्यं विकल्पकारणं षोड्शतत्त्वम् (रामेश्वरः)। तमोगुणप्रधानान्तःकरणस्य नाम "अहंकार" इति। एतदवस्थायां सत्त्वरजोगुणावभिभूतौ तिष्ठतः। अहमित्यस्य क्रिया "अहंकारः"। अहंकारो विकल्पः, भेदज्ञभानस्य कारणम्।

## (१७-२१) पञ्च ज्ञानेन्द्रियाणि

(१७) श्रोत्रतत्त्वम्,—शब्दग्राहकमिन्द्रियं "श्रोत्रम्", सप्तदशं तत्त्वम्।

(१८) त्वक्तत्त्वम्—स्पर्शग्राहकमिन्द्रियं "त्वक्", अष्टादशं तत्त्वम्।

(१९) चक्षुस्तत्त्वम्,—रूपग्राहकमिन्द्रियं "चक्षु"रेकोनविंशं तत्त्वम्।

(२०) जिह्वातत्त्वम्—रसग्राहकमिन्द्रियं "रसनं" विंशं तत्त्वम्।

(२१) घ्राणतत्त्वम्,—गन्धग्राहकमिन्द्रियं "घ्राण"मेकविंशं तत्त्वम्।

## (२२-२६) पञ्च कर्मेन्द्रियाणि

(२२) वाक्तत्त्वम्,—व्यक्त"वागु"च्चारणानुकूलमिन्द्रियं द्वाविंशतत्त्वम्।

(२३) पाणितत्त्वम्—ग्रहणत्यागानुकूलमिन्द्रियं "पाणि"रित्यभिहितं त्रयोविंशं तत्त्वम्।

(२४) पादतत्त्वम्,—गमनानुकूलमिन्द्रियं "पाद" इत्यभिधेयं चतुर्विंशं तत्त्वम्।

(२५) पायुतत्त्वम्,—मलविसर्जकमिन्द्रियं "पायु"रित्यभिहितं पञ्चविंशं तत्त्वम्।



(२६) उपस्थतत्त्वम्,—मैथुनजनकमिन्द्रिय"मुपस्थ" इत्यभिहितं षड्विंशं तत्त्वम्।

## (२७-३१) पञ्च तन्मात्राणि, पञ्च विषया वा

(२७) शब्दतत्त्वम्,—सूक्ष्माकाशरूपं श्रवणेन्द्रियग्राह्यं "शब्द" इत्यभिहितं सप्तविंशं तत्त्वम्।

(२८) स्पर्शतत्त्वम्,—सूक्ष्मवायुरूपं त्वगिन्द्रियग्राह्यं "स्पर्श" इत्यभिहितमष्टाविंशं तत्त्वम्।

(२९) रूपतत्त्वम्,—सूक्ष्मतेजोरूपं चक्षुरिन्द्रियग्राह्यं "रूप"मित्यभिहितमेकोनत्रिंशं तत्त्वम्।

(३०) रसतत्त्वम्,—सूक्ष्मजलरूपं "रस" इत्यभिहितं रसनेन्द्रियग्राह्यं त्रिंशं तत्त्वम्।

(३१) गन्धतत्त्वम्,—सूक्ष्मपृथ्वीरूपं "गन्ध" इत्यभिहितं घ्राणेन्द्रियग्राह्यमेकत्रिंशं तत्त्वम्।

## (३२-३६) पञ्चभूतानि

(३२) आकाशतत्त्वम्,––अवकाशात्मक "माकाश" इत्यभिहितं स्थूलं द्वात्रिंशं तत्त्वम्।

(३३) वायुतत्त्वम्,––सदागतिमत्त्वात्मकगुणवद् "वायु" रित्यभिहितं स्थूलं त्रयस्त्रिंशं तत्त्वम्।

(३४) तेजस्तत्त्वम्,––उष्णताशक्त्यात्मकं "तेज" इत्यभिहितं स्थूलं चतुस्त्रिंशं तत्त्वम्।

(३५) जलतत्त्वम्,––द्रवत्ववत्त्वात्मकं "जल"मित्यभिहितं स्थूलं पञ्चत्रिंशं तत्त्वम्।

(३६) पृथिवीतत्त्वम्,––काठिन्यगुणवत्त्वात्मकं "पृथिवी" त्यभिहितं स्थूलं षट्त्रिंशं तत्त्वम्। (रामेश्वरः)।



## तत्त्वातीतसत्ता शिवशक्ति-सामरस्यं वा

प्रागुक्त-षट्त्रिंशत्तत्त्वव्यतिरिक्तस्तत्त्वातीत एकः पदार्थो वर्तते यो हि विश्वव्यापकः सन्नपि विश्वतः पृथगेव विद्यते; अतएव स युगपद् विश्वात्मको विश्वोत्तीर्णश्चेति। सदाशिवतः पृथ्वीपर्यन्तं चतुस्त्रिंशत्तत्त्वानि विश्वम् यस्य तत्त्वस्येदं विश्वमुन्मेषमात्रं तदेव तत्त्वं "शक्ति" पदवाच्यम्। "सृष्टि"-शब्देन सदाशिवप्रभृति-तत्त्वसमूहस्य क्रमश आविर्भावो बोध्यः। या खलु तत्त्वाविर्भावबीजस्वरूपा, यस्याश्च क्रमविकाश एव विश्वं, सैव "शक्ति"रित्यभिहिता।

शिवः सदा शक्तियुक्तो वर्तते। शक्तेरन्तर्मुखित्वे "शिवः" (अन्तर्लीनविमर्शः)। शिवस्य च वहिर्मुखत्वे "शक्ति" रभिहिता। अन्तर्मुखत्वं बहिर्मुखत्वं चेति भावद्वयं सनातनम्। शिवतत्त्वे शक्तिभावो गौणः, शिवभावः प्रधानः। शक्तितत्त्वेऽपि शिवभावो गौणः शक्तिभावः प्रधानः। परन्तु यत्र शिवशक्त्योरेकरसस्तत्र द्वयोरप्यप्राधान्यम्। सैव साम्यावस्था, "तत्त्वातीता" वस्था चेति, सैव हि "शिवशक्ति-सामरस्यम्"। केषांचिन्मते तत्त्वानि सप्तत्रिंशत्संख्यकानि। के चिद्वदन्ति, एतद्विषयेकिमपि वक्तुं चिन्तयितु वाऽपि न शक्यत, इति।

चरमतत्त्वमिदं शैवाः परमशिवं, शाक्ताश्च परमशक्तिमभिदधति। परमशिवोऽस्य विश्वस्योन्मीलनं स्वयमेव करोति। कस्याप्युपादानस्याधारस्यापि वाऽऽवश्यकता नास्ति। परमस्वातन्त्र्यशक्तिसम्पन्नः स्वेच्छया स्वभित्तौ स्वाधारे च जगदुन्मीलनं करोति। पूर्वमपि परमशिवे जगदासीत्। यथार्थमेवाचार्यो वसुगुप्तोऽवदत्,—

निरुपादानसंसारमभित्तावेव तन्वते।
जगच्चित्रं नमस्तस्मै कलानाथाय शूलिने॥

## चरमतत्त्वम्

साधका रुचेर्वैचित्र्यानुसारतः "चरमतत्त्वं" केचन "पुरुष"भावेन केचन वा "रमणी"भावेन व्याचक्षते। प्रत्यभिज्ञादर्शनस्य परमशिवः, त्रिपुरामतस्य षोड़शी देवी, ललिता देवी वा, वैष्णवमतस्य च श्रीकृष्ण एकोऽद्वितीयः सच्चिदानन्दस्वरूप इति। अतएव ते परतत्त्वस्य भिन्नं भिन्नं प्रतीकमात्रमेव। मूलतस्तद् वस्तु न पुरुषो नापि प्रकृतिः, परन्तु तयोरभेदात्मकं सामञ्जस्यमात्रम्। जगति यानि सौन्दर्याणि वर्तन्ते, तानि सर्वाण्येव तावदस्याखण्डपूर्णसौन्दर्यस्वरूपस्य कणामात्रं, छाया, विभूतिर्वा। "तस्य भासा सर्वमिदं विभाति।" तस्यैव ज्योतिःप्रकाशनेन सर्वं वस्तुजातमनुप्रकाशितम्। पूर्णसौन्दर्यस्वरूपपरतत्त्वम् एकाकि स्थातुमनिच्छयैव कालोपरि महाकालस्योर्ध्वे प्रस्फुटितम्भूत्वा स्वात्मानमेव खण्डसौन्दर्यमयजीवजगद्रूपेण प्रकटितं कृत्वा स्वयमेवास्वादयति, अथवा स्वात्मनि स्वप्रतिबिम्बं दृष्ट्वा स्वयमेवास्वादयति। एतत् प्रतिबिम्बमेव विश्वम्।

श्रीनटनानन्दनाथः "चिद्वल्ली" नाम्न्यां कामकलाविलासटीकायां दृष्टान्तेन तत्वमिदं प्रबोधयति; यथा कश्चिदतिसुन्दरमूर्ती राजा स्वसम्मुखावस्थिते स्वच्छे दर्पणतले स्वप्रतिबिम्बं सम्यक् प्रसमीक्ष्य तत्प्रतिबिम्ब'मह'मिति जानाति, तथैव परमेश्वरोऽपि स्वाधीनभूतां स्वशक्तिं सम्यगवलोक्य स्व-स्वरूपमवगच्छति। 'परिपूर्णोऽह'मितीयमेव नाम "पूर्णाहन्ता"। तथैव परमशिवसङ्गहेतुत्वात् परा शक्तिः स्वात्मन्यवस्थितं प्रपञ्चं निर्गमयति। अस्य प्रपञ्चस्यैव नाम "विश्व"मिति। गौडीयवैष्णवशास्त्रेऽप्युक्तम्—"भगवान् स्वरूपं दृष्ट्वा स्वयमेव मोहितोऽभव"दिति।

चमत्कारिणीयं पूर्णाहन्ता, चमत्कारी चायं कामः, प्रेमा च तस्यैव प्रकाशः। एष हि शिव-शक्ति-सम्मेलनस्या"दिरसः" शृङ्गाररसो वा। विश्वसृष्टिः रसतत्त्वमूले प्रतिष्ठिता।

## साधनाभासः

प्रसङ्गादत्रोच्यते,—वैदिकाचारे साधनायाः "षड्भावाः" कथ्यन्ते। (१) "शान्तभावः" स च पितृभावो मातृभावश्चेति। "पितृभाव"साधकः प्रह्लादो ध्रुवश्च। "मातृभाव" साधकः समाधिः सुरथश्च। (२) "सख्यभाव"-साधकोऽर्जुनो विभीषणश्च। (३) "दास्यभाव"साधको हनुमान् गरुड़श्च। (४) "वात्सल्यभाव"साधको नन्दो यशोदा चेति। (५) "मधुरभाव"साधका गोपा गोप्यश्च। (६) "द्वेषभाव"साधकाः कंसमहिषासुरादयः। "आसनम्"—स्थिरसुखमासनम्। तदुक्तं **कालिकापुराणे** दुर्गार्चाया योगपीठध्याने,—

सारासनं योगपीठं सुखासनमतः परम्।
आराध्यासनमस्माच्च ततश्च विमलासनम्॥

सारासन-सुखासनाराध्यासनविमलासनान्येतानि चत्वारि आसनानि च गुरुमुखाज् ज्ञातव्यानि। "पञ्चधा मुक्ति" रुक्ता **पद्मपुराणे,—**

सालोक्यमपि सारूप्यं सामीप्यं सार्ष्टिनामकम्।
सायुज्यमपि पञ्चानां फलान्येवं विदुः क्रमात्॥

तथाहि,—(१) "सालोक्यमुक्तिः"—देवीदेवयोरेकत्र वासः। (२) "सार्ष्टिः"—देवीदेवयोः सममैश्वर्यलाभः। (३) "सामीप्यमुक्तिः"—देवीदेवयोः सान्निध्यलाभः। (४) "सारूप्य मुक्तिः"—देवीदेवयोः समरूपतालाभः। (५) "सायुज्यमुक्तिः"—देवीदेवयोरभेदत्वलाभः। उक्तञ्च **देवीभागवते,—**

परानुरक्त्या मामेव चिन्तयेद्यो ह्यतन्द्रितः।
स्वाभेदेनैव मां नित्यं जानाति न विभेदतः॥(७।३७।१५)

यस्य परभक्तिलाभो जायते, स साधकोऽनलसो भूत्वा परमानुरागेण केवलं मामेवैकान्तिकभावेनचिन्तयन् परिशेषे "अहमेव सच्चिदानन्दरूपिणी भगवत्यस्मी"ति भावनयाऽभिन्नत्वेन जानाति।

इत्थं जाता परा भक्तिर्यस्य भूधर तत्त्वतः।
तदैव तस्य चिन्मात्रे मद्रूपे विलयो भवेत्।।७।३७।२७

हे भूधर! यथार्थतो यस्यैतादृशी पराभक्तिरुदिता भवेत्, स साधकस्तत्क्षणान्मम चिन्मयरूपे विलीनो भवेत्। एवैव हि देवी-सायुज्यमुक्तिः। उक्तञ्च **कुलार्णवतन्त्रे,**—

यथा जले जलं क्षिप्तं क्षीरे क्षीरं घृते घृतम्।
अविशेषो भवेत्तद्वज्जीवात्मपरमात्मनोः।। (६।१५)

यथा जले जलं, दुग्धे दुग्धं, घृते घृतं निक्षिप्तं सत्पार्थक्यहीनं जायते, साकल्येन सम्मिलितमेव भवति, तथैव परभक्तिप्रभावसम्मिलितयोर्जीवात्मपरमात्मनोरेकत्वं सम्पद्यते। पञ्चरात्रागमान्तर्भुक्त-जयाख्यसंहितायामेतादृशी मुक्तावस्था वर्ण्यते,—

यथानेकेन्धनादीनि संप्रविष्टानि पावके।
अलक्ष्याण्येव दग्धानि तद्वद्ब्रह्मण्युपासकाः।।
सरित्सङ्घाद् यथा तोयं संप्रविष्टं महोदधौ।
अलक्ष्यश्चोदके भेदः परस्मिन् योगिनां तथा।।
(४।२२-२३)

यथाग्निप्रक्षिप्तदग्धकाष्ठसमूहः पृथक् पृथङ् न लक्ष्यते, तथैवोपासनायाश्चरमावस्थायां परब्रह्मणि लीनः साधकोऽपि परब्रह्मीभवति, पृथक्त्वेन नास्तित्वं भजते। यथा विभिन्ननदीजलानि समुद्रं प्रविश्य साकल्येन लीयन्ते, न भेदेन दृश्यन्ते, तथा योगिनोऽपि साकल्येन परब्रह्मणि विलीयन्ते। यथोक्तं **मुण्डकोपनिषदि,**—

यथा नद्यः स्यन्दमानाः समुद्रे-
ऽस्तं गच्छन्ति नामरूपे विहाय।
तथा विद्वान् नामरूपाद् विमुक्तः
परात्परं पुरुषमुपैति दिव्यम्।।

यथा प्रवहमाणो नदीसमूहो नामरूपे विहाय, समुद्रेऽदृश्यो भवति, तद्वज् ज्ञानिजनोऽपि नामरूपे विहाय परात्परे दिव्यपुरुषे प्रविशतीति तान्त्रिकानामाकूतम्।

### ब्रह्माद्वैतवाद ईश्वराद्वयवादश्च

प्रत्यभिज्ञादर्शनं त्रिकदर्शनं वा सम्पूर्णमेवाद्वैतवादि। अयमद्वैतवाद 'ईश्वराद्वयवाद'नाम्नाऽभिहितः। श्रीमच्छङ्कराचार्यप्रचारितो "ब्रह्माद्वैतवाद" एवाभिनवगुप्तादिशैवाचार्यगणव्याख्यात "ईश्वराद्वयवादः"। परन्तु एतयोर्मध्ये कथञ्चिद् भेदोऽपि वर्तते। ब्रह्माद्वैतवादे विश्वोत्तीर्ण-निर्मल-र्विविकार-ब्रह्मणि कर्तृत्वं नास्ति। किन्त्वीश्वराद्वयवादे परमशिवे स्वातन्त्र्यशक्तिसम्पन्नता विद्यते; अत एव हि कर्तृत्वमस्ति। स हि परमशिवः सृष्टि-स्थिति-संहारानुग्रह-विलय-प्रभृति पञ्चकृत्यानां सम्पादकः।

अज्ञानस्य मायाया वा स्वरूपसम्बन्धेऽद्वैतवेदान्तस्य व्याख्यया प्रत्यभिज्ञा-वादी सन्तुष्टो न भवति। अज्ञानप्रवृत्तिः कस्मात् कथञ्च भवेत्? अज्ञानस्य प्रथमाविर्भावकारणं वा किम्? कस्य वशीभूतत्वेन ब्रह्म जीवरूपेण, अथवा अधीश्वरत्वेन-ईश्वररूपेण प्रकटितं भवति? अद्वैतवेदान्ते स्पष्टमुत्तरमस्य न प्राप्यते। किन्तु प्रत्यभिज्ञादर्शने निम्नोक्तरूपेणास्य व्याख्या दृश्यते,—

ईश्वरवादेऽपि, अज्ञानं माया च विद्येते। किन्त्वस्याः प्रवृत्तिरा-कस्मिकी न भवति। तदिदं परमेश्वरस्य स्वातन्त्र्यमूलकं स्वेच्छया परिगृहीतं रूपम्। नटो यथा ज्ञातसारेणैव नानाप्रकारां भूमिकां करोति, तथा परमेश्वरोऽपि स्वेच्छया नानाप्रकारां भूमिकां गृह्णाति। परमेश्वरः स्वतन्त्रः, स खलु निजस्वरूपमावरितुं प्रकटयितुं च समर्थः। किन्तु यदा निजस्वरूपमावृणोति, तदापि सोऽच्युतरूपेणैव तिष्ठति। तदेतत् सूर्य-मेघयोर्दृष्टान्तेन बोध्यम्। सूर्यः स्वोत्पादितमेघसमूहेन निजरूपमावृणोति किन्त्वाच्छादितोऽपि सोऽनाच्छादितत्वेन वर्तते। अन्यथा को मेघसमूहं प्रकाशयेत्? परमेश्वरसम्बन्धेऽपि तद्वदेव बोध्यम्। अज्ञानं माया च तस्य स्वातन्त्र्यशक्तेर्विजृम्भणमात्रम्। संसारसृष्टिकार्ये लीलापरायणस्य परमेश्वरस्य लीलैव मुख्यकारणम्।

### आभासवादः

परमेश्वरस्य जगतश्च परस्परं कः सम्बन्धः? अभिनवगुप्तमते दर्पण-प्रतिबिम्बवत्। तदुक्तं शङ्कराचार्येण,—

विश्वं दर्पण-दृश्यमाननगरीतुल्यं निजान्तर्गतं
पश्यन्नात्मनि मायया बहिरिवाद्भूतं यथा निद्रया।

य: साक्षीकुरुते प्रबोधसमये स्वात्मानमेवाव्ययं,
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ।।इति।।

यथा निर्मलदर्पणे ग्राम-नगर-वृक्षादि प्रतिबिम्बितं सत् दर्पणेनाभिन्नत्वेऽपि दर्पणात् परस्परतोऽपि भिन्नमिव प्रतीयते, तथा पूर्णसंविद्रूपे परमेश्वरे प्रतिबिम्बितं विश्वमिदमभिन्नमपि घटपटादिरूपेण भिन्नवदवभासते। (**पादार्थकारिकायामप्येवम्** १६।१३)। लौकिकजगति प्रतिबिम्बं सत्तावतो बिम्बस्योपरि निर्भरं करोति, परन्तु त्रिकदर्शने परमेश्वरस्य स्वातन्त्र्यशक्तिहेतोर्बिम्बं विनापि जगद्रूपस्य प्रतिबिम्बं स्वत एवोत्पद्यते। अत एव द्वैतभावना कल्पनाप्रसूता, अद्वैतभावनैव पारमार्थिकसत्यम्। इममाभासं प्रतिबिम्बसिद्धान्तं वा प्रतिपादयितुं त्रिकदर्शनस्य दार्शनिकदृष्टि "राभासवाद" इति नाम्नाभिहिता। "आभासरूपा एव जड़-चेतनपदार्थाः" (**प्रत्यभिज्ञाविमर्शिनी** ३।२।१)। अभिनवगुप्तस्तदीय**विवृतिविमर्शिन्यां** यथार्थमेवाह,—

अन्तर्विभाति सकलं जगदात्मनीह,
यद्वद् विचित्ररचना मुकुरान्तराले।
बोधः पुनर्निज-विमर्शन-सारयुक्त्या,
विश्वं परामृशति नो मुकुरस्तथा तु।।



त्रिकदर्शनमते ब्रह्मण आत्मस्वरूपं जीवजगत्। यत एतच्चितिशक्तेर्विजृम्भनमुल्लासो वा। सा चितिशक्तिर्ब्रह्मणो विमर्शरूपेणात्मानं प्रकटयितुं समर्था भवति। दर्पणे मुखप्रतिबिम्बं पतति, तत्र करणरूपं दर्पणं मुखप्रतिबिम्बतो भिन्नवस्तुत्वेन प्रतीयते। किन्त्वाभासवादमते स्वतःप्रकाशचितिशक्तेरुल्लासे ब्रह्मैव जीवजगद्रूपेण प्रतिबिम्बितं भवति। किन्त्वेतत्प्रतिबिम्बे दर्पणरूपस्वातन्त्र्यम्। अन्यवस्तुन आवश्यकता नास्ति। अत्र ब्रह्मैव बिम्बं, प्रतिबिम्बं, दर्पणं, कर्ता, कर्म, करणमिति सर्वम्। एतत् सर्वं मिलितमेव ब्रह्म चितिशक्तिर्वोच्यते। यथा सूर्य-सौरप्रकाशयोरभेदः, चन्द्रचन्द्रिकयोरभेदः, तद्वद् ब्रह्म-चितिशक्त्योरभेदः। भ्रमदूरीकरणार्थम् उल्लास एवेत्युक्तम्, अर्थाच्छक्तिरेषा ब्रह्मणः पृथगुपलब्धाऽपि वस्तुतस्ततोऽभिन्नैव। यथा सूर्य-सौरप्रकाशयोर्भिन्नत्वे प्रतीयमानेऽपि वस्तुतोऽभेद एव तथेति बोध्यम्।

## विवर्तवाद आभासवादश्च

अत्र प्रकरणे श्रीमच्छङ्कराचार्यस्य विवर्तवादेन सह आभासवादस्य प्रतिबिम्बवादस्य वा सादृश्यवैसादृश्ये लक्षणीये। विवर्तवादे जीवजगतोः ब्रह्मतः

पृथक् प्रतीतौ सत्यामपि वस्तुतो ब्रह्मैव जीव-जगद्रूपेण प्रतिभाति। किन्तु विवर्तवादे जगज् जड़ं मिथ्या मायायाः कार्यमित्युच्यते। त्रिकदर्शनस्याऽऽभासवादमते जगदिदं ब्रह्मणश्चितिशक्तेरुल्लासः सूर्य-सौरप्रकाशवदभिन्नञ्च। जीव-जगदिदं चिन्मयशक्तेः स्फूरणम्। अत एवोभयमतेऽपि जगन्मिथ्या न भवति।

सांख्यस्य "परिणामवाद" मते वस्तुनो रूपं तिरोदधद् रूपान्तरे परिणमते। प्रकाशतनोः परमशिवस्य प्रकाशतिरोधाने जगदिदं तत्क्षणादेवान्धकारमयं भवति। अत एव विवर्तवाद-परिणामवादयोर्मध्ये कतरो यथार्थ इति न सम्यक्तया प्रतीयते। वस्तुतस्तु स्वातन्त्र्यवाद आभासवादश्चेति द्वावेव बुद्धिगम्यत्वेन प्रामाणिकौ।

"अविद्या अनिर्वाच्या वैचित्र्यञ्चाधत्ते" इति व्याहृतम्। परमेश्वरी शक्तिरेवेयमिति हृदयावर्जकः क्रमः। तस्माद् अनपह्नवनीयः प्रकाशविमर्शात्मकसंवित्स्वभावः परमशिवो भगवान् स्वातन्त्र्यादेव प्रकाशते, इत्ययं स्वातन्त्र्यवादः प्रोन्मीलितः।" (अभिनवगुप्तकृत-**प्रत्यभिज्ञाविमर्शिनी**)।

**परिणामवादः**

अवस्थान्तरतापत्तिरेकस्य परिणामिता।
स्यात्क्षीरदधिमृत्कुम्भसुवर्णकुण्डलं यथा॥
(**पञ्चदशी** १३।८)

एकस्य वस्तुनः पूर्वावस्थां परित्यज्यावस्थान्तरसम्प्राप्तिः परिणामः। यथा दुग्धं दधिरूपं, मृत्तिका घटरूपं, सुवर्णं कुण्डलरूपञ्च दधाति।

**विवर्तवादः**

अवस्थान्तरभानं तु विवर्तो रज्जुसर्पवत्।
निरंशेऽप्यस्त्यसौ व्योम्नि तलमालिन्यकल्पनात्॥
(**पञ्चदशी** १३।६)

पूर्वावस्थापरित्यागमकृत्वाऽप्यन्यावस्थाप्राप्तिर्नाम विवर्तः। यथा रज्जुरूपवस्तुनः सर्परूपेण भानप्रतीतिर्नाम विवर्त इति। विवर्तोऽयं निरवयवे आकाशादावपि दृश्यते। ये तावदाकाश-स्वरूपं न जानन्ति, तेषां मतेनाकाशोऽधोमुखः कटाहसदृशस्तलयुक्तः प्रतीयते। आकाशस्य वर्णहीनत्वेऽपि नीलरूपं प्रतीयते।

## त्रिपुरासिद्धान्तः

प्रत्यभिज्ञा-त्रिपूरामतयोश्च पारस्परिकसम्बन्धो वर्तते। यथा काश्मीरीय-शैवागमोक्त-प्रत्यभिज्ञादर्शनस्य (त्रिकसिद्धान्तस्य वा) शाक्तागमोक्त-त्रिपुरा सिद्धान्तस्य च मध्ये उपासनापद्धतिगतपार्थक्यें विद्यमानेऽपि तत्त्वदृष्टित उभयोर्मध्ये फलतो न कोऽपि भेदो दृश्यते। परन्तु द्वयोर्मतयोरैक्यं मूलत एक-स्यामेव मतौ प्रतिष्ठितमस्ति। तस्मादेव दृश्यते यत् प्राचीनशास्त्राचार्या-स्त्रिपुरासिद्धान्तसम्बन्धीयग्रन्थरचनाकाले शिवसूत्र-प्रत्यभिज्ञाहृदयेश्वरप्रत्य-भिज्ञाविमर्शिनी-तन्त्रालोकादिसुप्रसिद्धशैवग्रन्थेभ्यः प्रमाणसग्रहं कृतवन्तः। पक्षान्तरे, उत्पलदेव-क्षेमराजाभिनवगुप्त-महेश्वरानन्दादिशैवाचार्याः प्रयोजना-नुसारेण योगिनीहृदय-कामकलाविलास-त्रिपुरासुन्दरीमन्दिर-प्रभृति ग्रन्थेभ्यश्च प्रमाणान्युद्धृतवन्तः। परशुरामकल्पसूत्र-विन्दुसूत्र-तन्त्रराज-त्रिपुरारहस्य-नित्य-हृदय-वामकेश्वरतन्त्र-सौभाग्यरत्नाकर-प्रभृतयश्च त्रिपुरामतस्य श्रेष्ठग्रन्थाः भास्कररायो रामेश्वरो लक्ष्मीधर उमानन्दनाथस्तथा अमृतानन्दनाथश्च त्रिपुरामतस्य व्याख्यातारः।

## त्रिपुरासुन्दरी ललितादेवी वा



शैवागमे तत्त्वातीत-परमसत्तैव परमशिव इति नाम्नाभिहितः। त्रिपुरा-सिद्धान्तमतेनासौ परमसत्ता त्रिपुरासुन्दरी ललिताम्बिका चेति नामभिरभि-हिताऽभवत्। प्रत्यभिज्ञा-दर्शनस्य यत् शिवतत्त्वं शक्तितत्त्वञ्चेत्युच्यते तदेव त्रिपुरामतस्य कामेश्वरः कामेश्वरी चेति, तथा गौड़ीय-वैष्णवमतस्य श्रीकृष्णो राधा चेति नामभ्यामभिहितं भवति। कामेश्वर-कामेश्वरी-सामरस्यं साम्या-वस्था वा "सुन्दरी" वा त्रिपुरासुन्दरीति कथ्यते। त्रिपुरा हि सर्वाधिष्ठानरूपा, सत्यरूपा, समोनाधिकवर्जिता, सच्चिदानन्दमयी, समरसा, श्रीललिताऽम्बिका चेति। एषैव सर्ववेदान्ततात्पर्यभूमिः। इत्येवं प्रकारेण निरतिशय-सौन्दर्यमूर्तिरयं मातृरूपेण परिकल्पितेति साधना-राज्यस्यैकं निगूढ़ं रहस्यम्। श्रीमच्छङ्करा-चार्यश्च निखिलसौन्दर्याधारललितादेव्याः काञ्चिद् वर्णनामकरोत्तस्य **"सौन्दर्यलहरी"** ग्रन्थे,—

> तदीयं सौन्दर्यं तुहिनगिरिकन्ये तुलयितुं
> कवीन्द्राः कल्पन्ते कथमपि विरिञ्चिप्रभृतयः।
> यदालोक्यौत्सुक्यादमरललना यान्ति मनसा
> तपोभिर्दुष्प्रापामपि गिरिशसायुज्यपदवीम् ॥१२॥

हे हिमालयकन्ये, विरिञ्चिप्रभृतिश्रेष्ठकवयस्तव सौन्दर्यवर्णनायां न कथमपि समर्था अभवन्। अमरललनागणास्तु समुत्सूकचित्तास्तव तल्लोकातीतं सौन्दर्यमालोक्य कृच्छ्रसाध्यतपःसाध्यत्वाद् दुष्प्राप्यां शिवसायुज्यमुक्ति लभन्ते।

भगवत्या ललितादेव्या निरतिशयसौन्दर्यस्य किञ्चिन्मात्रं लब्ध्वैव विष्णुर्मोहिनीमूर्तिधारणेन शङ्करमपि मोहितमकरोत्। अस्या एव कृपाकटाक्षेण मदनो जितेन्द्रियाणां मुनीनामपि मनोऽहरत्।

हरिस्तामाराध्य प्रणतजनसौभाग्य जननीं
पुरा नारी भूत्वा पुररिपुमपि क्षोभमनयत्।
स्मरोऽपि त्वां नत्वा रतिनयनलेह्येन वपुषा
मुनीनामप्यन्तः प्रभवति हि मोहाय महताम्॥५॥

(सौन्दर्यलहरी)

हे मातः। प्रणत-जनगणस्य सौभाग्यदायिनीं त्वामाराध्य विष्णुः पुरा नारी भूत्वा महायोगिनं त्रिपुरान्तकं महादेवमपि विक्षुब्धमकरोत्। कामदेवोऽपि त्वां नत्वा रतिनयनानन्दकरेण स्वशरीरेण महात्मनां मुनीनामन्तःकरणं मोहयितुं सक्षमोऽभवत्।



## त्रिपुरासुन्दरी-नामरूपभेदः

त्रिपुरोपासकाश्चन्द्ररूपेणास्या उपासनां कुर्वन्ति। चन्द्रस्य षोड़शकलाः सर्वा एव नित्याः। तस्मात् सम्मिलितभावेन सा "नित्यषोड़शिके"ति नाम्ना वर्ण्यते। प्रथमपञ्चदश-कलानाम् उदयास्तह्रासवृद्धयः प्रायशो भवन्ति, किन्तु षोड़श्याः कलायास्तद्वदुदयादयो न भवन्ति। एषैव ताव "दमृता" नाम चन्द्रकला। वैयाकरणास्तां "पश्यन्ती" ति नाम वाणीं वदन्ति। दर्शनशास्त्रेऽस्याः पारिभाषिकं नाम "आत्मे" ति। मन्त्रशास्त्रे मन्त्रस्वरूपं देवतास्वरूपं वोच्यते। योऽस्माभिः पूर्णचन्द्र इति कथ्यते, वस्तुतः स पूर्णचन्द्रो न भवति यस्मादस्य क्षयं उदयश्च भवतः। परन्तु पूर्णवस्तुनो न्यूनाधिकभावो न भवति। पूर्णता तु षोडश्यामेव कलायां विद्यते, सा च नित्योदिता, अमृतस्वरूपा, अखण्डा चेति। सैव महात्रिपुरासुन्दरी, ललिता, सौन्दर्यानन्दस्य परमं धाम। अपिच सा परकला चिदेकरसा श्रीविद्या। प्रथमपञ्चदशकलानां कालचक्रेण सह सम्बन्धो वर्तते, स च सूर्यचन्द्रयोर्व्यवधान-सयोगादि-फल-स्वरूप-प्रतिपदादितिथिरूपेण विद्यमानः। अत एव नित्यानामप्येतासां पञ्चदशकलानामाविर्भावतिरो-

भावौ चोपलभ्येते। किन्तु षोड़शी कला नित्यज्योतिर्मय-सहस्र-दलकमलकर्णिकास्थ-नित्यकलायुक्त-श्रीचक्रात्मक-चन्द्रबिम्बरूपा। एतदेव **सुभगोदये** उक्तम्—

"षोड़शी तु कला ज्ञेया सच्चिदानन्दरूपिणी"ति।

सैव श्रीविद्योपासकानां नये त्रिपुरासुन्दरी, नित्यषोड़शवर्षीया। गौड़ीय-वैष्णवसम्प्रदायैरपि सा एव श्रीकृष्णो नित्यषोड़शवर्षीयो नित्यकिशोर इत्युच्यते—

"नित्यकिशोर एवासौ भगवानन्तकारकः" इति।

**ललिता-श्रीकृष्णसमन्वयः**

उक्तञ्च तन्त्रराजतन्त्रे,—पराशक्तिर्ललितादेवी क्वचिद्वा पुरुषमूर्तिधारणं क्वचिद्वा रमणीमूर्तिधारणमकरोत्। यदा सा पुरुषरूपं धारयति, तदा सा निखिलरसामृतमूर्तिश्रीकृष्णरूपेण प्रकटितैव स्ववंशीनादेन जगद् विमोहयति। उक्तञ्च,—

"काचिदाद्या ललिता वै पुंरूपा कृष्णविग्रहा।
वंशीनाद-समारम्भादकरोद् विवशं जगत्।।" इति



ललितादेवी—श्रीकृष्णयोरभिन्नताविषये कारणमेतदेव लक्षणीयम्। उपासना-पद्धत्यनुसारेण जपसमर्पणस्यायमेव साधारणनियमो यत् स्त्रीदेवताया वामकरे, पुंदेवतायाश्च दक्षिणकरे जपसमर्पणं कार्यमिति। किन्तु ललितादेव्याः जपसमर्पणं दक्षिणकर एव विहितम्। पक्षान्तरे श्रीकृष्णस्यापि मोहिनीमूर्तिधारणविवरणमत्र स्मर्तव्यम्।

**ज्ञानभक्ति-सामञ्जस्यम्**

त्रिकदर्शन-त्रिपुरासिद्धान्तयोर्मते अद्वैतवादेन सह मनोरमभक्तिवादस्य समन्वयः साधितोऽभवत्। शिवाद्वैत-शाक्ताद्वैतवादयोरेतदेव गुरुत्वपूर्ण वैशिष्टयं यदेतयोर्मध्ये कोऽपि न शुष्कज्ञानमार्गोऽस्ति ज्ञानहीनभक्तिमार्गोऽपि नास्ति, परन्तूभयसिद्धान्तेऽप्युभयोर्ज्ञानभक्त्योः सामञ्जस्यं विद्यते। शाङ्कराद्वैतवादस्य चरमावस्थायां भक्तिस्थानं नास्ति। शाङ्करमते भक्तेर्द्वैतमूलकत्वादद्वैतज्ञानोदये तस्या अस्तित्वं न विद्यते। किन्त्वेतदुक्तिः साधनारूपभक्तिसम्बन्धे प्रयोज्या, परभक्तिविषये साध्यरूपभक्तिसम्बन्धे वा प्रयोज्या न भवति। त्रिकदर्शने त्रिपुरासिद्धान्ते च "अद्वैतभक्ति"र्नित्यसिद्धपदार्थरूपेणैव स्वीक्रियते। शास्त्रो-

क्तेरेव महात्मनामुपलब्धितोऽस्या अस्तित्वमुपलभ्यते। योऽस्माभिर्मोक्ष इति कथ्यते, स खलु नित्यसिद्धज्ञानभक्त्यावरणभङ्गजनितसमुन्मेषमात्रम्। त्रिक-दर्शने एष एव "चिदानन्दलाभ" इत्युच्यते। अद्वैतज्ञानोत्पत्तेरनन्तरं या भक्ति-रुदिता भवति सा निर्व्याजाऽहैतुकी भक्तिरेवा"ऽद्वैतभक्ति"रिति कथ्यते। एतादृशीं भक्तिमेव लक्ष्यीकृत्य **श्रीमद्भागवते** व्यासदेवेनोक्तम्,—

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः॥(१।७।१०)

ब्रह्मभूताऽविद्याग्रन्थिशून्या मुनयोऽपि श्रीभगवति अहैतुकीं भक्तिं कुर्वन्ति। इत्थमेव श्रीभगवतः सर्वाकर्षी स्वभाव इति। विद्वद्वर्यो नरहरिः "बोधसार"-ग्रन्थे एतत्सम्बन्धे यदवदत् तद् विशेषभावेनैव प्रणिधानयोग्यम्।

द्वैतं मोहाय बोधात्प्राक् प्राप्ते बोधे मनीषया।
भक्त्यर्थं कल्पितं द्वैतमद्वैतादपि सुन्दरम्॥
जाते समरसानन्दे द्वैतमप्यमृतोपमम्।
मित्रयोरिव दम्पत्योर्जीवात्मपरमात्मनोः॥(३२।४२।४३)



ज्ञानोदयात्पूर्वं द्वैतभावो मोहाय भवति। किन्तु ज्ञाने जाते भक्त्यर्थं बुद्धया यद्द्वैतभावः कल्पितो भवति सोऽद्वैतापेक्षयापि सुन्दरतरः। जीवब्रह्मणोरेकरस-सुखाविर्भावे भक्त्युद्देश्येन जीवात्म-परमात्मनोर्मध्ये यो भेदः पृथक्त्वं वा यत्कल्पितं भवति तदपि मुक्तिसुखवत् सुखमावहति। परस्पर-प्रेमाकृष्टयोर्द-म्पत्योः पृथक्त्वं यथा परस्पर-सुखकारणं, तद्वदिति तत्त्वम्।

## श्रीविद्या-सम्प्रदायास्तेषां साहित्यञ्च

त्रिपुरासिद्धान्तप्रतिपाद्यश्रीविद्याया द्वादशोपासकाः प्रसिद्धा यथा, (१) मनुः, (२) चन्द्रः, (३) कुवेरः, (४) लोपामुद्रा, (५) मन्मथः, (६) अगस्त्यः, (७) अग्निः, (८) सूर्यः, (९) इन्द्रः, (१०) स्कन्दः, (११) शिवः, (१२) क्रोधभट्टारको दुर्वासाः। उक्तञ्च,—

मनुश्चन्द्रः कुवेरश्च लोपामुद्रा च मन्मथः।
अगस्तिरग्निः सूर्यश्च इन्द्रः स्कन्दः शिवस्तथा।
क्रोधभट्टारको देव्या द्वादशामी उपासकाः॥

एतेषां प्रत्येकस्य पृथक् पृथक् सम्प्रदाय आसीत्। श्रीनटनानन्दनाथकृत–"**कामकलाविलास**"स्य टीकाया ज्ञायते "इह श्रीविद्यारत्नागमे सन्तानद्वयमस्ति, कामराजसन्तानो लोपामुद्रासन्तानश्चेति। कामराजसन्तानक्रमस्तु सकलविद्यानुसन्ध्यविच्छिन्न इति प्राचीनगुरवोऽप्याचक्षते। लोपामुद्रासन्तानक्रमस्तु विच्छिन्नतया प्रवर्तत इति वर्णयन्ति।"

"कामराजविद्या" (कादिविद्या)—त्रिपुरारहस्यस्य माहात्म्यखण्डे वर्णिताख्यानतो ज्ञायते, कामदेवो हि कृच्छ्रतपसा श्रीविद्यादेवीं सन्तोष्य बहूनेव दुर्लभ वरानवाप। एवं स्वोपासितकामराजविद्योपासकानां हिताय च बहुशः प्रार्थितवरानलभत। तदवधि कामराजविद्याया विशेषप्रचारोऽभवत्। "कामराजविद्या" ककारादिपञ्चदशवर्णात्मिका, तेन हि तस्या नाम "कादिविद्ये"ति कथ्यते।

"लोपामुद्राविद्या" (हादिविद्या)—लोपामुद्रा ऋग्वेदस्यान्यतम ऋषिः (ऋग्वेदे १।१७९।१-२)। एषा हि ऋषिमगस्त्यं पतित्वेन जग्राह, कृच्छ्रतपसा श्रीविद्यामाराध्य सिद्धिलाभमकरोच्च। येन च मन्त्रेण सिद्धिमलभत् सा "लोपामुद्राविद्ये ति" नाम्नाभिहिता। हकारादिपञ्चदशवर्णात्मिकात्वेन सा "हादिविद्ये"ति कथ्यते।



"अगस्त्यः"—श्रीविद्याया अन्यतमाचार्यः। तत्कृतं "शक्तिसूत्रं" काशीसरस्वती भवनग्रन्थमालायां प्रकाशितम्। "अथातः शक्तिजिज्ञासा" इति ह्यस्य प्रथमं सूत्रम्। निगूढ़तात्पर्यपूर्णा त्रयोदशाधिक-शतसख्यकसूत्रनिबद्धा असमाप्ता, अल्पाक्षरा वृत्तिरेका च प्रकाशिता। विस्तृत-व्याख्याया अभावान्नैतेषां सूत्राणां रहस्यं सम्यग् बोधगम्यम्।

"दुर्वासाः"—अनेन प्रणीतः सूत्रग्रन्थोऽद्यापि नोपलभ्यते। तत्कृत-"त्रिपुरामहिम्नः स्तोत्रम्" नित्यानन्दविरचितव्याख्यासमेतं निर्णयसागरीय—"काव्यमाला"या एकादशखण्डे तथा "ललितास्तवरत्न"स्य दशमखण्डे प्रकाशितम्। रुद्रांशेन जातत्वाद् दुर्वासाः क्रोधभैरवनाम्नाऽभिहितः। त्रिपुरामहिम्नः स्तोत्रस्य पुष्पिकायामयं सकलागमाचार्य इत्यपरनाम्नोच्यते।

"दत्तात्रेयः परशुराम"श्च—दत्तात्रेयस्त्रिपुरातत्त्वस्य रहस्यविवृत्यर्थमष्टादशसाहस्रीं "दत्तसहितां" रचितवानिति किंवदन्ती लोकप्रसिद्धा। परशुरामः पञ्चाशत्खण्डैः षट्सहस्रसूत्रैरस्य संक्षिप्तसारमरचयत्। ततो हारितायनः समेधाः परशुरामकल्पसूत्रस्य पुनरेव दशखण्डात्मकं सक्षिप्तरूपमकरोत्।

"परशुरामकल्पसूत्रं" रामेश्वरीविवृतिसहितं बरोदा-गायकोवाड़-संस्कृतग्रन्थ-मालायां प्रकाशितम्।

प्रसङ्गादुच्यते,—त्रिपुरोपासकसम्प्रदायमध्ये परशुरामो हि विशेषतः प्रसिद्ध आसीत्। परशुरामो दत्तात्रेयसमीपे परमेश्वर्यास्त्रिपुराया माहात्म्यं श्रुत्वा तदुपासनां ज्ञातुमाग्रहान्वितोऽभवत्। ततो दीक्षाग्रहणानन्तरं स गुरूपदेशतो महेन्द्रपर्वते द्वादशवर्षाणि यावत् तपस्तेपे। साधनाऽवसरे तस्यान्तरे तत्त्वजिज्ञासा जागरिताऽभवत्। ततश्च स स्वयं परमार्थतत्त्व-सम्बन्धि-समस्या-समूहस्य समाधानं कर्तुमशक्नुवन् दत्तात्रेयसमीपमगच्छत्।

पुरा त्रेतायां परशुरामः श्रीरामचन्द्रात् पराभवं प्राप्य यदा लज्जया विमना बभूव, तदा संवर्तर्षिः परमार्थतत्त्वोपदेशेन तस्य शोकापनोदनमकरोत्। परन्तु तदानीं परशुरामः संवर्तकथिततत्त्वोपदेशस्य सारमर्म ज्ञातुमसमर्थ आसीत्। तदनन्तरं संवर्तकथितपरमार्थरहस्यं दत्तात्रेयाय सन्निवेद्य तत्सारमर्म ज्ञातुं दत्तात्रेयसमीपे प्रार्थनमकरोत्। ततो दत्तात्रेयः परशुरामं प्रति संवर्तकथितपरमार्थ-रहस्यस्य व्याख्यां कृत्वा यथावदकथयत्। एतत् सर्वं "त्रिपुरारहस्यज्ञानकाण्डे" विवृतमस्ति। त्रिपुरारहस्यमाहात्म्यखण्डं ज्ञानखण्डञ्च काशीतः प्रकाशितम्।

## ऐतिहासिकयुगसाधकाः

ऐतिहासिकयुगे श्रीविद्यासम्प्रदायमध्ये ये तावदाचार्या आविर्बभूवुस्तेषां मध्ये गौड़पाद-शङ्कराचार्यपुण्यानन्दनाथामृतानन्दनाथ-भास्कररायोमानन्दनाथ-रामेश्वरसूरिप्रभृतिनाञ्च नामानि विशेषेणैवोल्लेखयोग्यानि।

"गौड़पादः"—षष्ठसप्तमशताब्द्योः शङ्कराचार्यस्य परमगुरुर्गौड़पादः श्रीविद्योपासक आसीत्। तद्रचितं "सुभगोदय"स्तोत्रं "श्रीविद्यारत्नसूत्र"ञ्चेति द्वावेव प्रसिद्धग्रन्थौ। श्रीविद्यारत्नसूत्रस्य शङ्करारण्यकृता "दीपिका" नाम्नी टीका वर्तते, काशी-सरस्वतीभवनतः प्रकाशिता चाभवत्।

"शङ्कराचार्यः"—सप्तमाष्टमशताब्द्योः शङ्कराचार्यः श्रीविद्यामुपास्याद्वैतब्रह्मज्ञानमलभतेति लोकप्रसिद्धिरस्ति। तद्रचिते "सौन्दर्यलहरी" स्तोत्रे "ललिता-त्रिशतीभाष्ये" च श्रीविद्यातत्त्वं प्रपञ्चितमभवत्। सौन्दर्यलहरीस्तोत्रे आनन्दलहरीस्तोत्रे चानुपमकवित्व-सुगभीरतत्त्वयोरपूर्वसमावेशो लक्ष्यते। इदानीमप्यस्य पञ्चत्रिंशत् टीका लभ्यन्ते। तन्मध्ये लक्ष्मीधरटीका (१२६८-१३७९ खृीः अः) समधिकप्रचलिता। आचार्यः शङ्करः स्वयमेव शृङ्गेरीमठे

प्रधानोपास्यरूपं श्रीविद्यायन्त्रं संस्थापितवान्। तत्प्रतिष्ठित-मठचतुष्टये गुरुपरम्परयाऽद्यापि श्रीविद्योपासना वर्तते।

"पुण्यानन्दनाथः"—अनेन विरचितः "**कामकलाविलासो**" नटनानन्दकृत-चिद्वल्लीव्याख्यासहित–"**तात्पर्यप्रकाश**"श्च त्रिपुरासिद्धान्तस्य प्रसिद्धग्रन्थौ।

"अमृतानन्दनाथः"—अनेन रचिता "योगिनीहृदयदीपिका" वामकेश्वरतन्त्रस्यांशविशेषस्योत्तमा व्याख्या। त्रिपुरासिद्धान्तस्य तात्पर्यप्रकाशेऽस्या विशेषप्रयोजनीयता वर्तते।

"भास्कररायः"—अष्टादशशताब्द्याः पूर्वार्धे श्रीविद्यासम्प्रदायस्य प्रख्यात-नामा शाक्तदार्शनिको भास्कररायो भासुरानन्दनाथो वा आविर्बभूव। अनेन रचितो ग्रन्थसमूहः शाक्तमतस्य रहस्योद्घाटने प्रसिद्ध उपयोगी च भवति। तत्प्रणीतग्रन्थसमूहमध्ये "वरिवस्यारहस्यं", "सौभाग्यभास्करः", "ललिता सहस्रनामभाष्यं" "सेतुबन्धः" (नित्यषोड़शिकार्णवटीका), "गुप्तवती" (श्रीचण्डीटीका), "कौलत्रिपुरा" कौलभावनायाश्च टीका समधिकप्रसिद्धा।

"उमानन्दनाथः"—भास्कररायस्य शिष्यः। स (१७५५ ख्रीष्टाब्दे) "नित्योत्सवपद्धति"मरचयत्।



"रामेश्वरः"—रामेश्वरसूरिः। भास्कररायस्य प्रशिष्यः। स च (१८३१ ख्रीष्टाब्दे) परशुरामकल्पसूत्रस्य "सौभाग्यसुधोदयो" नाम टीकामकरोत्। भास्कररायस्य शिष्यसम्प्रदायो महाराष्ट्रे तथा सुदूर-दक्षिणभारते चाद्यावधि वर्तते।

"चैतन्यसम्प्रदाये श्रीविद्याप्रभावः"—श्रीमन्महाप्रभोश्चैतन्यदेवस्याभिन्न-हृदयः सहयोगी पतितपावनोऽवधूतसन्न्यासी श्रीनित्यानन्दप्रभुः श्रीविद्योपासक आसीत्। अनेनाराधितं श्रीविद्यायन्त्रं (श्रीचक्रं) खड़दहेऽद्यापि गोस्वामिनां मन्दिरे सयत्नरक्षितं पूजितञ्च भवति।

त्रिपुरोपनिषदस्तथा त्रिपुरातापिन्युपनिषदश्च ज्ञायते यत् श्रीविद्योपासना वैदिकीति। वेदतश्च सा तन्त्रे गृहीताऽभवदिति च।

इति कामरूपान्तर्वर्ति-श्रीमदुग्रतारा-महापीठाध्यक्ष-श्रीचक्रेश्वरभट्टाचार्य-सङ्कलिते **शाक्त-दर्शने** विश्वनिरूपणं नाम चतुर्थः परिच्छेदः।

———

# पञ्चमः परिच्छेदः

## अथोपासनाविधिः

वैकृतिकरहस्ये—

इत्युक्तानि स्वरूपाणि मूर्तीनां तव पार्थिव।
उपासनं जगन्मातुः पृथगासां निशामय ॥१६॥

तथाहि—सुरथस्य प्रथमप्रश्नस्य समाधानमुपसंहरन्नेव द्वितीयप्रश्नोत्तरं प्रतिजानीते, इत्युक्तानीति (गुप्तवती)।

प्राधानिकरहस्यप्रारम्भे राजा सुरथो महर्षिमेधःसमीपे प्रश्नद्वयमकरोत्। प्रथमः प्रश्नः, चण्डिकाया विभिन्नावताराणां का मूलप्रकृतिः—प्रधानकारणम् इति। द्वितीयप्रश्नश्च—देव्याः स्वरूपमुपासनाविधिश्च मह्यं कथ्येताम् इति। तत्र द्वितीयप्रश्नोत्तरप्रदानावसरे मेधा ऋषिरवदत्, "हे राजन्! तव समीपे महाकाली-महालक्ष्मी-महासरस्वतीनां स्वरूपाण्युक्तानि, इदानीमुपासनाविधिः श्रूयतामि"ति।

अष्टादशभुजा चैषा पूज्या महिषमर्दिनी।
महालक्ष्मीर्महाकाली सैव प्रोक्ता सरस्वती॥
ईश्वरी पुण्यपापानां सर्वलोकमहेश्वरी ॥२३॥

तथाहि—एषा अष्टादशभुजा महिषमर्दिनी महालक्ष्मीरेव केवलं पूजनीया। सैव महालक्ष्मीरेव महाकाली महास-स्वतीति नाम्नाऽभिहिता। सैव पुण्यपापानां नियन्त्री, सैव सर्वजगतामधीश्वरीति कथ्यते। इदानीं चण्डीस्तवोपासकानाम् अष्टादशभुजाया मध्यमचरित्रदेवताया महालक्ष्म्या एव पूजनं नित्यं काम्यं च, इतरयोः पूजनं कृताकृतम्। महालक्ष्म्या एव समष्टित्वेन तत्पूजयैवान्ययोः पूजितप्रायत्वादिति ध्वननाय विस्तरेण तदेव वर्णयति (गुप्तवती)।

## अथोपचार-विधिः

अर्घ्यादिभिरलङ्कारैर्गन्धपुष्पैस्तथाक्षतैः।
धूपैर्दीपैश्च नैवेद्यैर्नानाभक्ष्यसमन्वितैः ॥२५॥

आसन-स्वागत-पाद्यार्घ्याचमनीय-मधुपर्क-पुनराचमनीय-स्नानीय-वस्त्रालङ्कार-गन्धपुष्प-धूप-दीप-नैवेद्यादिभिर्नानाभक्ष्यद्रव्योपचारैश्च चण्डिकां पूजयेत्।

रुधिराक्तेन बलिना मांसेन सुरया नृप।
प्रणामाचमनीयेन चन्दनेन सुगन्धिना।
सकर्पूरैश्च ताम्बूलैर्भक्तिभावसमन्वितैः ॥२६॥

हे नृप सुरथ! रुधिरसिक्तबलिना मांसेन सुरया प्रणामेनाचमनीयेन सुगन्धिचन्दनेन तथा भक्तिभावयुक्त-कर्पूरान्विततताम्बूलेन च चण्डिकां पूजयेत्।

बलिमांसादिपूजेयं विप्रवर्ज्या मयेरिता।
तेषां किल सुरामांसैर्नोक्ता पूजा नृप क्वचित्॥

हे राजन्! बलिमांसैः कृता पूजा विप्रभिन्नवर्णानां पक्षे विहितेति पूर्वमेव मयोक्तम्। ब्राह्मणानां कदापि मद्यमांसयागेन पूजा नोक्ता।

"रुधिराक्तेन बलिना"—ब्राह्मणादिभेदेन बलिव्यवस्था पूर्वमेवोक्ता न विस्मर्तव्या (गुप्तवती)।



"देवीपूजायां मांस-सुरा"दि-प्रयोगविषये श्रीमद्भास्कररायेण सप्तशती-प्रयोगविधौ सम्यगालोचितम् बलिश्च व्यवस्थया उक्तः कालिकापुराणे द्रष्टव्यः। तत्राशक्तानामपि तत्रैव कालिकापुराणे विकल्पेन प्रोक्तो यथा—

कुष्माण्डमिक्षुखण्डञ्च मद्यमांसासव एव च।
एते बलिसमाः प्रोक्तास्तृप्तौ छागसमाः सदा ॥(६७।२५)

"छागसमाः" पञ्चविंशतिवर्षस्थायितृप्तिजनका इत्यर्थः। यथा—

अजाविकानां रुधिरैः पञ्चविंशतिवार्षिकीम्।
तृप्तिमाप्नोति परमां शार्दूलरुधिरैस्तथा ॥(६७।११)

इति तत्रैवोक्तत्वात्। वस्तुतस्तु "न हिंस्या"दिति निषेधस्य संकोचमन्तरेणैव छागसमानतृप्तिसम्भवे छागबलिर्ब्राह्मणैर्न देय एव।

वरं प्राणाः प्रगच्छन्तु ब्राह्मणो नार्पयेत् सुराम्।
ब्राह्मणो मदिरां दत्त्वा ब्राह्मण्यादवहीयते ॥
स्वगात्ररुधिरं दत्त्वा स्वात्महत्यामवाप्नुयात् ॥

इति बृहत्सङ्गमतन्त्रवचनात्। अत एव तत्प्रतिनिधिरपि **कालिकापुराणे** स्मर्यते।

अवश्यं विहितं यत्र मद्यं तत्र द्विजः पुनः।
नारिकेलोदकं कांस्ये ताम्रे वा विसृजेन्मधु॥

अत्रायं भावः—कालिकापुराणे ब्राह्मणादिवर्णभेदेन पृथग् बलिव्यवस्था विहिता। पशुबलिदानाशक्तानां पक्षे कालिकापूराणे पशुबलिप्रतिनिधित्वेन कुष्माण्डम् इक्षुखण्डं, मद्यासवप्रतिनिधित्वेन कांस्यपात्रस्थनारिकेलोदकं ताम्रपात्रस्थं मधु च व्यवस्थितम्। "एते बलिसमा" इत्युक्तत्वाद्देव्यास्तृप्तिसाधने छागसमोपयोगिनः। "छागसमा" इत्यनेन पञ्चविंशतिवर्षाणि यावत् स्थायिनी तृप्तिर्बोद्धव्या। यतः कालिकापुराणे उक्तम्—अजमेषशार्दूलरुधिरैर्देव्याः पञ्चविंशतिवर्षव्यापिनी परमा तृप्तिर्जायत इति। वस्तुतस्तु "मा हिंस्या"-दिति श्रुतेर्निषेधवाक्यस्य संकोचं विनापि यतः पञ्चविंशतिवर्षाणि व्याप्य छागसमपरमतृप्तिः सम्भाव्यते, ततो ब्राह्मणानां पक्षे कदापि छागबलिर्न देयः।

"भक्तिसमन्वितै"र्विविधोपचारसहयोगेन भक्तिभावयुक्तचित्तेनैव देवीं पूजयेदित्यत्र "भाव" इत्युच्यते।



## अथातो भावजिज्ञासा

कस्तावद्भावः? अत्रोच्यते, तन्त्रसाधनायां "भाव" इत्यन्यतमः परमगुरुत्वपूर्णः पारिभाषिकः शब्दविशेषः। यदुक्तं **कौलावलीतन्त्रस्यैकादश** उल्लासे,—

"भावस्तु मानसो धर्मः स हि शब्दः कथं भवेत्।
तस्माद् भावो न वक्तव्यो दिङ्मात्रं समुदाहृतम्॥
यथेक्षुगुड़माधुर्यं जिह्वया ज्ञायते सदा।
तथा भावो विभावश्च मनसा परिभाव्यते॥"

तथाहि—भावपदार्थो मानसो धर्मविशेषः, स कथं शब्देन व्यक्तो भवेत्? अत एव भावः कदापि वक्तव्यो न भवेत् स केवलं दिङ्मात्रेण निर्दिश्यते। यथेक्षुगुड़योर्माधुर्यं केवलं जिह्वया परिज्ञायते, न वाक्येन, तद्वद् भावस्य विभावः केवलं मनसैवानुभवयोग्यो भवेन्न वाक्येनेति। उक्तञ्च—

एक एव महाभावो नानात्वं भजते यतः।
उपाधिभेदभावेन भावभेदो लयिष्यति ।।
आनन्दघनसन्दोहः प्रभुः प्रकृतिरूपधृक्।
रसरूपः स एवात्मा स प्रभुः परमो महान् ।।

केवलं महाभावो ह्युपाधिभेदेन विषयभेदेन वा, अर्थाद् भक्ति-प्रेम-वात्सल्यादिनानारूपेण विभक्तो भवति। पुनरपि भावस्य प्रगाढ़तायां भावगततत्तद्भेदाः परिणामे एकमात्रमहाभावे विलीना भवन्ति। परन्तु एष भाव एवानन्दघनसन्दोहः प्रभुः, भाव एव प्रकृतिरूपधारी, भाव एव रसरूपी आत्मा, भाव एव परमो महान्। **कौलावलीतन्त्रे** भावमाहात्म्यमेतावदेव वर्णितम्।

बहुजपात्तथा होमात् कायक्लेशात्तु विस्तरैः।
न भावेन विना चैव तन्त्रमन्त्राः फलप्रदाः।

तथाहि,—बहुजपहोमकायक्लेशकरतपस्यास्वपि साधकस्य भावं विना तन्त्रमन्त्राः कदापि फलप्रदा न भवन्ति।

भावस्तु त्रिविधः प्रोक्तः, स च ज्ञानस्यावस्थाविशेषो बोध्यः। सत्त्वरजस्तमोभेदाद् भावस्य ज्ञानस्य वावस्था यथाक्रमं दिव्यो वीरः पशुश्चेति उत्तममध्यमाधमरूपेण त्रिधाऽभिहिताः। तदुक्तं **रुद्रयामले**

शरीरं त्रिविधं प्रोक्तमुत्तमाधममध्यमम्।
तत्रैव त्रिविधं प्रोक्तमुत्तमाधममध्यमम् ।।

तथाच,—उत्तममध्यमाधमशरीरभेदानुसारतो मानवप्रकृतिरपि तथा साधना प्रणाल्यपि सत्त्वादिगुणत्रयानुगृहीतेन रूपेणोत्तममध्यमाधमावस्थाः प्राप्य दिव्यवीरपशुभावैर्ग्रथिता भवति। ततश्च यस्य यादृशी प्रकृतिस्तस्य तद्रूपभावालम्बनेन साधना प्रशस्ता। तामसिकप्रकृतिविशिष्टस्य साधकस्य दिव्यभावावलम्बनेन साधनायां गुणविपर्ययः स्यादिति हेतोस्तस्याग्रगतिर्न सम्भवति। अत एव तामसिकसाधकस्य पशुभावेन, राजसिकसाधकस्य वीरभावेन, सात्त्विकप्रकृतिसम्पन्नस्य च दिव्यभावेन साधनाऽभिहिता। परन्तु क्रमोन्नत्या साधकः पशुभावाद् वीरभावं, वीरभावाद्दिव्यभावं, तथा दिव्यभावाद् भावातीतावस्थायामथवा गुणातीतावस्थायामारोढुं समर्थो भवति। वस्तुतस्तु साधकस्य शक्तिभेदनिमित्तं भावत्रयमभिहितम्। तदुक्तं **रुद्रयामले**,—

शक्तिः प्रधानं भावानां त्रयाणां साधकस्य च।
दिव्यवीरपशूनाञ्च भावत्रयमुदाहृतम्॥

भावत्रयस्य परस्परतः पौर्वापर्यसम्बन्धविषये **रुद्रयामलतन्त्रे**, षष्ठपटले सविशेषमुक्तम्, यथा—

आदौ भात्रं पशोः कृत्वा पश्चात्कुर्यादावश्यकम्।
वीरभावं महाभावं सर्वभावोत्तमोत्तमम्॥
तत्पश्चादतिसुन्दरं दिव्यभावं महाफलम्॥

प्रथमप्रवृत्तस्य साधकस्याभ्यासार्थं प्रथमं तमोगुणात्मकः पशुभावो विहितः। पशुभावे सिद्धः पश्चाद्रजोगुणात्मकसर्वभावोत्तममहाभाववीरभावाश्रयो भवेत्। ततस्तु सत्त्वगुणात्मकसुन्दर-महाफलप्रद-दिव्यभावाश्रयपरो भवेदिति। अत्र शास्त्रयुक्तिर्यथा,—सामान्यतो मानवानां षोड़शवर्षवयःकालपर्यन्तं मनोवृत्तेरज्ञानावस्थत्वेन पशुभावः। सप्तदशवर्षात्पञ्चाशद्वर्षपर्यन्तं ज्ञानावस्था, तदोत्तेजित-मनोवृत्तित्वेन वीरभावः। एकपञ्चाशद्वर्षाद् वृद्धावस्थापर्यन्तं परिपक्वज्ञानावस्थात्वेन शीतलमनोवृत्तेर्विगतस्पृहस्य दिव्यभावः। तदुक्तं **रुद्रयामले**,—

सर्वे च पशवः सन्ति तलवद्भूतले नराः।
तेषां ज्ञानप्रकाशाय वीरभावः प्रकाशितः॥
वीरभावं सदा प्राप्य क्रमेण देवता भवेत्॥

तदुक्तं **वेदसारशिवस्तोत्रे**,—

"पशूनां पतिं पापनाशं परेशम्" इत्यादि।

## (१) पशुभावः

येषां जीवानामन्तरेऽविद्यावरणेन परिपूर्णमद्वैतज्ञानस्य किञ्चिन्मात्रमपि नोदेति, तेषां मानसिक्यवस्था तामसिकत्वेन पशुभाव इति कथ्यते। ते च पशुवदज्ञानान्धकारे संसारेण सह दृढबन्धनेनाबद्धास्तिष्ठन्ति। उत्तमाधमभेदाभ्यां च पशुभावो द्विविधः। संसारमोहजाले पतित्वा बद्धो जीवोऽधमः पशुः। सत्कर्मपरायणो भगवद्विश्वासी जीव उत्तमः पशुः। द्वैतबुद्धित्वादुभौ पशू।

## (२) वीरभावः

यः साधकोऽद्वैत-ज्ञानरूपामृतह्रदस्य कणिकामात्रमास्वाद्य वीरवदज्ञानरज्जुच्छेदने प्रयत्नपरः सन्नमृतह्रदसन्धाने धावमानो भवति, स एव वीरभाव-

साधकः। वीरभावसाधकस्य मानसिकावस्थाया राजसिकत्वेन वीरभावः। वीरसाधको जागतिकसर्वपदार्थान् शिवशक्तिमिथुनीकृतविभूतिरूपेण धारयितुं प्रयत्नपरायणो भवति। एतादृश्यामवस्थायां द्वैतभावः कियताचित्परिमांणेन दूरीभवति। अद्वैतभावश्च कियता परिमाणेनाविर्भवति।

### (३) दिव्यभावः

यः साधको वीरभावपरिपुष्ट्या द्वैतभावं दूरीकृत्य क्रमेणोपास्यदेवता-सत्तायां स्वसत्तां निमज्जयित्वाऽद्वैतानन्दामृतपानरतो ब्रह्ममयस्तिष्ठति, स एव "दिव्य" इति कथ्यते, तस्य मानसिकव्यवस्था सात्त्विकत्वेन "दिव्यभावः", दिव्यभाव-साधको ब्रह्मज्ञः परमहंसः। तदुक्तं **कौलावलीतन्त्रे**,——

प्रथमं दिव्यभावस्तु कथ्यते तन्त्र-वर्त्मना।
यद्वर्णा देवता यत्र तत्तेजःपुञ्जपूरितम्।
तेजोमयं जगत्सर्वं विभाव्य मूर्तिकल्पनम्।
तत्तन्मूर्तिमयैर्मन्त्रैः स्वेन स्वेनैव वा पुनः।
आत्मानं तन्मयं दृष्ट्वा सर्वं भावं तथैव च॥



तथाहि,—तन्त्रमतेन प्रथमतो दिव्यभावः कथ्यते। यथा, उपास्यदेवताया यद्वर्णनं तद्वज्जगत्सर्वं तत्तेजःपुञ्जेन परिपूरितमित्येवंरूपभावनया स्वेष्टदेवता-मूर्ति ध्यात्वा, तत्तदिष्टदेवतायास्तत्तन्मूर्तेः प्रत्येकमङ्गप्रत्यङ्गस्येष्टमन्त्रेण प्राण-प्रतिष्ठापनपूर्वकमात्मानमेवं परिपश्यन् विश्व-ब्रह्माण्डमपि तन्मयत्वेन दृष्ट्वा साधको दिव्यभावोपासनां कुर्यादिति भावः।

### अथाचाराः

आचारा हि तत्तद्भावगत-व्यावहारिकशास्त्रानुमोदितवाह्यक्रियाविशेषाः। तदुक्तं **विश्वसारतन्त्रे**,——

भावत्रयगतान् देवि सप्ताचारांस्तु वेत्ति यः।
स धर्मं सकलं वेत्ति जीवन्मुक्तो न संशयः॥

हे देवि, यः साधको भावत्रयसम्बन्धसन्निविष्टान् सप्ताचारांस्तत्त्वतो वेत्ति, स सर्वधर्मं जानाति। स एव जीवन्मुक्तो योगी। उक्तञ्च **कौलावलीतन्त्रे**,——

सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवं परम्।
वैष्णवादुत्तमं शैवं शैवाद्दाक्षिण्यमुत्तमम्॥
सिद्धान्तादुत्तमं कौलं कौलात्परतरं नहि॥

तथाहि,—दाचारो, वैष्णवाचारः, शैवाचारः, दक्षिणाचारो, वामाचारः, सिद्धान्ताचारः कुलाचारश्चेति सप्ताचाराः क्रमोन्नतिक्रमेणैवोत्तरोत्तरतश्चोन्नमोतमा उक्ताः। परन्तु कौलाचारात् परमुत्तमाचारो न विद्यते।

**अथ भावाचारसम्बन्धः**

तदुक्तं विश्वसारतन्त्रे,—

वैदिकं वैष्णवं शैवं दक्षिणं पाशवं स्मृतम्।
सिद्धान्तवामे वीरे तु दिव्यं सत्कौलमुच्यते॥

तथाहि,—वेदाचारो, वेष्णवाचारः, शैवाचारो, दक्षिणाचारश्चेति चतुराचारा उतमपशुभावसाधकस्य कृते विहिताः, वीरभावसाधकस्य कृते वामाचारसिद्धान्ताचारौ विहितौ। दिव्यभावसाधकस्यार्थे कुलाचारो विहितः।



सनातनहिन्दूनां जातिधर्म-ज्ञानभक्तिभावदेवदेवीशास्त्रसाध्यसाधनादीनां सर्वेषामेव तावदाचारो मूलम्। तदुक्तं **सर्वोल्लासतन्त्रे**,—

आचारमूला जातिः स्यादाचारः शास्त्रमूलकः।
देववाक्यं शास्त्रमूलं देवः साधकमूलकः॥
क्रियामूलं साधकस्य क्रियापि फलमूलिका।
फलमूलं सुखमेव सुखमानन्दमूलकम्॥
आनन्दं ज्ञानमूलं च ज्ञानं ज्ञेयस्य मूलकम्।
तत्त्वमूलं ज्ञेयमात्रं तत्त्वं हि ब्रह्ममूलकम्॥
ब्रह्मज्ञानमैक्यमूलमैक्यं हि सर्वमूलकम।
ऐक्यं हि परमेशानि भावातीतं सुनिश्चितम्॥

हे परमेशानि! आचार एव वर्णानां प्रधाणकारणम्। आचारश्च शास्त्रजन्यः, देववाक्यानि शास्त्राणि, देवश्च साधकैः पूजनीयः, क्रियावान् खलु साधकः, क्रिया च फलसाधिका, फलञ्च सुखमेव, सुखमानन्दः ज्ञानमूल आनन्दः, ज्ञेयमूलं ज्ञानम्, ज्ञेयमात्रं तत्त्वमूलम्, तत्त्वं हि ब्रह्ममूलकम्, ब्रह्मज्ञानम् ऐक्यमूलम्, ऐक्यं हि सर्वमूलकं, सर्वं खल्विदं ब्रह्मेति।

## (१) वेदाचारः

**समयाचारतन्त्रे,—**

वेदोक्तेन यजेद्देवं कामसंकल्पपूर्वकम् ।
स एव वैष्णवाचारः पश्वाचारः स एव हि ।।
न मत्स्यभोजनं देवि न स्त्रियं मनसा स्मरेत् ।
परद्रव्ये न लोभः स्यान्न भोगं मनसा स्मरेत् ।।
सिन्धुतीरे कानने वा पर्वते वा सुरालये ।
विल्वमूले विविक्ते वा पुण्यक्षेत्रे सुशोभने ।।
देवताः शुद्धभावेन ध्यातव्याः सुसमाहितैः ।
न शूद्रदर्शनं कुर्यात्कौटिल्यं दूरतस्त्यजेत् ।।
त्रिसन्ध्यं पूजयेद्देवं त्रिसन्ध्यं जपमाचरेत् ।
रात्रौ मालाञ्च यन्त्रञ्च स्पृशेन्नैव कदाचन ।।
वीरकार्यं कथालापं न कुर्याद् गुरुनिन्दनम् ।।

## (२) वैष्णवाचारः



**नित्यातन्त्रे प्रथमपटले,—**

अथ वक्ष्ये महेशानि वैष्णवाचारमुत्तमम् ।
यस्य विज्ञानमात्रेण कौलः स्याद्विहिताञ्जलिः ।।
वेदाचारक्रमेणैव सदा नियमतत्परः ।
मैथुनं तत्कथालापं कदाचिन्नैव कारयेत् ।।
हिंसां निन्दाञ्च कौटिल्यं वर्जयेन्मांसभोजनम् ।
रात्रौ मालाञ्च यन्त्रञ्च स्पृशेन्नैव कदाचन ।।
विष्णौ समर्चयेद्देवि विष्णौ कर्म निवेदयेत् ।
भावयेत् सर्वदा देवि सर्वं विष्णुमयं जगत् ।।

## (३) शैवाचारः

शृणु चार्वङ्गि सुभगे शैवाचारं सुदुर्लभम् ।
वेदाचारक्रमेणैव शैवे शाक्ते व्यवस्थितम् ।।
तद्विशेषं महेशानि केवलं पशुघातनम् ।।

(४) दक्षिणाचारः

इदानीं शृणु चार्वङ्गि दक्षिणाचारमद्रिजे।
दक्षिणामूर्तिमुनिना आश्रितोऽसौ यतः पुरा।।
अत एव महेशानि दक्षिणाचार उच्यते।
प्रावर्ततायमाचारः प्रथमं वीर-दिव्ययोः।।
वेदाचारक्रमेणैव पूजयेत् परमेश्वरीम्।
स्वीकृत्य विजयां रात्रौ जपेन्मन्त्रमनन्यधीः।।

(५) वामाचारः

**भावरहस्ये** द्वादशाध्याये,—

वीरभावे स्थितानां तु द्वावाचारौ प्रकीर्तितौ।
प्रथमं दक्षिणं कुर्यात्ततो वामं समभ्यसेत्।।
स्वधर्मनिरतो यस्तु तत्त्वानां पञ्चकैः सदा।
अर्चयेद्विधिना भक्त्या सानन्दः परदेवताम्।।
क्षित्यप्तेजोमरुद्भिश्च विहायसा तथा किल।
द्रव्यैश्च विविधैर्वापि बाह्याभ्यन्तरभेदतः।।
स एव दक्षिणाचारः सदैवोद्यतमानसः।।
महोत्साही महावीरः स्वेष्टकार्येषु तत्परः।।
एतैस्तत्त्वैस्तथा पुष्पैर्विधिना कुलसम्भवैः।
साक्षाद् शिवमयो भूत्वा प्रकृतिं परमां भजेत।।
"वामाचारः" समाख्यातश्चाष्टपाशैर्विवर्जितः।
शौचभावैः सदा युक्तो महामन्त्रस्य साधनात्।।
दिव्यभावे समुत्पन्ने सिद्धान्ताचारतत्परः।
भवेच्च साधकः पश्चात् कौलाचारं समाश्रयेत्।।
आत्मानं देवतां ज्ञात्वा यश्च नित्यं प्रपूजयेत्।
आगमेन विधानेन सूक्ष्मतत्त्वेन भावतः।।

(६) सिद्धान्ताचारः

समं दमं समाश्रित्य यागयुक्तस्तथा किल।
सिद्धान्ताचार एवोक्तः स सदा शाक्ततन्त्रिभिः।।
आत्मनि परमं ज्ञात्वा परमात्ममयं तथा।
स्वात्मानञ्च सदा ज्ञात्वा स्वात्मज्ञानं प्रजायते।।
एवं भावसमायोगाद् योगी सोऽपि प्रकीर्तितः।
सालम्बश्च समाख्यातो योगभावैस्तु साधनात्।।

(७) कुलाचारः

सन्त्यज्य कर्मबाहुल्यं मातृस्तन्यं यथा शिशुः
प्रविशेद् ज्ञानमार्गे यः सत्त्वगुणसमन्वितः॥
आचारैस्तु विहीनोऽपि ब्रह्मभावरतः सदा।
कौलाचारः स विज्ञेयः पूर्णानन्दपरायणः॥
पञ्चभूतमयं सर्वं ब्रह्माण्डं सचराचरम्।
जीवं प्रकृतितत्त्वञ्च कुलमुक्तं सदा बुधैः॥
कुलं ब्रह्ममयं यश्च चिन्तयेद् भावयोगतः।
स च कौलः समाख्यातो निरालम्बस्तथा किल॥
कुलं कुण्डलिनी ज्ञेया महाशक्तिस्वरूपिणी।
अकुलन्तु शिवः प्रोक्तः शुद्धसत्त्वमयो विभुः॥
तयोस्तु परमं तत्त्वं यो वै जानाति साधकः।
कुलीनः परमः सोऽपि वर्णभेदविवर्जितः॥

**पूजने भावाचार-रतानां साधकानां परदेवता-सम्बन्धः**

**भावरहस्ये** द्वादशाध्याये—



प्रकृतो दासवन्नित्यं पूजयेत्परदेवताम्।
वीरस्तु भक्तियोगेन मातृरूपां प्रपूजयेत्॥
पितृरूपं तदा देवं पूजयेद्वा विधानतः।
स्वायत्तन्तु परं ब्रह्म चिन्तयेद् भावसिद्धये॥
दिव्ययोगी सदा पश्येदात्मन्येव परं मुदा।
आत्मानं परमं मत्वा मुच्यते भवबन्धनात्॥

उत्तमपशुभावसाधकः परदेवतां दास्यसम्बन्धेन प्रपूजयेत्। वीरसाधकः विधानानुसारतः भक्तियुक्तचित्तेन मातृसम्बन्धेन पितृसम्बन्धेन वा पूजयेत्। एवं सर्वदा स्वकीयमात्मानमेवाद्वैतब्रह्मभावेन भावयितुं यत्नपरो भवेत्। दिव्ययोगी च स्वकीयात्मानमेवाद्वैतब्रह्मेति मत्वा भवबन्धान्मुच्यते।

**भावत्रयसाधकानां परदेवतापूजायां विग्रहचिन्तासम्बन्धः**

प्राकृतो बाह्यभावेन सकलं परमं भजेत्।
"नराकार" रूपं स्मृत्वा सदानन्दमयो भवेत्॥
(पशुभावस्य)

मनसा बाह्यतो वापि वीरस्तु साधनं चरेत्।
सकलं परमं ध्यात्वा तैजसं विग्रहं स्मरेत्।।
(वीरसाधकस्य)

दिव्यस्तु निष्कलं ब्रह्म तेजोरूपं विचिन्तयेत्।
कलातीतं सदा हंसं कौलभावे समाश्रयेत्।।
(दिव्यभावसाधकस्य)

पश्वाचारी साधको वैदिकाचारादिचतुराचारैर्नररूपां परदेवतां ध्यात्वा केवलं बाह्यानुष्ठानेन यथोपचारैः संपूज्य परमानन्दमयो भवेत्। वीराचारी साधकः परमं तेजोरूपं विग्रहं ध्यात्वा वामाचारेण लौकिकयौगिकद्रव्यैर्मनसा बाह्यतश्च सम्पूज्य परमानन्दमयो भवेत्। कुलाचारी साधकः स्वयं निष्कलं तेजोरूपं परं ब्रह्मेति मत्वा सततं हंसजपेनानन्दमयस्तिष्ठेत्।

### साधकानां परदेवतायां भाव-सम्बन्धः

**भावरहस्ये**—



प्राकृते वीरभावे तु गुणत्रयविभेदतः।
साधकाः कर्म कुर्वन्ति चात्मभावमयं सदा।।
दिव्यभावे समुत्पन्ने सत्त्वगुणमयो भवेत्।
गुणातीतो भवेद् वापि ब्रह्मज्ञानपरायणः।।

तथाहि,—तमोगुणी साधकः पशुभावेन, तथा रजोगुणी साधको वीरभावेन स्वीयात्मोपास्यदेवतयोरैक्यं विभाव्य विधानानुसारेण सततं कर्म कुर्यात्। एवं कृते दिव्यभावे समुत्पन्ने सत्त्वगुणसम्पन्नो दिव्यभावसाधको गुणातीते परब्रह्मणि ब्रह्मज्ञानपरायणस्तन्मयो भवेत्।

### परब्रह्मणि साधकस्य रूपगुण-सम्बन्धः

**भावरहस्ये** द्वादशाध्याये—

स्थूलरूपं परब्रह्म प्राकृतश्चिन्तयेन्मुदा।
तेजसा मिश्रितं स्थूलं वीरभावे विभावयेत्।।
वर्णयुक्तं परं ज्योतिर्वीरो वा चिन्तयेद् हृदि।
शुभ्रतेजोमयं दिव्यस्तथात्मानं समाश्रयेत्।।

देवादन्यं तथा दिव्यो न चिन्तयेत् कदाचन।
तन्मयं सकलं मत्वा ब्रह्मज्ञानपरो भवेत्॥
कर्म ब्रह्म कर्ता ब्रह्म सर्वं ब्रह्मस्वरूपकम्।
ब्रह्मैवाहमिति ज्ञात्वा सर्वपापाद् विमुच्यते॥
निरस्तो विहितेभ्यश्च कर्मभ्यः स सदा किल।
पूर्वज्ञान-समायोगात् कौलाचारपरो भवेत्॥

**कौलानां स्वरूपम्**

**भावचूड़ामणौ,—**

कर्द्दमे चन्दनेऽभिन्नं पुत्रे शत्रौ तथा प्रिये।
श्मशाने भवने देवि तथैव काञ्चने तृणे॥
न भेदो यस्य देवेशि स कौलः परिकीर्तितः॥

**ज्ञानसङ्कलिनीतन्त्रे**ऽपि कुलविद्याऽतीवगोपनीयेत्युक्तम्।

वेदशास्त्रपुराणानि सामान्य गणिका इव।
इयन्तु शाम्भवी विद्या गुप्ता कुलवधूरिव॥

**श्यामारहस्ये—**

अन्तः शाक्ता बहिः शैवाः सभायां वैष्णवा मताः।
नानारूपधराः कौला विचरन्ति महीतले॥

अपि च **भावरहस्ये,—**

कुलं कुण्डलिनी ज्ञेया महाशक्तिस्वरूपिणी।
अकुलन्तु शिवः प्रोक्तः शुद्धसत्त्वमयो विभुः॥
तयोस्तु परमं तत्त्वं यो वै जानाति साधकः।
कुलीनः परमः सोऽपि वर्णभेदविवर्जितः॥

तन्त्रशास्त्रभाषायाः सांकेतिकत्वेन सर्वसाधारणानामर्थबोधो दुरूह एव, अपि च ललितासहस्रनामभाष्ये'कुलशब्दार्थो' 'मूलाधार' इति। 'कु'शब्दस्य क्षितितत्त्वं, यत्र लीयन्ते तदेवाधारमूलं चक्रं मूलाधारं, कुलं त्रिकोणं योनिश्चेति कथ्यते। सैव मातृकावर्णात्मिका परवागधिष्ठानशक्तिः, मातृयोनिश्चेति।

साधक एतन्मातृयोनितः कुण्डलिनीशक्तिमद्ध्वं मणिपुरादितः सहस्रदलपर्यन्त-मुत्थाप्य प्रत्येकस्मिंश्चक्रे कुलकुण्डलिन्या सह जीवात्मनः सामरस्यानन्दामृत-मुपभुङ्क्ते। तदुक्तम्,—

"मातृयोनिं परित्यज्य विहरेत् सर्वयोनिषु" इत्यादि।

तन्त्रशास्त्रे नानास्थानेषु वामाचारा अपि कुलाचाराः कथ्यन्ते। वामा-चाराणां बाह्यपूजायां पञ्चतत्त्वानां मद्य-मांस-मत्स्य-मुद्रा-मैथुनानां लौकिक-प्रयोगविधानमस्ति। ते च तानि लौकिकव्यवहारार्थ स्थूल द्रव्याणि पूजायां निवेद्य परमामृतत्वेन गृह्णन्ति। एवंविधस्य कुलाचारस्य वेदविरुद्धत्वेन द्विजा-तीनां कृते निषेध उक्तः। तदुक्तं **देवीभागवते**—

"सर्वदा वेदभिन्नार्थे नाधिकारी द्विजो भवेत्।
वेदाधिकारहीनस्तु भवेत्तन्त्राधिकारवान्॥" इति,

"कौलमिश्रपथौ हेयौ नित्यं गौरि द्विजातिभिः।" इत्यादि **ज्ञानार्णवतन्त्रे**-ऽपि शाक्तानां कुलाचारो मिश्राचारः समयाचार इति भेदेन मार्गत्रयमुच्यते। तेषां मध्ये यत्र पूर्वोक्तलौकिक-पञ्चमकाराणां क्रियात्मकः प्रयोगो वर्तते, तथा चतुर्वर्गाणां मध्ये कामस्यार्थस्य च पुरुषार्थद्वयस्य लाभार्थं मुख्य-भावेनानुष्ठानञ्च विद्यते, स एव कुलमार्गो वेदविरुद्धः।

यो मोक्षोपयोगी मार्गः स बाह्यपूजातो मानसिकपूजाधिक्यवान्, पञ्च-तत्त्वानां केवलमाध्यात्मिक-यौगिकार्थप्रयोगात्मकः, स एव समयाचारमार्गो वेदानुमोदितश्च। समयाचारसाधकः पञ्चतत्त्वानां तात्पर्यं प्रतितत्त्व-सिद्धान्तित-यौगिकार्थप्रतिपादितश्रुतिं प्रतिपादयति। एतद्द्वयसंमिश्रणात्मको मार्गो मिश्राचारो धर्मपुरुषार्थप्रधानः। अस्मिन् मार्गे क्रियात्मकबाह्यपूजाया भावा-त्मकमानसपूजायाश्च समप्राधान्यम्। मिश्राचारस्यांशविशेषस्य वेदविरुद्धत्वेन द्विजातीनामेतद्द्वयं हेयमुक्तम्।

पञ्चतत्त्वसाधना समयाचाराणामतीव महत्त्वपूर्णानामपि निन्दनीया। पञ्चमकाराश्च स्थूल-सूक्ष्मभेदेन, तथा लौकिक-यौगिकभेदेन च द्विविधाः। यौगिक पञ्चमकारसाधना तन्त्रशास्त्रस्य लययोगः।

### अथ मकारतत्त्वम्

तन्त्रशास्त्रे पञ्चमकारैः साधनाया उल्लेखोऽस्ति। मद्यादिपञ्चद्रव्याणा-माद्याक्षराणि मकाराः। अतो म-प्रतीकेन तानि द्रव्याण्येव बोधयितुं मकार

इत्युक्तम्। यथागमसारे,—

"मद्यं मांसं तथा मत्स्यं मुद्रां मैथुनमेव च।
मकारपञ्चकं कृत्वा पुनर्जन्म न विद्यते।।' 'इति

तन्त्रशास्त्रे कथं मद्यमांसादिपञ्चमकार-व्यवहारो दृश्यत इति चेत् सत्यम्। प्रागेवोक्तं सत्त्वरजस्तमोरूपत्रिगुणभेदेनोपासकस्योपासनायाश्चाधि-कारप्रकारभेदो भवतीति। यौगिकार्थश्रुतिप्रतिपादित-समयाचारसाधकानां पञ्चमकारा अत्रालोच्यविषयः। तदुक्तम् आगमसारे—

(१) प्रथमतत्त्वं मद्यम्

सोमधारा क्षरेद् या तु ब्रह्मरन्ध्राद् वरानने।
पीत्वानन्दमयस्तां यः स एव मद्यसाधकः।।

हे वरानने, ब्रह्मरन्ध्रतः क्षरितामृतधारा-(खेचरी मुद्रया)-पानेनानन्दमयो यस्तिष्ठति, स एव मद्यसाधकः। अपि च—

यदुक्तं परमं ब्रह्म निर्विकारं निरञ्जनम्।
तस्मिन् प्रमदनज्ञानं तन्मद्यं परिकीर्तितम्।।

निर्विकार-निरञ्जन-परब्रह्मणि योगसाधनेन यत्प्रमोदानन्दज्ञानं तदेव मद्यं, तन्मद्यपानात् मद्यसाधकः। अथवा,

गृहकार्यैकचित्तानां गृहिणां प्रबले कलौ।
आद्यतत्त्वप्रतिनिधौ विज्ञेयं मधुरत्रयम्।।
दुग्धं सिता माक्षिकञ्च विज्ञेयं मधुरत्रयम्।
अलिरूपमिदं मत्वा देवतायै निवेदयेत्।।

प्रबले कलौ गृहकार्यासक्तचित्तानां जनानां पक्षे मद्यपानमविधेयम्। मद्यप्रतिनिधिस्थले दुग्ध-शर्करा-मधुमेलनेन त्रिमधुरं मद्यरूपेण देवतायै निवे-दयेदिति स्थूलार्पणम्।

(२) द्वितीयतत्त्वं मांसम्

मा-शब्दाद्रसना ज्ञेया तदंशान् रसनाप्रिये।
सदा यो भक्षयेद्देवि स एव मांससाधकः।।

हे रसनाप्रिये, "मा" रसना-शब्दस्य नामान्तरम्। तदंशसम्भूतं वाक्यं यः सततं भक्षयति स एव मांससाधकः। मांससाधको वाक्यसंयमी मौनी योगी च। अपि च—

मां सनोति हि यत्कर्म तन्मांसं परिकीर्तितम्।
न च कायप्रतीकन्तु योगिभिर्मांसमुच्यते॥

यो हि सत्कर्मसमूहं परब्रह्मणि समर्पयति, तत्समर्पणं नाम मांसम्, तस्य कर्ता मांससाधकः।

(३) तृतीयं तत्त्वं मत्स्यम्

गङ्गायमुनयोर्मध्ये द्वौ मत्स्यौ चरतः सदा।
तौ मत्स्यौ भक्षयेद् यस्तु स भवेन्मत्स्यसाधकः॥

शरीरस्थे इड़ापिङ्गले गङ्गायमुने कथ्येते। तदन्तर्वर्तिनौ श्वास-प्रश्वासौ द्वौ मत्स्यौ कथितौ। तौ मत्स्यौ यो भक्षयेत्, अर्थाद् यः प्राणायामयोगेन श्वासप्रश्वासौ निरोध्य कुम्भकं कृत्वा तिष्ठति स मत्स्यसाधकः। यथा तैलङ्ग-स्वामिप्रभृतयः। अपिच—



मत्स्यमानं सर्वभूते सुखदुःखमिदं प्रिये।
इति यत्सात्त्विकं ज्ञानं तन्मत्स्यः परिकीर्तितः॥

हे प्रिये सर्वभूतेष्वात्मवत् सुखदुःखयोः समज्ञानरूपं यत्सात्त्विकज्ञानं तन्मत्स्यः तत्साधको मत्स्यसाधकः।

(४) चतुर्थं तत्त्वं मुद्रा

सहस्रारे महापद्मे कर्णिका मुद्रिता चरेत्।
आत्मा तत्रैव देवेशि केवलः पारदोपमः॥
सूर्यकोटिप्रतीकाशश्चन्द्रकोटिसुशीतलः।
अतीव कमनीयश्च महाकुण्डलिनीयुतः॥
यस्य ज्ञानोदयस्तत्र "मुद्रा"-साधक उच्यते।

हे देवेशि! शिरःस्थितसहस्रदले पद्मे मुद्रितकर्णिकाभ्यन्तरे शुद्धपारद-तुल्यः कोटिसूर्यसमतेजाः कोटिचन्द्रसमसुशीतलोऽतिमनोहरो महाकुण्डलिनीयुत

आत्मावतिष्ठते; तस्मिन्नात्मनि यस्य ज्ञानोदयो भवेत् स एव मुद्रासाधकः। अपिच—

सत्सङ्गेन भवेन्मुक्तिरसत्सङ्गेषु बन्धनम्।
असत्सङ्गमुद्रनं यत्तन्मुद्रा परिकीर्तिता॥

तथाहि,—सत्सङ्गे मुक्तिरसत्सङ्गे बन्धनमिति ज्ञात्वाअसत्सङ्गपरित्यागी हि मुद्रासाधकः।

## (५) पञ्चमं तत्त्वं मैथुनम्

मैथुनं परमं तत्त्वं सृष्टिस्थित्यन्तकारणम्।
मैथुनाज्जायते सिद्धं ब्रह्मज्ञानं सुदुर्लभम्॥

मैथुनक्रिया सृष्टि-स्थिति-लयानां कारणं परमं तत्त्वम्। मैथुनक्रियायोगे सिद्धिलाभो जायते। तस्माच्च सुदुर्लभं ब्रह्मज्ञानमुत्पद्यते। अपिच,—

कुलकुण्डलिनी शक्तिर्देहिनां देहधारिणी।
तया शिवस्य संयोगो मैथुनं परिकीर्तितम्॥

मूलाधारस्थितकुलकुण्डलिनीशक्त्या योगसाधनया षट्चक्रभेदेन शिरःस्थितसहस्रदलकमलकर्णिकान्तर्गतविन्दुरूप-परमशिवे संयोगो नाम मैथुनम्। अपिच,—

रेफस्तु कुंकुमाभासः कुण्डमध्ये व्यवस्थितः।
मकारश्च विन्दुरूपो महायोनौ स्थितः प्रिये॥
अकारहंसमारुह्य एकता च यदा भवेत्।
तदा जातो महानन्दो ब्रह्मज्ञानं सुदुर्लभम्॥

तथाहि—रेफः कुंकुमवर्णः कुण्डमध्ये तिष्ठति। मकारश्च विन्दुरूपेण महायोनौ वर्तते। अकाररूपहंसाश्रयेण यदोभयोर्मिलनं भवेत्तदा ब्रह्मज्ञानमुदेति। यः साधक एतन्मिलने समर्थः स मैथुनसाधकः। यथा मैथुनव्यापारे "आलिङ्गन-चुम्बन-शीत्कारानुलेपन-रमण-रेतःपाता" इति षड़ङ्गानि सन्ति, तथा यौगिकमैथुनव्यापारेऽपि षड़ङ्गानि वर्तन्ते। तदुक्तम्,—

आलिङ्गनं भवेन्न्यासश्चुम्बनं ध्यानमीरितम्।
आवाहनं शीत्कारः स्यान्नैवेद्यमनुलेपनम्॥
जपनं रमणं प्रोक्तं रेतःपातश्च दक्षिणा।
सर्वथैव त्वया गोप्यं मम प्राणाधिकप्रिये॥

योगक्रियातत्त्वानि यथा न्यास एवालिङ्गनम्, ध्यानं चुम्बनम्, आवाहनं शीत्कारः, नैवेद्यमनुलेपनम्, जपो रमणम्, दक्षिणा रेतःपातः,—एतत्षड़ङ्ग-योगेन साधनैव मैथुनं साधकस्येति।

"पञ्चमे पञ्चमकारः पञ्चाननसमो भवेत्।"

साधकः पञ्चमकारसाधनया शिवतुल्यो भवेत्। अत एव सूक्ष्मपञ्चमकारसाधना लययोगः।

स्वयं महाकालविरचिते महाकाल्याः कर्पूरादिस्तोत्रे साधकानां मातृपूजा–बलि-होम-जपादीनां यौगिकार्थप्रतिपादितविधानमुक्तम्। यथा,—

सलोमास्थिः स्वैरं पललमपि मार्जारमसिते।
परञ्चौष्ट्रं मेषं नरमहिषयोश्छागमपि वा।
बलिं ते पूजायामपि वितरतां मर्त्यवसतां,
सतां सिद्धिः सर्वा प्रतिपदमपूर्वा प्रभवति॥ इत्यादि।



हे असिते! तव पूजायां मर्त्यवासिनां साधकानां मध्ये यः साधकः साधनाप्रतिबन्धकान् काम-क्रोध-लोभ-मोह-मद-मात्सर्यान् स्वशरीरस्थान् षड्रिपून् मूर्तप्रतिनिधिप्रतिरूपकान् जीववदेतान् छागमहिषादीन् यौगिकार्थान् लालसारहितेन चेतसा स्वेच्छया च तुभ्यमर्पयितुं समर्थो भवति, स एव सर्वसिद्धिलाभे समर्थो भवति।

योगशास्त्रं तन्त्रशास्त्रञ्च द्वयमेव शिवभाषितम्। कथमेकव्यक्तिपक्षे पथद्वयमुक्तमित्यत आह,—

इह जगति पथद्वयमस्ति, निवृत्तिः प्रवृत्तिश्चेति। निवृत्तिर्योगः, प्रवृत्तिर्भोगः। आगमसारोक्त–"सूक्ष्मपञ्चमकार"साधना निवृत्तिपथे, तथा महानिर्वाण-तन्त्रप्रभृतिवर्णित-"स्थूल-पञ्चमकार" साधना प्रवृत्तिपथे विधेया। येषां खलु भोगवासनानिवृत्तिपूर्वकं विषयवैराग्यमुदेति तेषां पक्षे निवृत्तिमार्गस्य योगपथः सूक्ष्मपञ्चमकारसाधना। अपिच येषां खलु भोगवासना समग्रसंसारभोगलिप्सा च दुर्दमनीया दुष्पूरणीया, तेषां पक्षे सदाशिवेन स्थूलपञ्चमकारसाधना तन्त्रशास्त्रे प्रकाशिता। भोगेन तेषां योगपथे निवृत्ति-

पथे प्रवेशाधिकारः सुलभो भवति। अत एव मद्यमांसादिव्यवस्थया तन्त्र-शास्त्रस्य निकृष्टत्वं प्रतिपन्नं न भवति वरं सर्वाङ्गपूर्णत्वमेव प्रतिपादितं भवति। यतः शास्त्रं सर्वाधिकारिणामधिकार्यविषयस्योपदेष्टृ। उक्तञ्च **महानिर्वाणतन्त्रे**—

न मद्यभक्षणे दोषो न मांसे न च मैथुने।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला॥

अपिच— यत्रास्ति भोगो न च तत्र मोक्षो
यत्रास्ति मोक्षो न च तत्र भोगः।
शिवापदाम्भोजयुगार्चकाणां
भोगश्च मोक्षश्च करस्थ एव॥

अत्रोच्यते—स्वरूपतः सकामासंयमिजनानां लौकिकपञ्चमकारेस्वासक्तिर-धिकतरा, तेषामतिप्रियं वस्तु पञ्चमकारा नाम। पञ्चमकारा एव संसार-बन्धहेतुः। कामनाविषयेऽथवेच्छाविषये रजःप्रधानानां जीवानां स्वातन्त्र्यं नास्ति। तदुक्तं श्रीकृष्णेन **भगवद्गीतायां**, "काम एष क्रोध एष रजोगुण-समुद्भव" इत्यादि। अतएव पञ्चमकारवासनापरित्यागः सहजसाध्यो न भवति।



जगदीश्वरी महामाया सर्वजीवानामन्तर्यामिनीरूपा वर्तते। परन्तु यस्य यदन्नं भोगो वा प्रियो भवेत्, तस्येष्टदेवताया अपि तदन्नं भोगो वा प्रियो भवति। तदुक्तं श्रीरामचन्द्रेण **रामायण**स्यायोध्याकाण्डे दशरथोद्देशे पिण्डदान-समये,—

"यदन्नाः पुरुषो भवति तदन्नास्तस्य देवता" इत्यादि। तथैव सकामानां पुरुषाणां स्वस्वप्रियद्रव्येनैव स्वस्वेष्टदेवतापूजाया विधानं तन्त्र-प्रकाशितम्। तन्त्रोपदिष्टमार्गेण परदेवतायां प्रीत्युद्देश्यकात्मसमर्पणबुद्ध्या पूजायोगेन परमा-सक्तिविषयीभूतद्रव्याणां प्रयोगे, हिंसाद्यसत्कर्मस्वपि न कोऽपि दोषो जायते। परन्तु तदनुष्ठितकर्मभिः साधकस्य भोगेच्छायाः परिपूरणेन क्रमश आत्म-संयमो भवति। एवञ्चानेनाभ्यासयोगेन यदा मनोऽन्तर्मुखि भूत्वा वाह्य-विषयवस्तुषु पूजायाञ्चासक्तिरहितत्वेनाध्यात्मिकप्रक्रियायामन्तर्यागे प्रविश्य सम्पूर्णतन्मयत्वेन भगवत्परायणां भक्ति लभते, तदा तदन्तरेऽनवरतं भग-वत्स्फुरणेन वाह्यज्ञानशून्यः स्वयं परमशिव इव स साधको यद्यदाचरति तत्सर्वं भगवत्पूजापरं भवति। तदुक्तम्,—

"आत्मा त्वं गिरिजा मतिः सहचरः प्राणाः शरीरं गृहम्,
पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः।
सञ्चारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो,
यद्यत् कर्म करोमि तत्तदखिलं शम्भो! तवाराधनम्॥" इति

तन्त्रशास्त्रे संसारासक्त-मद्य-मांस-मत्स्यादिभोजि-भोगविलासिस्त्रियासक्त-जनानां पक्षे प्रोक्त-वामाचारविधानेन साधनया तेषां तस्मादुद्धारमार्गं निरूप्य दर्शयतीति। अर्थाद् भोगेन त्यागो भवति।

### स्तोत्रपाठविधिः

"नमो देव्यै" इति स्तोत्रैर्महालक्ष्मीं समर्चयेत्।
अवतारत्रयार्चायां स्तोत्रमन्त्रास्तदाश्रयाः॥२२॥

महालक्ष्मीं "नमो देव्यै--" इत्यादिमन्त्रैरर्चयेत्। अवतारत्रयार्चायां तत्तन्माहात्म्योक्तस्तोत्रमन्त्रेणार्चना कर्तव्या। "नमो देव्यै" इति सम्पूर्णस्तोत्रैः, "नमो देव्यै" इत्येकेन वा अथर्वशीर्षस्थमन्त्रेण। "रौद्रायै" इत्यादिस्तोत्रमन्त्रैः सर्वैरपि वा (गुप्तवती)।



मूलप्रकृतिः--जगन्माता--महालक्ष्मीर्यस्याः स्वरूपं प्राधानिकरहस्ये वर्णितं भवति।

(१) देव्यथर्वशीर्षोपनिषदो वा देव्युपनिषदो वा मन्त्रेण स्तवं कुर्यात्

नमो देव्यै महादेव्यै शिवायै सततं नमः।
नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम्॥८॥
(देव्युपनिषद् ८)

(२) अथवा तां चण्ड्याः पञ्चमाध्यायोक्तसमग्रस्तोत्रमन्त्रैरर्चयेत्। "अवतारत्रयार्चायां"--तुरीयाया महालक्ष्मीदेव्या अवतारत्रयं यथा--(१) मधुकैटभनाशिनी महाकाली। (२) महिषमर्दिनी महालक्ष्मीः। (३) निशुम्भ-शुम्भघातिनी महासरस्वती।

महाकाल्यर्चायां "त्वं स्वाहा त्वं स्वधा" इत्यादि स्तोत्रपाठः कर्तव्यः। महिषमर्दिनीं महालक्ष्मीं "देव्या यया ततमिद" मित्यादिसमग्रस्तोत्रैरर्चयेत्। शुम्भघातिनीं महासरस्वतीं "देवी प्रपन्नार्तिहरे प्रसीद" इत्यादिस्तोत्रमन्त्रैरर्चयेत्।

## महिषासुरपूजाविधिः

**कालीविलासतन्त्रे** ऊर्णविंशपटले—

अधुना संप्रवक्ष्यामि महिषस्य च पूजनम्।
महिष त्वं महावीरः शिवरूपो महाबलः॥
अतस्त्वां पूजयिष्यामि क्षमस्व महिषासुर।
ध्यात्वा पाद्यादिकं दत्त्वा ह्येकधा प्रजपेन्मनुम्।
"ह्रीँ ह्रीँ हूँ महिषाय हूँ ह्रीँ ह्रीँ"

महिषासुरः शिवांशे जात इति कालिकापुराणे ६० तमाध्याये वर्णितम्।

## देवीवाहनसिंहपूजा

**कालीविलासतन्त्रे**ऽष्टादशपटले—

सिंह त्वं हरिरूपोऽसि स्वयं विष्णुर्न संशयः।
पार्वत्या वाहनं त्वं हि त्वामतः पूजयाम्यहम्॥
"ह्रीँ ह्रीँ सिंहाय महाबलाय ह्रीँ ह्रीँ"
एषा विद्या महादेवी सिंहस्य द्वादशाक्षरी।
अंगुष्ठं हृदये दत्त्वा सिंहस्य नगनन्दिनी॥
एकधा मन्त्रमुच्चार्य प्राणसिद्धिश्च जायते।
ध्यात्वा पाद्यादिकं दत्त्वा ह्येकधा मन्त्रमुच्चरेत्॥
इति ते कथितं देवि सिंहपूजाविधानकम्।

## अथ चण्डीपाठविधिः

ततः कृताञ्जलिर्भूत्वा स्तुवीत चरितैरिमैः।
एकेन वा मध्यमेन नैकेनेतरयोरिह॥२९॥
चरितार्धन्तु न जपेज्जपंश्छिद्रमवाप्नुयात्।
स्तोत्रमन्त्रैः स्तुवीतेमां यदि वा जगदम्बिकाम्॥३०॥

ततोऽङ्गदेवतापूजोत्तरं चरित्रत्रयेण समुच्चितेन, मध्यमेन मध्यमचरित्रमात्रेण वा, स्तोत्रचतुष्टयेन वा स्तुवीत। अत्र पूर्वपूर्वासम्भवे सत्युत्तरोत्तरपक्षो व्यवस्थितः (गुप्तवती)। प्रथमपक्षः सम्पूर्णचण्डीपाठः। तदशक्तौ

द्वितीयः पक्षः (द्वितीय-तृतीय-चतुर्थाध्यायाः)। तत्राप्यशक्तौ तृतीयपक्षः। केवलं स्तोत्रचतुष्टयमात्रं पठनीयमिति।

प्रदक्षिणनमस्कारान् मूर्ध्नि कृत्वा कृताञ्जलिः।
क्षमापयेज्जगद्धात्रीं मुहुर्मुहुरतन्द्रितः ॥३१॥

मस्तके कृताञ्जलिः सन् प्रदक्षिणनमस्कारान् कृत्वानलसभावेन पुनः पुनर्जगन्मातुः समीपे क्षमापयेत्।

## अपराध-क्षमापणम्

अपराधसहस्राणि क्रियन्तेऽर्हनिशं मया।
दासोऽहमिति मां मत्वा क्षमस्व परमेश्वरि ॥१॥
आवाहनं न जानामि न जानामि विसर्जनम्।
पूजाभागं न जानामि क्षम्येऽहं परमेश्वरि ॥२॥
मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वरि ॥
यत्पूजितं मया देवी परिपूर्णं तदस्तु मे ॥३॥
अपराधशतं कृत्वा जगदम्बेति चोच्चरन्।
यां गतिं समवाप्नोति न तां ब्रह्मादयः सुराः ॥४॥
सापराधोऽस्मि शरणं प्राप्तस्त्वां जगदम्बिके।
इदानीमनुकम्प्योऽहं यथेच्छसि तथा कुरु ॥५॥
अज्ञानाद् विस्मृतेर्भ्रान्त्या यन्नूनमधिकं कृतम्।
तत्सर्वं क्षम्यतां देवि प्रसीद परमेश्वरि ॥६॥
कामेश्वरि जगन्मातः सच्चिदानन्दविग्रहे।
गृहाणार्च्चामिमां प्रीत्या प्रसीद परमेश्वरि ॥७॥

## सप्तशतीहोमविधिः

प्रतिश्लोकञ्च जुहुयात् पायसं तिलसर्पिषा।
जुहुयात् स्तोत्रमन्त्रैर्वा चण्डिकायै शुभं हविः ॥३२॥

तथा च—सप्तशत्याः प्रतिमन्त्रपाठपूर्वकं स्वाहेत्युच्चार्य घृत-तिल-पायसैर्होतव्यम्। अथवा स्तोत्रचतुष्टयमन्त्रैश्चण्डिकायै केवलेन घृतेनैव होमं कुर्यात्।

"प्रतिश्लोकञ्च जुहुयात्—" प्रतिश्लोकमिति-उक्तमन्त्रविभागान्यतमोपलक्षणमिदम् (गुप्तवती)।

सप्तशतीमन्त्रविभागः—कात्यायनीतन्त्रमते चण्ड्याः श्लोकसंख्या पञ्चशताष्टसप्ततिः। रुद्रयामलमते पञ्चशताष्टाशीतिः। वाराहीतन्त्रमते पञ्चशतसार्धाष्टाशीतिः। श्लोकानेतान् विभज्य सर्वसमष्टिसंख्या सप्तशतमन्त्रा इति। "तस्मात् सप्तशतीति"।

**तदुक्तं चिदम्बरतन्त्रे—**

"तस्मिन्देव्याः स्तवे पुण्ये मन्त्राः सप्तशतं प्रिये।"

**कात्यायनीतन्त्रे—**

अष्टसप्तत्युत्तराणां श्लोकानां शतपञ्चकम्।
प्रोक्तं सप्तशतीस्तोत्रं तत्सप्तशतसंख्यया॥
विभज्य जुहुयान्मन्त्रमिति कात्यायनीमतम्॥
एवं त्रयोदशाध्याया होमपूजनतृप्तिषु॥
शतानि सप्तसंख्यानि तव प्रोक्तानि शैलजे॥

हे पार्वति! एवंरूपेण चण्ड्यास्त्रयोदशाध्याये पूजाहोमतर्पणनिमित्तं तव सप्तशतमन्त्राण्युक्तानि।

अत्र केचित् कवचादित्रयस्य, रहस्यत्रयस्य च प्रतिश्लोकं होममनुतिष्ठन्ति। तत्र कवचांशे होमो न युक्तः, तन्त्रान्तरे निषेधात्।

चण्डीस्तवे प्रतिश्लोकमेकैकाहुतिरिष्यते।
रक्षाकवचगैर्मन्त्रैर्होमं तत्र न कारयेत्॥
मौर्खात् कवचगैर्मन्त्रैः प्रतिश्लोकं जुहोति यः।
स्याद्देहपतनं तस्य नरकञ्च प्रपद्यते॥
अन्धकाख्यो महादैत्यो दुर्गाहोमपरायणः।
कवचाहुतिजातपापान्महेशेन निपातितः॥

तथाहि—सप्तशतीस्तवस्य प्रतिमन्त्रेणैवैकैकाहुतिं दद्यात्। कवचादिस्थितमन्त्रेण कदापि होमं न कुर्यात्। मूर्खतावशतः कवचादिस्थितमन्त्रेण यो होमं करोति, तस्य देहपातो भवति, अन्ते च स नरकं व्रजेत्। अन्धकाख्यो महादैत्यो दुर्गाहोमपरायणः कवचादिहोमजातपापहेतोर्महेशेन निहतोऽभूत्।

मरीचिकल्पे दुर्गासप्तशत्याः पुरश्चरणप्रयोगे देवीसूक्तस्य रात्रिसूक्तस्य च प्रत्यृङ्मन्त्रेणाहुतिदानव्यवस्था वर्तते।

एवं देवि मया प्रोक्तः पौरश्चरणिकः क्रमः।
तदन्ते हवनं कुर्यात्प्रतिश्लोकं च पायसम्॥
रात्रिसूक्तं च प्रत्यृचं तथा देव्याश्च सूक्तकम्।
हुत्वान्ते प्रजपेत्स्तोत्रमादौ पूजादिकं सदा॥
(गुप्तवतीटीका)

"जुहुयात्स्तोत्रमन्त्रैर्वा"—अशक्तस्य तावत्पक्षान्तरमाह,—जुहुयात्स्तोत्र-मन्त्रैर्वेति। अयं होमः प्रकरणात् पूजाङ्गम्। (गुप्तवती) सप्तशत्याः प्रत्येक-मन्त्रेण होमकरणाशक्तपक्षे सप्तशत्याः स्तोत्रचतुष्टयमन्त्रेणैव होमं कुर्यात्। प्रकरणान्तर्भुक्तत्वेनायं होमो महिषमर्दिनीपूजाङ्गीभूतः।

## प्राणायाम-ध्यानं तन्मयता च

नमोनमः पदैर्देवीं पूजयेत्सुसमाहितः।
प्रयतः प्राञ्जलिः प्रह्वः प्राणानारोप्य चात्मनि॥
सुचिरं भावयेद्देवीं चण्डिकां तन्मयो भवेत्॥३३॥

तथाहि—सप्तशतीहोमानन्तरं विहितमन्त्रैर्देव्याः स्तुतिमन्त्रैर्नमोनमः-पदयुक्तैः सुसमाहितचित्तेन देवीं पुनः संपूज्य संयतमनाः कृताञ्जलिर्विनीतो भूत्वा प्राणायामयोगावलम्बनेन चण्डिकादेवीं ध्यात्वा च सुचिरं तन्मयो भवेत्। "प्राणानारोप्य चात्मनि"—आत्मनि प्राणायामयोगपूर्वकं ध्यायेत्। तदुक्तं **सौभाग्यलक्ष्म्युपनिषदि**—

समापय्य निद्रां सुजीर्णेऽल्पभोजी
श्रमत्याज्यबाधे विविक्ते प्रदेशे।
सदाऽऽसीत नित्यञ्च स एव प्रयत्नो-
ऽथवा प्राणरोधो निजाभ्यासमार्गात्॥

तथाहि—यो जितनिद्रः सुजीर्णे पूर्वभुक्ते सत्यल्पं भुङ्क्ते च, तादृशो योगी मशकादिबाधारहितेऽतएव श्रमत्याजि (श्रमं बाधादूरीकरणाथमायासं त्याजयतीति तथाभूते) निर्जनस्थानेऽवस्थितः सदा प्राणायामयोगमभ्यस्येत्। नित्यमेव प्रयत्न एष कर्तव्योऽथवा निजाभ्यस्तपथेन पूरककुम्भकादिप्राणरोधः प्राणायामः साधनीय इति।

वक्त्रेणापूर्य वायुं हुतवहनिलयेऽपानमाकृष्य धृत्वा
स्वांगुष्ठाद्यंगुलीभिर्वरकरतलयोः षड्भिरेवं निरुध्य।
श्रोत्रे नेत्रे च नासापुटयुगलमथोऽनेन मार्गेण सम्यक्
पश्यन्ति प्रत्ययांशं प्रणवबहुविधध्यानसंलीनचित्ताः।।

तथाहि—मुखेन वायुमापूर्य हुतवहस्थानेऽर्थादाधारचक्रेऽपानवायुमाकृष्यां-गुष्ठाद्यंगुल्या स्वकरद्वये षट्संख्यकमात्राभिर्निरुन्ध्यात्। एवं श्रोत्रद्वयं नेत्रयुगलं नासाद्वयञ्च निरोध्य बहुप्रणवध्यानेन लीनचित्तो योगी ज्ञानस्वरूपात्मनः साक्षात्कारं करोति। अस्य नाम षण्मुखमुद्रान्वितप्राणायामयोगः।

"सुचिरं भावयेद्देवीम्"—अनेन ध्यानावस्था सूचिता भवति। महर्षिः पतञ्जलिरवदत्,—

"देशबन्धश्चित्तस्य धारणा" (पातञ्जलदर्शनम् ३।१) कस्मिंश्चिद् विशेषवस्तुनि चित्तमाबध्यावस्थानं नाम "धारणा"।

"तत्र प्रत्ययैकतानता ध्यानम्" (३।२)
तत्र तद्वस्तुविषयकं निरन्तरमेकभावेन प्रवाहितं ज्ञानं नाम "ध्यानम्"।
"तन्मयो भवेत्"—अनेन समाहितावस्था सूचिता भवति।

**समाधिः**

"तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः"
(पातञ्जलदर्शनम्)

यदा तदेव ध्यानं बाह्योपाधिपरित्यागपूर्वकं केवलमर्थमात्रं प्रकाशयति, तदा समाधिरित्यभिधीयते।

ध्यानस्य प्रगाढ़तायां तस्य परिपाके ध्यानज्ञानमपि न विद्यते, तत्काले चित्तं ध्येयवस्तुनि विलीनं कृत्वा साधको ध्येयस्वरूपप्राप्तो भवति। अत एव तदा चित्तं स्वरूपशून्यमिव सञ्जातं सत्तन्मुहूर्ते न किमपि जानाति। तादृश्यां चित्तावस्थायामुपस्थितायां सत्यां साधकस्य "समाधि"र्ज्ञेयः।

ध्यानेन कथं तन्मयो भवेदिति श्रुतिदृष्टान्तेन दर्शयति **मुण्डकोपनिषदि**—

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते।
अप्रमत्तेन बोद्धव्यं शरवत्तन्मयो भवेत्।।

तथाहि--साधकः प्रणव-धनुषि आत्मानं शरं नियोज्यैकाग्रचित्तेन लक्ष्ये ब्रह्मणि आत्मानं निमज्य शरवतन्मयो भवेदिति समाधिः।

**सौभाग्यलक्ष्म्युपनिषदि--**

सलिले सैन्धवं यद्वत् साम्यं प्राप्नोति योगतः।
तथात्ममनसोरैक्यं समाधिरभिधीयते ॥

जले सैन्धवलवनं मिलित्वा यथा जलेन सह साम्यभावं प्राप्नोति, तथा जीवात्मपरमात्मनोरैक्यमभेदज्ञानं समाधिः कथ्यते।

यदा संक्षीयते प्राणो मानसं च प्रलीयते।
तदा समरसत्वं यत्समाधिरभिधीयते ॥२।१५॥

यदा प्राणायामयोगसाहाय्येन प्राणवायुः सम्यक् क्षीयते, मनोवृत्तिरपि मनसि लीयते, तदा यज्जीवात्मपरमात्मनोः सामरस्यज्ञानं तदेव समाधिः।

यत्समत्वं तयोरत्र जीवात्मपरमात्मनोः।
समस्तनष्टसंकल्पः समाधिरभिधीयते ॥२।१३॥

तथाहि--जीवात्मपरमात्मनोर्यत्सामरस्यं तयोश्च तदवस्थायां सर्वव्यापार-निरोधात् सर्वसंकल्पक्षयो भवति। स एव निष्क्रियभावः समाधिरिति।

## देवीपूजा-फलश्रुतिः

**वैकृतिकरहस्ये--**

एवं यः पूजयेद् भक्त्या प्रत्यहं परमेश्वरीम्।
भुक्त्वा भोगं यथाकामं देवीसायुज्यमाप्नुयात् ॥३४॥

तथाहि--एवमुक्तप्रकारेण यः प्रत्यहं भक्तिपूर्वकं परमेश्वरीं पूजयेत्, स कामनानुरूपं भोग्यवस्तुसमूहं भुक्त्वा देव्या सहाभिन्नतां नाम मुक्तिं लभते।

यो न पूजयते नित्यं चण्डिकां भक्तवत्सलाम्
भस्मीकृत्यास्य पुण्यानि निर्दहेत्परमेश्वरी ॥३५॥

यो जनो भक्तवत्सलां चण्डिकां देवीं न पूजयते तस्य पुण्यफलानि सर्वाणि परमेश्वरी चण्डिका देवी भस्मसात् कृत्वा नाशयति।

तस्मात् पूजय भूपाल सर्वलोकमहेश्वरीम्।
यथोक्तेन विधानेन चण्डिकां सुखमाप्स्यसि॥३६॥

अतएव हे राजन्! सर्वलोकमहेश्वरीं चण्डिकां देवीं यथोक्तविधानानुसारेण पूजय। तदा परमं सुखं प्राप्स्यसि।

तदुक्तं **भगवद्गीतायाम्**—

तमेव शरणं गच्छ सर्वभावेन भारत।
तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्॥(१८।६२)

हे भारत! त्वं सर्वप्रकारेण हृदयस्थितपरमेश्वरस्य शरणं गच्छ। तत्कृपया परमां शान्तिं नित्यधाम प्राप्स्यसीति।

इति कामरूपान्तर्वर्ति—श्रीमदुग्रतारामहापीठाध्यक्षश्रीचक्रेश्वर-
भट्टाचार्यसंकलिते-**शाक्तदर्शने** उपासनानामकः
पञ्चमः परिच्छेदः।

# षष्ठः परिच्छेदः

## विश्वरूपरहस्यम्

उक्तञ्च मूर्तिरहस्ये--

या रक्तदन्तिका नाम देवी प्रोक्ता मयानघ।
तस्याः स्वरूपं वक्ष्यामि शृणु सर्वभयापहम् ॥५॥

हे निष्पाप सुरथ! मया या रक्तदन्तिका नाम्नी देवी पूर्वमुक्ता, तस्याः सर्वभयनाशकं स्वरूपं कथयिष्यामि, श्रूयताम्।

वैकृतिकरहस्ये भगवत्याश्चण्डिकाया दशावतारमध्ये महाकाली-महालक्ष्मी-महासरस्वतीनां च स्वरूपं पूजाविधिश्च यथावदुक्तः। मूर्तिरहस्ये परवर्तिनो मूर्तिसप्तकस्योपास्ति संक्षिप्याह (गुप्तवती)।



रक्ताम्बरा रक्तवर्णा रक्तसर्वाङ्गभूषणा।
रक्तायुधा रक्तनेत्रा रक्तकेशातिभीषणा ॥५॥

सा रक्तदन्तिका देवी रक्तवस्त्रपरिधाना रक्तवर्णा रक्तरञ्जितालङ्कार-भूषिता रक्तनेत्रा रक्तरञ्जितास्त्रधारिणी रक्तकेशातिभयङ्करवेशा।

रक्तदन्तिकाया वैप्रचित्तासुरगणैः सह संग्रामे तस्याः सर्वाङ्गमसुररक्त-रञ्जितमभवत्। एवमसुरगणभक्षणेन तस्या दन्ता रसना च रक्तवर्णा बभूवुः। तदुक्तं चण्डीमन्त्रे,--

पुनरप्यतिरौद्रेण रूपेण पृथिवीतले।
अवतीर्य हनिष्यामि वैप्रचित्तांस्तु दानवान् ॥
भक्षयन्त्याश्च तानुग्रान् वैप्रचित्तान् महासुरान्।
रक्तदन्ता भविष्यन्ति दाड़िमीकुसुमोपमाः ॥
ततो मां देवताः स्वर्गे मर्त्यलोके च मानवाः।
स्तुवन्तो व्याहरिष्यन्ति सततं रक्तदन्तिकाम् ॥

तथाहि—पुनर्भयङ्करमूर्त्या पृथिव्यामवतीर्णा भूत्वा विप्रचित्तवंशीयमहासुरान् भक्षयन्ती यदा चरिष्यामि, तदा मे दन्ता दाड़िमीकुसुमसदृशा रक्तवर्णा भविष्यन्ति। ततः स्वर्गे देवगणा मर्त्ये च मानवा मां स्तुवन्तो रक्तदन्तिकामिति व्याहरिष्यन्ति।

"अतिभीषणा" भगवती रक्तदन्तिका भीमा भयङ्करी च; "भयं भयानां, भीषणं भीषणानाम्" इति श्रुतिर्ब्रह्मशक्तेरतिभीषणत्वमकथयत्।

"महद्भयं वज्रमुद्यतं य एतद् विदुरमृतास्ते भवन्ति।"
(**कठोपनिषद्** ६।२)

यस्तामुद्यतवज्रवन्महाभयानकां वेत्ति, सोऽमृतत्वमश्नुते।

भयादस्या अग्निस्तपति भयात्तपति सूर्यः।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः॥(६।३)

देव्या भयादग्निर्ज्वलति, सूर्य उत्तपति, इन्द्रो वायुः पञ्चमो मृत्युश्च प्रधावति, स्वस्वकार्यं सम्पादयति। "भगवती सौम्या घोरा च" अर्थात् सुप्रसन्ना भयङ्करी च। उमा, गौरी, श्री, ललिता चेति देव्याः सौम्यमूर्तयः। रक्तदन्तिका, चामुण्डा, कालरात्रिश्छिन्नमस्ता चेति महाघोरमूर्तयः। श्रीचण्डीस्तवे शक्रादय एवं प्रार्थितवन्तः—

सौम्यानि यानि रूपाणि त्रैलोक्ये विचरन्ति ते।
यानि चात्यन्तघोराणि तैरक्षास्मांस्तथा भुवम्॥(४।२६)

हे जगन्मातः! त्रिभूवने तव सौम्या, अतीव घोराश्च या मूर्तयो विचरन्ति, ताभिरस्मान् पृथिवीञ्च रक्ष। कान् प्रति सौम्या, कान् वा प्रति घोरा?

तदुक्तमागमशास्त्रे,—

अनुगृह्णाति यान् देवी तेषां सौमी जगन्मयी।
नानुगृह्णाति यान् देवी तेषां घोरा जगन्मयी॥

शरणागतभक्तानां समीपे भगवती तदीयां सौम्यां मूर्तिं प्रकाशयति। तथा दुष्टदानवानां समीपे भयङ्करीं मूर्तिं धारयति। अर्थाद्देवी सौम्यमूर्त्या भक्तान् पालयति, घोरमूर्त्या चासुरान् विनाशयतीति।

वसुधेव विशाला सा सुमेरुयुगलस्तनी ।
दीर्घौ लम्बावतिस्थूलौ तावतीव मनोहरौ ॥७॥
कर्कशावतिकान्तौ तौ सर्वानन्दपयोनिधी ।
भक्तान् संपाययेद्देवी सर्वकामदुघौ स्तनौ ॥८॥

तथाहि,—सा रक्तदन्तिका देवी पृथिवीवद्विशालाकृतिः, तस्याः स्तन-युगलं सुमेरुतुल्यसमुन्नतं दीर्घं दोलायमानमतिस्थूलं कठिनं कमनीयञ्च सर्वानन्दसागरस्वरूपम्। देवीभक्तजनान् सा, सर्वकामनापूरकं स्तनयुगलं सम्यक् पाययति।

"वसुधेव विशाला" इत्यनेन देव्या विश्वव्यापिनी विराड् विश्वरूपमूर्तिरुपलक्षिता। देवानामैकान्तिकप्रार्थनायां तेषां समक्षे भगवती स्वस्या विश्वरूपमूर्तिं प्रकटयति। **देवीभागवतस्य** सप्तमस्कन्धे त्रयस्त्रिंशाध्याये देवीगीतायामुक्तम्,—

अथ देवमतं ज्ञात्वा भक्तकामदुघा शिवा ।
अदर्शयन्निजं रूपं भक्तकाम-प्रपूरणी ॥२२॥
अपश्यंस्ते महादेव्या विराड्रूपं परात्परम् ।
द्यौमस्तकं भवेद्यस्य चन्द्रसूर्यौ च चक्षुषी ॥२३॥

अनन्तरं भक्तवाञ्छापूरणकारिणी भक्तानां कामधेनुस्वरूपिणी कल्याणमयी देवी स्वीयं रूपं दर्शयामास। ते देवा अपि महादेव्याः परात्परं विराजं विश्वरूपं ददृशुः। द्युलोकं सत्यलोकं वा तस्या विराड्रूपिण्या मस्तकं, सूर्याचन्द्रमसौ च द्वे चक्षुषी।

दिशः श्रोत्रे वचो वेदा प्राणा वायुः प्रकीर्तितः ।
विश्वं हृदयमित्याहुः पृथिवी जघनं स्मृतम् ॥२४॥
नभस्तलं नाभिसरो ज्योतिश्चक्रमुरःस्थलम् ।
महर्लोकस्तु ग्रीवा स्याज्जनलोको मुखं स्मृतम् ॥२५॥

दश दिशस्तन्महादेव्याः कर्णद्वयं चतुर्वेदा वाक्यं वायुस्तस्याः प्राणा विश्वं हृदयं पृथिवी च तस्या जघनम्। नभस्तलम् अर्थाद् भुवर्लोकं तस्या नाभिसरोवरः, ज्योतिष्कमण्डलं वक्षःस्थलं, महर्लोकं ग्रीवादेशः, जनलोकं तस्या मुखमण्डलम्।

तपोलोकवराटिस्तु सत्यलोकादधः स्थितः।
इन्द्रादयो बाहवः स्युः शब्दः श्रोत्रं महेशितुः॥२६॥
नासत्यदस्रौ नासे स्तो गन्धो घ्राणं स्मृतो बुधैः।
मुखमग्निः समाख्यातो दिवा रात्रिश्च पक्ष्मणी॥२७॥

सत्यलोकादधःस्थितस्तपोलोकस्तस्या विराड्रूपिण्या महादेव्या ललाटफलकम्, इन्द्रादिदेवा बाहवः, शब्दो महेश्वरीदेव्याः श्रवणेन्द्रियम्, अश्विनीकुमारौ नासापुटौ, गन्धो घ्राणेन्द्रियम्, मुखमाभ्यन्तरमग्निः, दिवा रात्रिश्च तस्या नेत्रनिमेषादिरूपेण प्रकाशते।

ब्रह्म स्थानं भ्रूविजृम्भोऽप्यापस्तालुः प्रकीर्तिताः।
रसो जिह्वा समाख्याता यमो दंष्ट्राः प्रकीर्तिताः॥२८॥
दन्ताः स्नेहकला यस्या हासो माया प्रकीर्तिता।
सर्गस्त्वपाङ्गमोक्षः स्याद् व्रीड़ोद्र्वोष्ठो महेशितुः॥२९॥

ब्रह्मस्थानं महादेव्या भ्रूविकाशस्वरूपम्, आपस्तालुस्तद्गतरसो रसना, यमराजस्तस्य दंष्ट्रा। स्नेहविलास एव महादेव्या विराट्स्वरूपस्य दन्तसमूहः, माया हास्यं, ब्रह्माण्डसृष्टिः कटाक्षः, लज्जा महेश्वरीदेव्या ऊर्ध्वोष्ठो भवति।

लोभः स्यादधरोष्ठोऽस्याधर्मभागस्तु पृष्ठभूः।
प्रजापतिश्च मेढ्ं स्याद् यः स्रष्टा जगतीतले॥३०॥
कुक्षिः समुद्रा गिरयोऽस्थीनि देव्या महेशितुः।
नद्यो नाड्यः समाख्याता वृक्षा केशाः प्रकीर्तिताः॥३१॥

लोभश्चास्य विराड्रूपस्याधरः, अधर्मः पृष्ठभागः। यो जगन्मण्डलस्य सृष्ठिकर्ता स एव तस्या मेढ्रदेशः। समुद्रस्तस्याः कुक्षिः, पर्वतसमूहो महेश्वर्या अस्थीनि। नद्यस्तस्या नाड्यः, वृक्षाश्च महादेव्याः केशरूपाः प्रकाशन्ते।

कौमार-यौवन-जरा वयोऽस्या गतिरुत्तमा।
बलाहकास्तु केशाः स्युः सन्ध्ये ते वाससी विभोः॥३२॥
राजन् श्रीजगदम्बायाश्चन्द्रमास्तु मनः स्मृतम्।
विज्ञानशक्तिस्तु हरी रुद्रोऽन्तःकरणं स्मृतम्॥३३॥
अश्वादिजातयः सर्वाः श्रोणिदेशे स्थिता विभोः।
अतलादिमहालोकाः कट्यधोभागतां गताः॥३४॥

हे राजन्! कौमारं यौवनं जरा च विराट्स्वरूपस्योत्तमा गतिः। मेघाः केशाः, उभे ते प्रसिद्धे सायंप्रातर्रूपिणी सन्ध्ये तस्य वाससी। चन्द्रमा जगदम्बाया मनः, हरिस्तस्या विज्ञानशक्तिः। रुद्रस्तस्या अन्तःकरणम्, अश्वादिजन्तवः सर्वव्यापिन्या महादेव्या नितम्बदेशः। अतलादिपातालपर्यन्तं समस्तलोकास्तस्या कट्यधोदेशस्याधोभागे विराजिताः।

एतादृशं महारूपं ददृशुः सुरपुङ्गवाः।
ज्वालामालासहस्राढ्यं लेलिहानञ्च जिह्वया॥३५॥
दंष्ट्राकटकटारावं वमन्तं वह्निमक्षिभिः।
नानायुधधरं वीरं ब्रह्मक्षत्रौदनञ्च यत्॥३६॥
सहस्रशीर्षनयनं सहस्रचरणं तथा।
कोटिसूर्यप्रतीकाशं विद्युत्कोटिसमप्रभम्॥४७॥

तथाहि—देवगणाः जगदम्बाया एतादृशीं विराटमूर्तिं ददृशुः। तस्यास्तन्मूर्तितः सहस्रशो निर्गच्छन्मूर्तिमदग्निशिखाविशिष्टाया लेलिहानजिह्वाभिः समग्रजगदास्वादनं कुर्वन्त्या भीषणदंष्ट्राकटकटाशब्दमभूदक्षिसमूहाश्च वह्न्युद्गीरणमकार्षुः। तन्मूर्तिसमूहाश्च नानाविधान्यायुधानि धारयन्तोऽतीवबलसम्पन्ना ब्राह्मणक्षत्रियादयः सञ्जाताः। तस्य विश्वरूपस्य सहस्रं शिरांसि, सहस्रं नयनानि, सहस्रं च चरणानि जातानि, कोटिसूर्यप्रतीकाशञ्च कोटिविद्युत्समप्रभं च तद्रूपमभूत्।

भयङ्करं महाघोरं हृदक्ष्णोस्त्राणकारणम्।
ददृशुस्ते सुराः सर्वे हाहाकारञ्च चक्रिरे॥३८॥
विकम्पमानहृदया मूर्च्छामापुर्दुरत्ययाम्।
स्मरणञ्च गतं तेषां जगदम्बेयमित्यपि॥३९॥

तथाहि—महादेव्यास्तद्भयङ्करीं नेत्रमनसोस्त्रासजनकां महाघोरतरां विराड्मूर्तिमवलोक्य सर्वे देवा भीताः सन्तो हाहाकारमकुर्वन्त। परन्तु विकम्पितहृदयास्ते दुरपनेयमूर्च्छाक्रान्ताश्च सञ्जाताः। अस्माकं पालयित्र्येषा जगदम्बेति ज्ञानमपि तेषां विनष्टमभूत्। "सर्वानन्दपयोनिधि"जगन्मातुः स्तनयुगलं सर्वप्रकारानन्दसमुद्रस्वरूपम्। अस्याः स्तनयुगलविगलितक्षीरधारापानरतः साधकः परमानन्दामृतसमुद्रे निमग्नो भवति।

"सर्वकामदुघौ स्तनौ"—भगवत्याः स्तनयुगलं मातृभक्तसन्तानस्य सर्वाभीष्टप्रपूरणे कामधेनुस्वरूपम्, यः साधको जगन्मातुः स्तन्यपाने सौभाग्यवान् स एव धर्मार्थकाममोक्षाणां यद्यदिच्छति तत्तदाप्नोति।

## जगन्मातुः स्तनयुगलम्

श्रीमच्छङ्कराचार्यः "सौन्दर्यलहरी"स्तोत्रे चिन्मयविग्रहधारिण्या जगदम्बिकाया अङ्गप्रत्यङ्गानामनुपमसौन्दर्यवर्णनच्छलेन मातृमहिमकीर्तनमकरोत्—

समं देवि स्कन्दद्विपवदनपीतं स्तनयुगम् ।
तदेव नः खेदं हरतु सततं प्रस्नुतमुखम् ।।७२।।

हे जननि! तव स्तनयुगलतः सततं स्तन्यं क्षरति; अपि च पुरा गजाननः षड़ाननञ्च त्वदीयस्तन्यपानमकरोत्। सर्वान् प्रत्युदारं तव स्तनयुगलमस्माकं संसारक्लेशं हरतु।

"सततं प्रस्नुतमुखम्" इत्यस्य टीकायामच्युतानन्देन प्रोक्तम्—"अविरतक्षरन्मुखम् जगन्मातृत्वात् सर्वेषां भरणाय" इति भावः, यतः सा जगन्माता। अत एव सर्वजीवपोषणार्थं तस्याः स्तनयुगलममृतरसपूर्णम्। ये साधकास्तदमृतरसं पिवन्ति ते खलु मातृक्रोड़स्थितचिरशिशुत्वं लभन्ते। तदुक्तं **सौन्दर्यलहरीस्तोत्रे** शङ्कराचार्येण—

अमृते वक्षोजावमृतरसमाणिक्यकलसौ,
न सन्देहस्पन्दो नगपतिपताके मनसि नः।
पिवन्तौ तौ यस्मादविदितवधूसङ्गमरसौ,
कुमारावद्यापि द्विरदवदनक्रौञ्चदलनौ ।।

हे नगपतिपताके हिमालयकन्यके! मनसि ज्ञातमस्माभिर्नात्रसन्देहो यत् तव स्तनयुगलममृतरसपूर्णमाणिक्यमयकलसस्वरूपम्, यतस्तौ गणेशकार्तिकभ्रातरौ दारपरिग्रहमकुर्वन्तौ चिरकुमारावद्यापि तदीयस्तन्यपानरतौ वर्तेते।

गणेशः कार्तिकेयश्च भगवत्याः स्तनयुगस्यामृतरसं पीत्वा चिरशिशुत्वं लब्धवन्तौ। स्वभावसुलभयौवनेऽपि तयोरेकतरोऽपि दारपरिग्रहं नाकरोद् यतस्तौ मातृवक्षाश्रितस्तनन्धयशिशुवद् यावज्जीवं स्थातुमभिलषितवन्तौ। एवमेव जगन्मातुर्भक्तसाधकास्तदन्तिके चिरशिशुत्वं प्रार्थयन्ते। "भक्तान् संपाययेद्देवी"—भगवती भक्तसन्तानगणांस्तस्या ज्ञानामृतवर्षिणीं सर्वानन्दमयीं सर्वाभीष्टफलप्रदां स्तन्यधारां पाययति; नेदं कल्पनामात्रम्। "द्राविड़शिशुं"-शङ्कराचार्यं जगन्माता स्वस्तन्यं पाययित्वा श्रेष्ठं कवित्वं तस्मै प्रादात्। तदुक्तं **सौन्दर्यलहरीस्तोत्रे**—

तव स्तन्यं मन्ये धरणिधरकन्ये हृदयतः,
पयःपारावारः परिहरति सारस्वत इव।
दयावत्या दत्तं द्रविड़शिशुरास्वाद्य तव यत्,
कवीनां प्रौढानामजनि कमनीयः कवयिता ॥७६॥

हे धरणिधरकन्ये गिरिसुते। तव हृदयामृतसिन्धोरिव सारस्वतदिव्य-ज्ञानमयस्तन्यधारा प्रवहति, इति सत्यम्। यस्माद् "द्रविड़देशीयशिशुः शङ्कराचार्यो" दयावत्या जगदम्बायाः कृपाप्रदत्तस्तन्यपानेन कवित्वं लब्ध्वा, प्रौढानामपि कवीनां मध्ये श्रेष्ठः कविर्बभूव।

**जगदम्बायाः स्तन्यदानम्**

तथाच—टीकाकारोऽच्युतानन्दो गुरुपरम्परया श्रुतां निम्नोक्तघटनामेवम्प्रकारेण वर्णयति। श्रीमच्छङ्कराचार्यस्य पिता द्रविड़देशीयो दरिद्रो ब्राह्मण आसीत्। बहुवयःकालपर्यन्तमपुत्रकत्वेन शङ्करमाराध्य शिवकरुणया पुत्रं तमवाप। तत आनन्देन स "शङ्कर" इति पुत्रस्य नामकरणमकरोत्। शङ्करस्य षष्ठे मासि वयसि एकदा तस्य पिता भिक्षार्थं जनपदान्तरमगात्। जननी च शिशुं प्राङ्गणे खट्टोपरि स्वापयित्वा शाकाहरणार्थं स्थानान्तरं गतवती। तदा बालकं प्रति दयापरतन्त्रा सती तमुत्सङ्गे कृत्वा स्तन्यं पाययति स्म। तत्स्तन्यं पीत्वा स बालकस्तत्क्षणादेव महाकविरभूत्।

अनन्तरं देव्यामन्तर्भूतायां सत्यां कश्चिन्नग्नः सन्न्यासी भिक्षार्थं तद्गृहमागत्य भिक्षामयाचत। तत्काले च गृहे न कोऽप्यन्यो जनो वर्तते स्म। अतो द्रविड़शिशुः शङ्कराचार्यः सन्न्यासिनो भिक्षाप्रार्थनां श्रुत्वा स्वयमेव निम्नोक्तश्लोकेन प्रत्युत्तरमदात्।

एका माता शाकाहर्ता
अत्र क्षपणक दश शाकार्ताः।
यत्र क्षपणक दश शाकाशाः
तत्र क्षपणक शाकाशा का?

हे क्षपणक! मम जननी एकाकिनी शाकाहरार्थमगमत्। परन्त्वत्र गृहे दशसंख्यका जनाः शाकार्थं कातराः सञ्जाताः। हे क्षपणक! यत्र दश जनाः शाकार्थम् आशां पोषयन्ति, तत्र पुनरेकस्य का शाकाशा? न काऽपीति भावः।

एवमाधुनिकयुगेऽपि दृश्यते,—निरक्षरप्रायो गदाधरचट्टोपाध्यायो जगन्मातुराराधनया मातृक्रोड़स्थितदिव्यशिशुत्वमवाप। परन्तु जगदम्बायाः स्नेहविगलितसारस्वतस्तन्यधारां पीत्वा महाकवित्वमृषित्वं चासावलभत। तेन च स श्रीरामकृष्णपरमहंसदेवरूपेण स्वमुखविनिर्गतवेदवेदान्तरहस्यपूर्णकथामृतेन शतशस्तप्तजीवान् सञ्जीवितानकरोत्।

खड्गं पात्रञ्च मुसलं लाङ्गलञ्च बिभर्ति सा।
आख्याता रक्तचामुण्डा देवी योगेश्वरीति च॥६॥

सा रक्तदन्तिका देवी भुजचतुष्टये खड्गं पानपात्रम् मुसलं लाङ्गलञ्च धारयति। देवी रक्तदन्तिका रक्तचामुण्डा योगेश्वरीति च कथ्यते।

(क) "**रक्तचामुण्डा**" **देवी** :— "रुरु" नामकमहाबलदैत्यनिधनानन्तरं स्वयं रुद्रदेवेन भगवत्याश्चामुण्डायाः स्वरूपतत्त्वं विवृत्य स्तवं कृतम्। तदुक्तं **वराहपुराणे** ९६तमाध्याये,—

रुद्र उवाच—

जयस्व देवी चामुण्डे जय भूतनिवारिणी।
जय सर्वगते देवि कालरात्रि नमोऽस्तु ते॥१॥

हे देवि! चामुण्डे! तव जयोऽस्तु, त्वं सर्वभूतसंहारकारिणी, जगति सर्ववस्तूनाम् अन्तः प्रविष्टा च, हे कालरात्रिदेवि! नमस्ते।

विश्वमूर्ते शुभे शुद्धे विरूपाक्षि त्रिलोचने।
भीमरूपे शिवे वेद्ये महामाये महोदये॥२॥

त्वं विश्वरूपिणी मङ्गलमयी शुद्धा भीमनेत्रा सूर्यचन्द्राग्नित्रिनयनविशिष्टा भयङ्कररूपत्वेऽपि कल्याणमयी, त्वमेव ज्ञातव्यतत्त्वस्वरूपा महामाया महोदया च।

मनोजवे जये जृम्भे भीमाक्षे क्षुधितक्षये।
महामारि विचित्राङ्गे जय नृत्यप्रिये शुभे॥३॥

त्वमग्निजिह्वारूपिणी मनोजवा, जयस्वरूपिणी, निद्रावेशरूपा, तव चक्षुषी भीतिप्रदे, त्वं क्षुधितानां क्षोभं नाशयसि। त्वं महामारिरूपिणी, विचित्रावयवयुक्ता, नृत्यप्रिया, हे मङ्गलमयि! तव जयोऽस्तु।

विकराले महाकालि कालिके पापहारिणी।
पाशस्ते दण्डहस्ते भीमरूपे भयानके ॥४॥

हे महाकालि! हे कालिके! त्वमतीव भयङ्कररूपिणी, तवैतन्मूर्तिध्यायिनां साधकानां सर्वपापं हरसि। त्वं पाशं दण्डञ्च धारयसि, अतो भीमरूपा भयङ्करी च।

चामुण्डे ज्वलमानास्ये तीक्ष्णदंष्ट्रे महाबले।
शतयानस्थिते देवि प्रेतासनगते शिवे ॥५॥

हे चामुण्डे! त्वं देदीप्यमानाग्निवन्मुखविशिष्टा, तव दन्तसमूहः सुतीक्ष्णः, त्वं महाबलशलिनी। हे देवि त्वं शतयानविशिष्टा, प्रेतासनगता मङ्गलमयी च।

भीमाक्षि भीषणे देवि सर्वभूतभयङ्करि।
कराले विकराले च महाकाले करालिनि॥
काली कराली विक्रान्ता कालरात्रि नमोऽस्तु ते ॥६॥

हे देवि! त्वं भीमनेत्रा भीषणा सर्वभूतानां भीतिप्रदा च। त्वं करालवदना विकराला च महाकालस्वरूपा करालिनी। त्वञ्चाग्निजिह्वारूपिणी काली कराली च। हे कारलात्रि त्वं महाविक्रमशालिनी, त्वां नमामः।

(ख) "**योगेश्वरी**"--योगेश्वरी चामुण्डाया मूर्तिभेदः। **मत्स्यपुराणे** योगेश्वरीदेव्या मूर्तिरेवं वर्णिता--

तीक्ष्णखड्गधरां तद्वद् वक्ष्ये योगेश्वरीमिमाम्।
दीर्घजिह्वामूर्ध्वकेशीम् अस्थिखण्डैश्च मण्डिताम्॥
दंष्ट्राकरालवदनां कुर्याच्चैव कृशोदरीम्।
कपालमालिनीं देवीं मुण्डमालाविभूषिताम्॥
कपालं वामहस्ते तु मांसशोणितपूरितम्।
मस्तिष्काक्ताञ्च बिभ्राणां शक्तिकां दक्षिणे करे॥
गृध्रस्था वायसस्था वा निर्मांसा विनतोदरी।
करालवदना तद्वत् कर्तव्या सा त्रिलोचना॥
चामुण्डा बद्धघण्टा वा द्वीपिचर्मधरा शुभा।
सुरक्तपुष्पाभरणा वर्धिनी ध्वजसंयुता॥

अधुना तीक्ष्णखड्गधारिण्या योगेश्वरीदेव्याः स्वरूपं यथावद्वर्णयति,— एषा देवी सुदीर्घरक्ताक्तरसनाविशिष्टा, ऊर्ध्वकेशी, अस्थ्यलङ्कारभूषिता, दंष्ट्राकरालवदना, कृशोदरी, कपालमालिनी, मुण्डमालाधारिणी च। सा वामहस्ते मुण्डं मांसशोणितपूर्णं कपालपात्रं च धारयति। दक्षिणहस्ते शक्तिं धारयति। योगेश्वरी देवी गृध्रवाहनी काकवाहनी वा। अस्याः शरीरं मांसहीनक्षीणकायत्वेन पृष्ठलग्नोदरा, करालवदना, त्रिनयना। सा यदा चामुण्डामूर्तिं धारयति, तदा व्याघ्रचर्मपरिधाना घण्टावादनतत्परा। यदा च कालिकामूर्तिपरिग्रहं करोति, तदा सा देवी दिगम्बरा गर्दभवाहिनी कपालिनी, रक्तपुष्पाभरणभूषिता, सम्मार्जनीयुक्तध्वजविशिष्टा भवतीति। एषा काली शीतलेति च कीर्त्यते। तदुक्तं **स्कन्दपुराणे**,—

"नमामि शीतलां देवीं रासभस्थां दिगम्बरीम्।
मार्जनीकलसोपेतां सूर्पालंकृतमस्तकाम्॥" इति

### चामुण्डोपासकसम्प्रदायाः

प्राचीनकाले कापालिककालामुखाघोरिप्रभृतय उग्रवीरसाधकसम्प्रदाया आसन् ये तावदुत्कटव्रतपालनेन नानाविधभीषणानुष्ठानसामग्र्या करालचामुण्डोपासनामकुर्वन्त, इदानीन्तने काले ते सर्वे सम्प्रदाया लुप्तप्राया अप्येकदा भारतवर्षे तेषामतीव प्रभाव आसीत्। महाकविभवभूतिविरचित"मालती माधव"-नाटकस्य पञ्चमाङ्केऽघोरघण्टनाम्नः कापालिकस्य विवरणं दृश्यते।

ख्रीष्टीयाष्टमशतिकायाः प्रथमभागे विरचितमिदं "मालतीमाधव" नाटकम्। पद्मावत्यामथवा वर्तमानोज्जयिनीनगरोपकण्ठे महाश्मशाने करालायाश्चामुण्डाया मन्दिरमासीत्। तन्मन्दिरे चामुण्डादेवी नरबलिभिः पूजिताऽभवत्। कापालिकोऽघोरघण्टो मन्त्रसिद्धये स्वशिष्यायाः कपालकुण्डलायाः साहाय्येन चामुण्डाग्रे बलिदानार्थं सुन्दरीं मालतीमहरत्। रात्रौ महानिशायां च देव्यग्रे बलिमादाय प्रार्थयत्, "चामुण्डे भगवति! मन्त्रसाधनादावुद्दिष्टामुपनिहितां भजस्व पूजाम्।" इत्युक्त्वा यदाऽघोरघण्टो बलिरूपाया मालत्या शिरश्छेत्तुं खड्गमुत्तोलयति स्म, तदा सहसा माधव आगत्य तदुत्तोलितखड्गेन कापालिकं हत्वा तां मालतीं तस्मादुद्धारयामास।

ख्रीष्टीयदशमशतिकायां यमुनाचार्यविरचिते "आगमप्रामाण्य"ग्रन्थे कापालिकमतस्य संक्षिप्तवर्णना वर्तते,—

कर्णिकारूचकञ्चैव कुण्डलञ्च शिखामणिम्।
भस्म यज्ञोपवीतञ्च मुद्राषट्कं प्रचक्षते।।
कपालमथ खट्वाङ्गमुपमुद्रे प्रकीर्तिते।
आभिर्मुद्रितदेहस्तु न भूय इह जायते।।

एतन्मतेन षन्मुद्राः, द्वे उपमुद्रे। आसां धारणे च साधकस्य मुक्तिर्भवति। यथा कर्णिका रूचकं कुण्डलौ शिरोमणिः भस्म यज्ञोपवीतञ्चेति। कपाल-खट्वाङ्गे द्वे उपमुद्रे। एतत्प्रसङ्गेन बह्वीनां गुप्तक्रियाणां विधानमस्ति।

कालामुखसम्प्रदायानां कपालपात्रे भोजनं शवचिताभस्मना स्नानं, तत्प्राशनञ्च, तथा लगुड़धारणं सुराकुम्भस्थापनमित्याद्यनेकप्रकारान्यनुष्ठानानि प्रचलितान्यासन्। एतेषामनुष्ठानादिकर्म्म जातं सुगुप्तत्वाल्लोकप्रियताभावाच्च क्रमशो नष्टप्रायं बभूव।

ख्रीष्टीयैकादशशताब्द्यां कृष्णमिश्रविरचित "प्रबोधचन्द्रोदय"नाटकस्य तृतीयाङ्के कापालिकानां विस्तृतविवरणं दृश्यते। यथा—

मस्तिष्कवसाभिघारितमहामांसाहुतिं जुह्वतां
वह्नौ ब्रह्मकपालकल्पितसुरापानेन नः पारणा।
सद्यः कृत्तकठोरकण्ठविगलत्कीलालधारोल्वणै-
रर्च्यो नः पुरुषोपचारैर्बलिभिर्देवो महाभैरवः।।

वयं तावन्नरमुण्डकपालपात्रेऽभिषिक्तनरमांसेन वह्नौ जुहुमः। ब्राह्मण-कपालपात्रस्थितमद्यपानेन पारणां कुर्महे। सद्यःकृत्तकठोरकण्ठनिःसृतमनुष्य-रुधिरेण तर्पणं कुर्मः, नरबलिना च महाभैरवमर्चयामः।

ख्रीष्टीयपञ्चदशशताब्द्यामानन्दगिरिणा कृते "शङ्करदिग्विजयनाटके" कापालिकसाधकस्य वक्ष्यमाणरूपं चित्रमङ्कितम्—

चितिभस्मपूर्णकलेवरो नरकपालावृतगलो भालदेशरचितकज्जलरेखः सकलकेशरचितजटाधारिव्याघ्रचर्मरचितकटिसूत्रकौपीनः कपालशोभितवामकरः सहनादघण्टाधृतदक्षिणकरः "शम्भो!" "भैरव!" "कालीश!" इति मुहुर्मुहुर्जपन्—इत्येवंरूपवेशधारी कापालिकः।

"चामुण्डामन्दिरम्"—भगवती चामुण्डादेवी महीशूरराज्याधिष्ठातृदेवी-रूपेण तत्र पूजिताऽभवत्। नगरोपकण्ठे पर्वतोपरि देव्याश्चामुण्डाया विशालं मन्दिरमवस्थितम्। चामुण्डादेवी तत्र "भेरुण्डे"ति नाम्ना च कीर्त्यते।

अनया व्याप्तमखिलं जगत्स्थावरजङ्गमम् ।
इमां यः पूजयेद्भक्त्या स व्याप्नोति चराचरम् ॥
भुक्त्वा भोगं यथाकामं देवीसायुज्यमाप्नुयात् ॥१०॥

तथाहि—अनया रक्तदन्तिकया देव्या स्थावरजङ्गमं सर्वं जगत् परिव्याप्तम् । य इमां रक्तदन्तिकां देवीं भक्तिपूर्वकं पूजयेत्, स सर्वं चराचरं व्याप्य तिष्ठेत् यथाभिलषितञ्च भोगं भुक्त्वा देव्या सहाभिन्नताप्राप्तो भवेत् ।

"अनया व्याप्तं स्थावरजङ्गमम्"—एतेन देव्याः सर्वव्यापित्वं सर्वात्मकता च सूचिता ।

"भूतेषु सततं तस्यै व्याप्तिदेव्यै नमोनमः ।" (चण्डी ५।७७)

देवीभागवतोक्त-देवीगीतायां हिमालयं प्रति देवीवाक्यम्—

मयि सर्वमिदं प्रोतमोतञ्च धरणीधर ।
ईश्वरोऽहञ्च सूत्रात्मा विराडात्माहमस्मि च ॥१२॥
ब्रह्माहं विष्णुरुद्रौ च गौरी ब्राह्मी च वैष्णवी ॥१३॥
सूर्योऽहं तारका चाहं तारकेशस्तथास्म्यहम् ॥
पशुपक्षिस्वरूपोऽहं चाण्डालोऽहञ्च तस्करः ॥१४॥
व्याधोऽहं क्रूरकर्माहं सत्कर्माहं महाजनः ।
स्त्रीपुंनपुंसकाकारोऽप्यहमेव न संशयः ॥१५॥
यच्च किञ्चित्क्वचिद्वस्तु दृश्यते श्रूयतेऽपि वा ।
अन्तर्वहिश्च तत्सर्वं व्याप्याहं सर्वदा स्थिता ॥१६॥

(७।३३ अः)

हे हिमालय ! अखिलमिदं जगद् ओतःप्रोतभावेन मय्येवावतिष्ठते । अतोऽहमेव कारणदेहाभिमानीश्वरः, लिङ्गदेहाभिमानी सूत्रात्मा, स्थूलदेहाभिमानी विराड्, हिरण्यगर्भश्च । अहमेव ब्रह्मा विष्णू रुद्रश्च तथा ब्राह्मी वैष्णवी रौद्री शक्तिश्च । अहमेव सूर्यश्चन्द्रस्तारका च, पशुः पक्षी चण्डालस्तस्कररूपिणी च । क्रूरकर्मा व्याधः सत्कर्मा महाजनश्चाहमेव; अहमेव स्त्री पुरुषो नपुंसकश्चेति न कोऽपि सन्देहः । दृष्टे वा श्रुते वा यत्र कुत्रापि देशे वा वस्तुषु चाहमेव सर्वमन्तर्वहिश्च सर्वदा व्याप्नोमि ।

"सर्वात्मस्वरूपिणी"--देवीगीतायां सर्वे देवाः सर्वात्मस्वरूपिणीं भगवतीं स्तुवन्ति, यथा--

ॐ नमस्ते भुवनेशानि नमस्ते प्रणवात्मिके।
सर्ववेदान्तसंसिद्धे नमो ह्रींकारमूर्तये॥
यस्मादग्निः समुत्पन्नो यस्मात्सूर्यश्च चन्द्रमाः।
यस्मादोषधयः सर्वास्तस्यै सर्वात्मने नमः॥
(देवीभागवते ७।३३।४५-५२)

हे प्रणवात्मिके भुवनेश्वरि! नमस्तुभ्यम्। हे देवि सर्ववेदवेदान्तादिशास्त्रैस्त्वमेव सर्वप्रधाना प्रतिपद्यसे। हे ह्रींकाररूपिणि! त्वां नमामः। यतस्त्वत्तः सूर्यचन्द्राग्नय ओषधयश्च सर्वा जायन्ते, तस्मात्त्वां सर्वात्मरूपिणीं देवीं प्रणमामः।

यस्याश्च देवाः सम्भूताः साध्याः पक्षिण एव च।
पशवश्च मनुष्याश्च तस्यै सर्वात्मने नमः॥
प्राणापानौ व्रीहियवौ तपः श्रद्धा ऋतस्तथा।
ब्रह्मचर्यविधिश्चैव यस्यास्तस्यै नमोनमः॥



यस्याः सर्वे देवाः, साध्यगणाः, पशुगणाः पक्षिगणा, मानवगणाश्च समुत्पन्नाः, वयं तां सर्वात्मरूपिणीं देवीं प्रणमामः। यतश्च प्राणापानादिवायवो व्रीहियवादिसर्वशस्यानि, तथा तपस्या, श्रद्धा, यज्ञो ब्रह्मचर्यविधिश्च यावन्तो जायन्ते, तत्सर्वात्मिकां देवीं पुनःपुनर्नमामः।

सप्तप्राणार्चिषो यस्याः समिधः सप्त एव च।
होमाः सप्त तथा लोकास्तस्यै सर्वात्मने नमः॥
यस्याः समुद्रा गिरयः सिन्धवः प्रचरन्ति च।
यस्या ओषधयः सर्वा रसास्तस्यै नमो नमः॥

यतः सप्तप्राणाः सप्तदीप्तयः सप्त होमाः सप्त लोकाश्चोत्पन्नास्तां सर्वात्मिकां नमामः। यस्याश्च सर्वे समुद्राः पर्वताः, सर्वा नद्य ओषधयो रसाश्चोत्पद्यन्ते तां देवीं प्रणमामः।

यस्या यज्ञः समुद्भूतो दीक्षा यूपश्च दक्षिणा।
ऋचो यजूंषि सामानि तस्यै सर्वात्मने नमः॥

नमः पुरस्तात् पृष्ठे च नमस्ते पार्श्वयोर्द्वयोः।
अध ऊर्ध्वं चतुर्द्दिक्षु मातर्भूयो नमो नमः॥

यतो यज्ञो यूपो दक्षिणा दीक्षाश्च, तथा ऋग्यजुःसामानि च जज्ञिरे, तस्यै सर्वात्मरूपिण्यै नमस्कुर्महे। हे मातः! तव पुरतः पृष्ठत उभयपार्श्वतश्च नमामः। पुनरप्यूर्ध्वभागेऽधोभागे चतुर्दिक्षु च वारं वारं प्रणामः।

"स व्याप्नोति चराचरम्"—यः साधक ऐकान्तिकभक्तिपूर्वकं रक्त-दन्तिकां देवीमाराधयति, स आत्मज्ञानं लब्ध्वा स्वीयात्मानं विश्वस्य स्थावरजङ्गमादिसर्ववस्तुषु व्याप्तं पश्यति। अर्थाद् विश्वेन सहैकात्मतामनुभवति एतदामज्ञानं पराभक्तित उदेति। तदुक्तं **देवीभागवते,—**

"सर्वं खल्विदमेवाहं नान्यदस्ति सनातनम्।" इति। जागतिकजड़चेतना-दिसमस्तपदार्था एव "अहम्"।

अर्थाद्—"अहम्" अस्याभिन्नम्, बहिर्नान्यित् किमपि वस्तु सनातनम्। आगमशास्त्रे एतज् ज्ञानस्य नाम "पूर्णाहन्ता"। एतदाकारकं ज्ञानं मोक्षजनकम्। तदुक्तं **कौलोपनिषदि,—**



"मोक्षः सर्वात्मतासिद्धिः"।४।

समस्तप्रपञ्चेन सहात्मनोऽभिन्नतोपलब्धिर्मुक्तिः।

"भुक्त्वा भोगान् यथाकामम्"—अनन्यभक्त्या देव्याराधनं कुर्वता साधकेन धर्मार्थकाममोक्षात्मकश्चतुर्वर्गो लभ्यते। सकामः साधक इह परत्र च यथाभिलषितभोगनामुपभोगान्ते मुक्ति लभते। निष्कामः साधक इह जन्म-न्येव भोगान्ते सायुज्यमुक्ति लभते। भगवतीं चण्डिकामाराध्य सकामः साधको राजा सुरथ इह जन्मन्येव स्वराज्यभोगं कृत्वा जन्मान्तरे मन्वन्तराधिपत्यं लब्ध्वा च मुक्तिमलभत। तथा निष्कामो भक्तः समाधिवैश्य इह जन्मन्येव मोक्षमवाप।

तामुपैहि महाराज शरणं परमेश्वरीम्।
आराधिता सैव नृणां भोगस्वर्गापवर्गदा॥१३।५॥

अनयोर्विशेषविवरणं मत्प्रणीत'**शक्तितत्त्वे**' द्रष्टव्यम्।

## नन्दाविर्भावरहस्यम

ऋषिरुवाच,—

नन्दा भगवती नाम या भविष्यति नन्दजा।
सा स्तुता पूजिता ध्याता वशीकुर्याज्जगत्त्रयम् ॥

मेधा ऋषिः सुरथमुवाच, "भगवती नन्दा नाम या नन्ददुहिताऽऽविर्भूता सा देवी स्तुता ध्याता पूजिता चेत् साधकस्य त्रिभुवनं वशीभूतं भवति।

"नन्दा"—भगवत्या नन्दाया उत्पत्तिविवरणं श्रीश्रीचण्डीमन्त्रे (११।४०।४२) उक्तम्; हरिवंशे च विष्णुपर्वणि द्वितीयाध्याये नन्दादेव्या प्रसङ्गो विद्यते, तृतीये च सुप्रसिद्ध आर्यास्तवो दृश्यते। कंसवधार्थं भूतलेऽव-ः तरणमुपलक्ष्य विष्णुस्तदीयां शक्ति योगनिद्रामवदत्—

या तु सा नन्दगोपस्य दुहिता भुवि विश्रुता।
यशोदा नाम भद्रं ते भार्या गोपकुलोद्वहा ॥
तस्यास्त्वं नवमो गर्भः कुलेऽस्माकं भविष्यसि।
नवम्यामेव सञ्जाता कृष्णपक्षे च वै तिथौ ॥(।३४–३५)

हे देवि! भद्रं ते भवत्विति शेषः। नन्दगोपस्य यशोदानाम्नी गोपकुल-श्रेष्ठा या भार्या वर्तते, त्वमस्मत्कुलेऽस्या नवमगर्भरूपेण कृष्णनवम्यां ति जनिष्यसे।

अहं त्वभिजितो योगे निशाया यौवने स्थिते।
अर्द्धरात्रे करिष्यामि गर्भमोक्षं यथासुखम् ॥३६॥
अष्टमस्य तु मासस्य जातावावां ततः समम्।
प्राप्स्यावो गर्भव्यत्यासं प्राप्ते कंसस्य नाशने ॥३७॥
अहं यशोदां यास्यामि त्वं देवी भज देवकीम्।
आवयोर्गर्भसंयोगे कंसो गच्छतु मूढताम् ॥३८॥

अहमर्द्धरात्रसमयेऽभिजिन्नक्षत्रयोगे यथासुखं गर्भान्निर्गमिष्यामि। कंसस्य विनाश उपस्थितेऽष्टमेऽपि मासि समकाले जातावावां वसुदेवेन परिवर्तितोऽहं यशोदासमीपं यास्यामि, त्वञ्च देवकीसमीपं यास्यसि। आवयोर्गर्भसंयोग-विषये कंसो न किमपि ज्ञास्यते।

ततस्त्वां गृह्य चरणे शिलायां पातयिष्यति।
निरस्यमाना गगने स्थानं प्राप्स्यसि शाश्वतम् ॥३९॥
मच्छविसदृशी कृष्णा सङ्कर्षणसमानना।
बिभ्रती विपुलौ बाहू मम बाहूपमौ दिवि ॥४०॥

ततः कंसस्तव चरणौ धृत्वा शिलातले पातयितुमूर्ध्वं भ्रामयिष्यति त्वञ्चैवमाकाश उत्थाय शाश्वतं स्थानं प्राप्स्यसि। हे देवि! तत्र दिवि तव वदनप्रभा सङ्कर्षणस्येव, देहकान्तिर्ममेव कृष्णवर्णा, बाहू च मम बाहुतुल्यौ विशालौ भविष्यतः।

त्रिशिखं शूलमुद्यम्य खड्गञ्च कनकत्सरुम्।
पात्रीञ्च पूर्णां मधुना पङ्कजञ्च सुनिर्मलम् ॥४१॥
नीलकौशेयसंवीता पीतेनोत्तरवाससा।
शीतरश्मिप्रकाशेन हारेणोरसि राजता ॥४२॥
दिव्यकुण्डलपूर्णाभ्यां श्रवणाभ्यां विभूषिता।
चन्द्रसपत्नभूतेन मुखेन त्वं विराजिता ॥४३॥

त्वं समुद्यतत्रिशूलं स्वर्णमुष्टियुक्तं तीक्ष्णखड्गं सुरापूर्णपात्रं सुनिर्मलं पङ्कजञ्च धृत्वा, नीलकौशेयवस्त्रपरिहिता पीतोत्तरीयेण वाससा शोभिता सुरपथमारूढा सती, तव वक्षःस्थलं चन्द्रकिरणवत्प्रकाशमानहारभूषितं कर्णद्वयं दिव्यकुण्डलालंकृतं, मुखमण्डलञ्च चन्द्रवत् समुज्ज्वलं भविष्यति।

मुकुटेन विचित्रेण केशबन्धेन शोभिता।
भुजङ्गाभैर्भुजैर्भीमैर्भूषयन्ती दिशो दश ॥४४॥
ध्वजेन शिखिबर्हेण उच्छ्रितेन विराजिता।
अङ्गजेन मयूराणामङ्गदेन च भास्वता ॥४५॥
कीर्णा भूतगणैर्घोरैर्मन्नियोगानुवर्तिनी।
कौमारं व्रतमास्थाय त्रिदिवं त्वं गमिष्यसि ॥४६॥

हे देवि! मम निर्देशात्त्वं विचित्रकेशबन्धेन मुकुटेन च शोभिता, भुजङ्गसदृशसुविशालभुजविशिष्टा, दश दिशः प्रकाशयन्ती, शिखिशिखाशोभितसमुच्छ्रितध्वजेन विराजमाना मयूराङ्गजनिर्मिताङ्गदेन विभूषिता, घोररूपभूतगणसमावृता सती कौमारव्रतमास्थाय सुरलोकं गमिष्यसि।

तत्र त्वां शतदृक् शक्रो मत्प्रदिष्टेण कर्मणा।
अभिषेकेण दिव्येन दैवतैः सह योक्ष्यसे ॥४७॥
तत्रैव त्वां भगिन्यर्थे ग्रहीष्यति स वासवः।
कुशिकस्य तु गोत्रेण कौशिकी त्वं भविष्यसि ॥४८॥
स ते विन्ध्ये नगश्रेष्ठे स्थानं दास्यति शाश्वतम्।
ततः स्थानसहस्रैस्तां पृथिवीं शोभयिष्यसि ॥४९॥
त्रैलोक्यचारिणी सा त्वं भुवि सत्योपयाचना।
चरिष्यसि महाभागे वरदा कामरूपिणी ॥५०॥

तत्र त्रिदिवं गतायां त्वयि, सहस्रलोचन इन्द्रो मत्प्रदिष्टकर्मानुसारेण देवैर्दिव्याभिषेकप्रदानेन सम्पादितदेवभावां त्वामिन्द्रः स्वभगिनीरूपेण ग्रहीष्यति। अतः परं कुशिकस्य गोत्रनाम्ना त्वं कौशिकीति विख्याता भविष्यसि। ततो वासवस्तुभ्यं नगश्रेष्ठे विन्ध्यपर्वते स्थानं दास्यतीति त्वं पृथिव्यां नाना जनपदान् शोभयिष्यसि। हे महाभागे! त्वं कामचारिणी भूत्वा त्रैलोक्ये विचरन्ती पृथिव्यां साधकानामभीष्टं वरं तेभ्यो दास्यसि।

तत्र शुम्भनिशुम्भौ द्वौ दानवौ नगचारिणौ।
तौ च कृत्वा मनसि मां सानुगौ नाशयिष्यसि ॥५१॥
कृत्वा नु यात्रां भूतैस्त्वं सुरामांसबलिप्रिया।
तिथौ नवम्यां पूजां त्वं प्राप्स्यसे सपशुक्रियाम् ॥५२॥

हे देवि! तत्र त्वं मनसि मां ध्यात्वा भूतगणपरिवृता यात्रां कृत्वा अनुचरवर्गसहितौ पर्वतविहारिणौ निशुम्भशुम्भनामकौ दानवौ विनाशयिष्यसि। तव सुरामांसेऽतीव प्रिये। अतएव तदवधि त्वं महीमण्डले नवम्यां तिथौ पशुहिंसासमन्वितां पूजां प्राप्स्यसे।

## योगमायारहस्यम्

श्रीमद्भागतस्य दशमस्कन्धे द्वितीयाध्यायस्य वर्णनातो ज्ञायते, भगवतः श्रीकृष्णस्य निर्देशेन "योगमाया" नन्दगोपगृहे यशोदाकन्यारूपेण जाता। श्रीकृष्णस्य सर्वा लीला "योगमाया" साहाय्येनैव सम्पन्नाः। श्रीकृष्णबलरामयोर्जन्म, नन्दगृहेऽवस्थानासुरवधादयो, ब्रह्मणा हृतानां गोपालानां मायासृष्टिश्चेति सर्वं योगमायायाः कार्यम्। एवमेव श्रीवृन्दावनलीलासारभूतां रासलीलामपि श्रीकृष्णो "योगमाया" माश्रित्य सम्पादितवान्। उक्तञ्च--

भगवानपि ता रात्रीः शरदुत्फुल्लमल्लिकाः।
वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रितः॥(१०।२६।१)

गौड़ीयवैष्णवदर्शने योगमायातत्त्वं विशेषभावेनालोचितमस्ति। वैष्णवानां नये श्रीकृष्णस्यानन्तशक्तीर्विभज्य चित्शक्तिर्जीवशक्तिर्मायाशक्तिश्चेति भागत्रयमकरोत्। श्रीकृष्णश्चित्स्वरूपः। तस्य चित्स्वरूपा शक्तिरेव चित्शक्तिः स्वरूपशक्तिर्वा कथ्यते। अस्याः शक्तेः साहाय्येन लीलापुरुषोत्तमः श्रीकृष्णोऽन्तरङ्गलीलाविलासमकरोत्। अतश्चित्शक्तिरियमन्तरङ्गेति कथिता। चित्शक्तेरेकस्य मूर्तविग्रहस्य नाम "योगमाया"। एषैव भगवतः श्रीकृष्णस्य प्रकटलीलायाः सहकारिणी। सा योगमायैव प्रकटलीलाया रसपुष्टचर्थं समये समये श्रीकृष्णस्य तत्परिकरवृन्दस्य च मुग्धत्वमुत्पाद्य तेषां स्वरूपज्ञानमावृणोति। एतन्मुग्धत्वञ्चोत्पाद्य श्रीकृष्णस्यानन्तरसवैचित्र्यास्वादने सुयोगं सृजति। एषा हि "योगमाया" अघटन-घटन-पटीयसीति तत्त्वम्।

### नन्दाया मूर्तिभेदः

"एकानंशा"—भगवती नन्दा "एकानंशा" इति नाम्नापि प्रसिद्धा। हरिवंशे (२।४।४७) श्लोके यशोदागर्भसम्भूता नन्दसुता "एकानंशे"ति नाम्नाप्यभिहिता।

विद्धि चैनामथोत्पन्नामंशाद्देवीं प्रजापतेः।
एकानंशां योगकन्यां रक्षार्थं केशवस्य तु॥४७॥
तां वै सर्वे सुमनसः पूजयन्ति स्म यादवाः
देववद्दिव्यवपुषा कृष्णः संरक्षितो यया॥४८॥

या पुरा प्रजापतेरंशसम्भूता, सा योगकन्या केशवस्य रक्षार्थं भगवता सहाभिन्ना (एका) अनंशरूपेणोत्पन्ना। सा च देववद्दिव्यदेहधारणपूर्वकं सर्वत्र श्रीकृष्णमरक्षत्। तस्माद्देवा दानवाश्च तां सर्वदा भक्त्या पूजयन्ति स्म। वराहमिहिरकृत"वृहत्संहिता"ग्रन्थे एकानंशादेव्या उल्लेखोऽस्ति,—"एकानंशा कार्या देवी बलदेवकृष्णयोर्मध्ये"। (५८।३७)। बलरामकृष्णयोर्मध्यस्थले "एकानंशा" देव्याः प्राचीनमूर्तिविहारोड़िष्ययोर्नानास्थानेषु परिदृश्यते। भुवनेश्वरस्यानन्तवासुदेवमन्दिरे अनन्त (बलराम) वासुदेवयोर्मध्यस्थले "एकानंशा" देवी विराजमाना। पुरीमन्दिरेऽपि जगन्नाथबलरामयोर्मध्यवर्तिनीं सुभद्रादेवीं केचन एकानंशादेव्या सहाभिन्नां वदन्ति। एतदपि लक्षणीयं यद्देवीसूक्ते

सुभद्रादेवी पूजिताऽभवदिति। तन्मन्त्रं तु ॐ ह्रीं दुर्गाय नम इति। उक्तञ्च चण्डीमन्त्रे, "दुर्गा भगवती भद्रा ययेदं धार्यते जगत्।" इति (५।११६)

वृहत्संहितायाः प्रतिमाध्याये दृश्यते एकानंशादेव्या मूर्तिर्द्विभुजा चतुर्भुजा अष्टभुजा च भवितुमर्हति। तदुक्तम्—

एकानंशा कार्या देवी बलदेव-कृष्णयोर्मध्ये।
कटिसंस्थितवामकरा सरोजमितरेण चेद्वहति॥(५८।३७)

कृष्णबलरामयोर्मध्ये एकानंशा-देव्या मूर्तिर्निर्मातव्या। तस्या वामकरः कटिसंलग्नः, धृतपङ्कजो दक्षिणकरो भवेत्।

कार्या चतुर्भुजा या वामकराभ्यां सपुस्तकं कमलम्।
द्वाभ्यां दक्षिणपार्श्वे वरमर्थिष्वक्षसूत्रम्॥३८॥

सा देवीमूर्तिश्चतुर्भुजा चेत् तस्या वामकरद्वये पद्मं पुस्तकञ्च, दक्षिण-हस्तद्वये अर्थिनां वरमुद्रा अक्षसूत्रमपि कर्तव्यम्।

वामेऽथाष्टभुजायाः कमण्डलुश्चापमम्बुजं शास्त्रम्।
वरशरदर्पणयुक्ताः सव्यभुजाः साक्षसूत्राश्च॥३९॥



अथाष्टभुजा चेदेकानंशा, वामकरचतुष्टये कमण्डलुर्धनुः पद्मं शस्त्रयुक्तम् एवं दक्षिणकरचतुष्टये वरः शरः दर्पणोऽक्षसूत्रान्वितश्च कर्तव्यः।

कनकोत्तमकान्तिः सा सुकान्तिकनकाम्बरा।
देवी कनकवर्णाभा कनकोत्तमभूषणा॥२॥

सा भगवती नन्दादेवी तप्तकाञ्चनवर्णा कमनीयस्वर्णवस्त्रपरिहिता स्वर्णाभदीप्तिविशिष्टा स्वर्णालङ्कारभूषिता च।

"कनकोत्तमकान्तिः"—श्रीमच्छङ्कराचार्यः "सौन्दर्यलहरी" स्तोत्रे भगवत्या अनुपमशरीरकान्तिमवर्णयत्।

तनुच्छायाभिस्ते तरुण-तरणि श्रीसरणिभि-
र्दिवं सर्वामूर्वीमरुणिमनिमग्नां स्मरति यः।
भवन्त्यस्य त्रस्यद्वनहरिणशालीननयनाः,
सहोर्वश्या वश्याः कति कति न गीर्वाणगणिकाः॥

हे मातः! यः साधको बालसूर्यवत्सौन्दर्यशालिन्यास्तव शरीरकान्त्या भूर्भुवः स्वर्लोकानरुणितांश्चिन्तयति, भयविह्वलवनहरिणीनयनसुन्दराक्ष्या उर्वश्या सह बह्वय एव स्वर्वेश्यास्तस्य वश्या न भवन्ति, तस्य प्रेयस्यो न भवन्ति, तस्य मनो रञ्जयितुं न शक्नुवन्तीत्यर्थः। जगदम्बाया अनुपमसौन्दर्यसागरे यस्य साधकस्य मनः प्राणाश्च निमज्जन्ति, त्रिभुवनमध्ये न किमपि सौन्दर्यं तं साधकं प्रलोभयितुं शक्नोति।

कमलांकुशपाशाब्जैरलंकृतचतुर्भुजा।
इन्दिरा कमला लक्ष्मीः सा श्री रुक्माम्बुजासना ॥३॥

भगवती नन्दादेवी चतुर्भुजेषु पद्ममंकुशं पाश शङ्खञ्च धारयति। सा एव इन्दिरा कमला लक्ष्मीः स्वर्णपद्मासनस्थिता श्रीश्चेति कथ्यते।

**देव्या आयुधरहस्यम्**

चिन्मयी भगवती लीलाविग्रहधारणपूर्वकं यदा स्थूलरूपेण प्रकटिताऽभवत्, तदाऽसुरवधार्थं भक्तगणरक्षार्थञ्च नानाविधान्यस्त्राणि धारयति स्म। देव्या स्थूलरूपमध्ये यथा भावमयमाध्यात्मिकरूपं वर्तते, तथैव तस्याः करधृतास्त्र-समूहस्यापि विशेषविशेषं भावमयं तत्त्वमयं वा रूपं विद्यते, तदपि प्रतीकार्थ-रूपं ध्यातव्यम्। श्रीमन्नीलकण्ठदीक्षितस्तस्य "आनन्दसागरस्तवे" देव्याः कति-पयेषामायुधानां तात्पर्यं न्यरूपयत्।

पाशांकुशौ तव करे परिचिन्त्य राग-
द्वेषौ जयन्ति परमार्थविदस्तु धन्याः।
एकत्र चापमितरत्र शरं च मत्वा
व्यावर्तयन्ति हृदयं विषयान्धकूपात् ॥७६॥

हे मातः! यः साधकस्तव हस्तस्थित-पाशांकुशौ ध्यात्वा रागद्वेषौ जयति, स परमार्थवित् साधको धन्यः। स च तवैकहस्ते धनुरपरहस्ते च बाणं विचिन्त्य विषयान्धकूपाद् हृदयमुद्धरति।

**श्रीमद्भागवते** भगवतो विष्णोरायुधसमूहस्याध्यात्मिकतात्पर्यमिदमुक्तम्—

धर्मज्ञानादिभिर्युक्तं सत्त्वं पद्ममिहोच्यते।
ओजःसहोबलयुक्तं मुख्यतत्त्वं गदां दधत्॥
अपां तत्त्वं दरवरं तेजस्तत्त्वं सुदर्शनम् (१२।११।१३-१४)

भगवतो विष्णोर्हस्तस्थितं पद्मं धर्मज्ञानादियुक्तं सत्त्वगुणं कथयति, स इन्द्रियशक्ति-मनःशक्ति-देहशक्तिसमन्वितप्राणतत्त्वस्वरूपां गदां, जलतत्त्वरूपं पाञ्चजन्यशङ्खं तेजस्तत्त्वरूपं सुदर्शनचक्रं च करचतुष्टये धारयति।

नभोनिभं नभस्तत्त्वमसिं चर्म तमोमयम्।
कालरूपं धनुःशार्ङ्गं तथा कर्ममयेषुधिम्॥१५॥

स भगवान् निर्मलाकाशवदाकाशतत्त्वरूपमसिं, तमोगुणात्मकं चर्म, काल-रूपं शार्ङ्गं धनुः, कर्ममयं वाणाधारं च धारयति।

**श्रीललितासहस्रनामस्तोत्रे** भगवत्या ललितादेव्या ध्याने तदुक्तम्—

उद्यद्भानुसहस्राभा चतुर्बाहुसमन्विता।
रागस्वरूपपाशाढ्या क्रोधाकारांकुशोज्ज्वला॥
मनोरूपेक्षुकोदण्डा पञ्चतन्मात्रसायका।
निजारुणप्रभापूरमज्जद्ब्रह्माण्डमण्डला (२।२-३)

भगवती ललिता देवी नवोदितसहस्रसूर्यप्रभावत्प्रभाविशिष्टा, सा देवी चतुर्भुजेषु राग(आसक्ति)रूपं पाशं, क्रोधरूपमंकुशं, मनोरूपं धनुर्वाणं, पञ्चतन्मात्ररूपान् पञ्चवाणांश्च धारयति, स्वीयारुणप्रभामध्ये समग्रब्रह्माण्डमण्डलं निमज्जयति च।

श्रीमद्भास्करराय: सौभाग्यभास्करभाष्ये पूर्वोक्तश्लोकद्वयस्य व्याख्या-प्रसङ्गे ललितादेव्या आयुधरहस्यं विवृतवान्।

"रागस्वरूपपाशाढ्या"—रागोऽनुरक्तिश्चित्तवृत्तिविशेष इच्छैव वा। राग एव स्वं वासनामयं रूपं यस्य स्थूलस्य पाशस्य तेन आढ्या एतादृशवामाधः-करयुक्ता इत्यर्थः। "क्रोधाकारांकुशोज्ज्वला"—क्रोधो द्वेषाख्या चित्तवृत्तिः, आकारः सविषयकं ज्ञानमित्यर्थः। द्वेष-ज्ञानोभयात्मकेनांकुशेनोज्ज्वला शोभ-मानदक्षाधःकरा। अर्थाद् दक्षिणाधःकरेणांकुशं धारयति। अंकुशोऽयं क्रोधस्य सविषयकज्ञानस्य च प्रतीकम्।

पूर्वचतुःशतीशास्त्रे देवीकरधृतपाशांकुशौ यथाक्रमं रागद्वेषसूचकाविति कथितम्।

"पाशांकुशौ तदीयौ तु रागद्वेषात्मकौ स्मृतौ।"

तन्त्रराजतन्त्रस्य वासनापटले उक्तम्—पाशो रागस्य, अंकुशो द्वेषस्य, धनुर्मनसः, तथा पञ्चपुष्पवाणा पञ्चतन्मात्राणां प्रतीकस्वरूपाः।

मनो भवेदिक्षुधनुः पाशो राग उदीरितः।
द्वेषः स्यादंकुशः पञ्चतन्मात्राः पुष्पसायकाः॥

उत्तरचतुःशतीशास्त्रमते पाश इच्छाशक्तिप्रतीकः, अंकुशो ज्ञानशक्ति-प्रतीकः, धनुर्वाणश्च क्रियाशक्तिप्रतीकः।

इच्छाशक्तिमयं पाशमंकुशं ज्ञानरूपिणम्।
क्रियाशक्तिमये वाणधनुषी दधदुज्ज्वलम्॥

"मनोरूपेक्षुकोदण्डा"—सङ्कल्पविकल्पात्मकक्रियारूपं मन एव रूपं यस्य तादृशम् इक्षुरूपं पुण्ड्रेक्षुमयं कोदण्डं धनुर्यस्या वामोर्ध्वकरे, इक्षुमयं धनुर्धारयति। इदमिक्षुधनुः सङ्कल्पविकल्पात्मकक्रियायुक्तस्य मनसः प्रतीकस्वरूपम्।

"पञ्चतन्मात्रसायकाः"—पञ्चसंख्यकानि तन्मात्राणि शब्दादिविषयाः। पञ्चभूतानाम् एतदेव रूपमित्यर्थः। तन्मात्राण्येव सायका वाणा यस्या दक्षोर्ध्वकरे सा तथोक्ता। अर्थाद्देवी दक्षिणोर्ध्वकरे पञ्चवाणान् धारयति। एते खलु पञ्च वाणाः पञ्च तन्मात्राणि, अर्थाद् रूप-रस-गन्ध-स्पर्श-शब्दानां प्रतीकाणि।

**वामकेशरतन्त्रे** उक्तम्—

"शब्दस्पर्शादयो वाणा मनस्तस्या भवेद्धनुः।"

अर्थाद् रूपरसगन्धस्पर्शशब्दाः तस्या बाणस्वरूपाः, मनश्च धनुःस्वरूपं ज्ञेयम्।

"कादिमते" देव्याः करधृतपञ्चवाणतात्पर्यम् एतदेव विवृणोति, यथा—

वाणास्तु त्रिविधाः प्रोक्ताः स्थूल-सूक्ष्म-परत्वतः।
स्थूलाः पुष्पमयाः सूक्ष्मा मन्त्रात्मानः समीरिताः॥
पराश्च वासनायान्तु प्रोक्ताः स्थूलान् शृणु प्रिये।
कमलं कैरवं रक्तं कह्लारेन्दीवरे तथा।
सहकारकमित्युक्तं पुष्पपञ्चकमीश्वरि॥

वाणास्त्रिविधाः स्थूल-सूक्ष्म-परभेदात्। पुष्पमयवाणः स्थूलः, मन्त्रमय-वाणः सूक्ष्मः। एवं परवाणाः श्रेष्ठवाणाः। स्थूलवाणास्तु पद्म-रक्तकैरव-कह्लारेन्दीवराम्रमुकुलानि चेति।

इति कामरूपान्तर्वर्ति-श्रीमदुग्रतारामहापीठाध्यक्षश्रीचक्रेश्वरभट्टाचार्य-
सङ्कलितशाक्तदर्शने विश्वरूपको नाम
षष्ठः परिच्छेदः।

---



# सप्तमः परिच्छेदः

## शाकम्भरी-रहस्यम्

शाकम्भरी नीलवर्णा नीलोत्पलविलोचना।
गम्भीरनाभिस्त्रिबलिविभूषिततनूदरी।
सुकर्कशसमोत्तुङ्गवृत्तपीनघनस्तनी ॥१२॥ (मूर्तिरहस्ये)

तथाहि--मूर्तिरहस्यप्रसङ्गे मेधा ऋषिः सुरथाय देव्यवताराणां मध्ये पञ्चमावतारस्य शाकम्भरीस्वरूपं वर्णयति। शाकम्भरी नीलवर्णा नीलेन्दिवरसदृशमनोरमनयनविशिष्टा। सुगभीरनाभिमण्डलान्वितत्रिबलिशोभितक्षीणोदरा, सुकठिनसमुन्नतवर्तुलमनोहरघनपीनपयोधरशोभिता।

"शाकम्भरी"--सप्तशतीस्तवे (११।४६-०५) मन्त्रेषु भगवत्याः शाकम्भरीदेव्याः स्वरूपं वर्णितम्।



"नीलोत्पलविलोचना"--शाकम्भरी शताक्षी देवीति च कीर्त्यते। तस्या नेत्राणीन्दिवरसदृशानि। शतवर्षव्यापिन्यामनावृष्टौ यदा पृथिवी जलशून्याऽभवत् तदा मुनिगणस्यैकान्तिकस्तुतौ सुप्रसन्ना भगवती आविर्भूय शतचक्षुर्भिस्तान् मुनीन् निरैक्षत। तेनैव सा "शताक्षी"ति नाम्नापि प्रसिद्धा। तदुक्तं चण्डीमन्त्रे (११।४७)—

"ततः शतेन नेत्राणां निरीक्षिष्यामि यन्मुनीन्।
कीर्तयिष्यन्ति मनुजा शताक्षीमिति मान्ततः।"

"गम्भीरनाभिः"--श्रीमच्छङ्कराचार्यः सौन्दर्यलहरीस्तोत्रे जगन्मातुर्नाभिसरोजस्यानुपमसौन्दर्यमपूर्वेण कवित्वेन वर्णितवान्--

हरक्रोधज्वालाबलिभिरवलीढ़ेन वपुषा,
गभीरे ते नाभि-सरसि कृतझम्पो मनसिजः।
समुतस्थौ तस्मादचलतनये धूमलतिका,
जनहतां जानीते जननि तव रोमावलिरिति ॥७६॥

हे पर्वतराजपुत्रि ! कन्दर्पो महेश्वरकोपानलशिखासमूहदग्धशरीरस्तव सुगभीरनाभिसरोवरे झम्पप्रदानमकरोत्। हे जननि ततस्तेन प्रतप्तशरीरेण सह यो जलसंयोगः सहसा सञ्जातोऽभवत्तस्मात्प्रभूतधूमावलिरुद्गता, लोकाश्च तां धूमावलिं ते रोमावलिं मन्यन्ते।

"त्रिबलि-विभूषित-तनूदरी"—उदराद्यङ्गे तरङ्गितं मांसं बलिः इति कथ्यते। देव्या अपि क्षीणो मध्यदेशस्त्रिबलिशोभितः। तदेव वर्णितं सौन्दर्यलहरीस्तोत्रे,—

कुचौ सद्यस्त्रिद्यत्तटघटितकूर्पास-भिदुरौ,
कषन्तौ दोर्मूले कनककलसाभौ कलयता।
तव त्रातुं भङ्गादलमिवाग्रं तनुभुवा,
त्रिधा नद्धं देवि त्रिबलिलवलीवल्लिभिरिव ॥८०॥

हे देवि ! स्वर्णकुम्भसदृशौ तवोत्तुङ्गपीनकुचौ बाहुमूलौ प्रपीड्य धर्माक्तस्तनदेशस्थितकञ्चुलिकांभित्त्वा वर्तेते। तयोर्दुर्वहभारेण तव क्षीणतरमध्यदेशो भग्नो न भवेदिति मत्वा कन्दर्पस्तव कटिदेशरक्षार्थं लवलीलतया त्रिबलिरूपयेव दृढं बद्ध्वा अरक्षदिति मन्ये।



भगवत्याः प्रत्यङ्गसौन्दर्यध्यानं जगन्मातुश्चिन्मयविग्रहस्याश्रयस्थानम्। स्वयं ब्रह्मा तत्सौन्दर्यवर्णनासमर्थो भूत्वा तस्याः स्तुतौ केवलमेतदेवोक्तवान्—

"सौम्या सौम्यतराशेषसौम्येभ्यस्त्वतिसुन्दरी"ति (चण्डी १।७७)

मातृभक्तः साधको हि भगवत्याः पादादिकेशान्तं प्रत्यङ्गप्रत्यङ्गस्य, अप्राकृतसौन्दर्यं ध्यायं ध्यायं ब्रह्मानन्दसागरस्य तरङ्गे भासमानो वर्तते। ईदृश्यां ध्यानमग्नावस्थायां श्रीमच्छङ्कराचार्यः "सौन्दर्यलहरी" स्तोत्रमरचयत्।

भक्तकविर्नीलकण्ठदीक्षितो भगवतीं मीनाक्षीदेवीमुद्दिश्य विरचित "आनन्दसागरस्तवे" यथार्थमुक्तवान्,—

आचूड़माचरणमम्ब तवानुवार-
मन्तः स्मरन् भुवनमङ्गलमङ्गमङ्गम्।
आनन्दसागरतरङ्गपरम्पराभि-
रान्दोलितो न गणयामि गतान्यहानि ॥५३॥

हे मातः। तव मस्तकाच्चरणान्तं यावद् भुवनमङ्गलं प्रत्येकमङ्गं पुनः पुनरन्तर्ध्यायिन् ध्यायन् यदाहमानन्दसागरस्य तरङ्गमालायामान्दोल्यमानस्तिष्ठामि, तदा कति दिनान्यतिवाहितानि भवन्तीति विगणयितुं न शक्नोमि।

नीलकण्ठदीक्षितो हि सप्तदशशताब्द्यां दक्षिणभारते आविरभूत्। स च मादुराराजस्य प्रधानसचिव आसीत्। परन्तु सन्न्यासग्रहणं कृत्वा स ताम्रपर्णीनदीतीरेऽतिष्ठत्। अनेन रचितं "शिवलीलार्णवं गङ्गावतरणम्"-"नीलकण्ठविजयचम्पू"-काव्यादिकं चातीव प्रसिद्धम्। अष्टोत्तरशतश्लोकनिबद्धोऽस्य "नन्दसागरस्तव" नामको ग्रन्थः शाक्तानां विशेषेनैवादरणीयः। तस्मिन् ग्रन्थे भगवत्या मीनाक्षीदेव्या महिमानं दैहिकञ्च सौन्दर्यमैकान्तिकभक्तिरसावेशेन वर्णितवान्।

मूककविः सार्वभौमः पञ्चशतश्लोकनिबद्धे ग्रन्थे जगन्मातुर्महिमानं सौन्दर्यञ्चावर्णयत्। अनेन रचितं मूकपञ्चशती देवीपञ्चशतीति वा नाम्ना प्रसिद्धं पुस्तकमेतत् कटाक्षशतक-मन्दस्मितशतक-पादारविन्दशतकार्याशतक-स्तुतिशतक-नामभिः पञ्चभिः शतकैः सम्पूर्णम्। मूककविः शङ्कराचार्यसमसामयिकोऽष्टमशताब्द्यां प्रख्यातो जन्मावधि च वाक्शक्तिहीन आसीत्। परन्तु काञ्चीपीठाधिष्ठात्र्याः कामाक्षीदेव्याः कृपया वाक्शक्तिं लब्ध्वा कामाक्षीदेव्युद्देशे "देवीपञ्चशतीं" नाम स्तोत्रमालामरचयत्। मूककविसार्वभौमः काञ्चीनगरस्थस्य "कामकोटिशङ्कर" पीठस्य पीठाध्यक्ष आसीत्।

"मूकपञ्चशती" देवीस्तोत्रं साहित्यभाण्डारस्यान्यतमोज्ज्वलरत्नरूपेण परिगण्यते। "कटाक्षशतक" स्तवे भगवत्याः कृपाकटाक्षस्य शक्तिमाधुर्यं शतश्लोकैर्वर्णितम्। "मन्दस्मितशतके" जगन्मातुः कारुण्यामृतवर्षि मृदुहास्यं तथा "पादारविन्दशतके" भक्तजनैकशरणं श्रीचरणसरोजमहिमानं च कविर्वर्णितवान्। महाकविश्रीमूककृता पञ्चशती काव्यमालायाः पञ्चमगुच्छके मुद्रिताऽभवत्।

(१) कटाक्षशतके,—

नीलोऽपि रागमधिकं जनयन् पुरारे-,
लोलोऽपि भक्तिमधिकं द्रढयन्नराणाम्।
वक्रोऽपि देवि नमतां समतां वितन्वन्,
कामाक्षि नृत्यतु मयि त्वदपाङ्गपातः॥(१६)

हे देवि! तव नीलोत्पलसदृशनेत्रकटाक्षो महादेवस्य चित्तेऽनुरागं सञ्चारयति, साधकानाञ्च पक्षे तव लीलामयः कटाक्षपातः चञ्चलोऽपि तेषामैकान्तिकां भक्ति दृढतरामकरोत्। परन्तु वक्रोऽपि प्रणतभक्तानां चित्ते समतां विस्तारयति। हे मातः कामाक्षि! तव कटाक्षपातः सर्वदाऽस्माकमुपरि नृत्यतु।

(२) मन्दस्मितशतके,—

वैमल्यं कुमुदश्रियं हिमरुचः कान्त्यैव संधुक्षते,
ज्योत्स्नारुचिरपि प्रदोषसमयं प्राप्यैव संपद्यते।
स्वच्छत्वं नवमौक्तिकस्य परमं संस्कारतो दृश्यते,
कामाक्ष्याः स्मितदीधितेर्विशदिमा नैसर्गिको भासते॥(७३)

श्वेतपद्मस्य शुभ्रता चन्द्रकिरणेन प्रकाश्यते, ज्योत्स्नायाः प्रभा प्रदोषसमयान्ते एव परिलक्ष्यते, नवमुक्ताया अतिशायिनी स्वच्छता परिमार्जनात् परमेव दृश्यते, किन्तु भगवत्याः कामाक्षीदेव्या मन्दहास्यस्य विमलप्रभा स्वभावतः सदैव निरवच्छिन्नतया प्रकाशते।



(३) पदारविन्दशतके,—

कदा दूरीकर्तुं कटुदुरितकाकोलजनितं,
महान्तं सन्तापं मदनपरिपन्थि-प्रियतमे।
क्षणान्ते कामाक्षि त्रिभुवनपरितापहरणे,
पटीयांसं लप्स्ये पदकमलसेवामृतरसम्॥(२२)

हे शिवप्रियतमे! भगवति! कामाक्षि! कदा वयमस्माकं भीषणपापरूपविषयजनितमहासन्तापदूरीकरणार्थं, तव पादपद्मसेवारूपामृतरसलाभाय समर्था भवामः, यो रसस्तावत्क्षणकालमध्ये परितापहरणे समर्थः स्यादिति।

मुष्टिं शिलीमुखापूर्णं कमलं कमलालया।
पुष्पपल्लवमूलादिफलाढ्यं शाकसञ्चयम्॥१३॥
काम्यानन्तरसैर्युक्तं क्षुत्तृण्मृत्युजरापहाम्।
कार्मुकञ्च स्फुरत्कान्तिं विभर्ति परमेश्वरी॥१४॥

तथाहि—पद्मवननिवासिनी परमेश्वरी शाकम्भरी देवी चतुर्भुजा; एकहस्ते बाणैः परिपूर्णां मुष्टिं, द्वितीयहस्ते कमलं, तृतीयहस्ते मनोवाञ्छितानन्तरसविशिष्टं क्षुधातृष्णाजरामृत्युहरणं पत्रपुष्पफलमूलादिसम्पन्नं शाकराशिमेकं तथा चतुर्थहस्ते उज्ज्वलकान्तिधनुश्च धृतवती।

"शिलीमुखापूर्णं"—शिलीमुखा बाणास्तैरापूर्णम्।

"शाकाम्भर्या आयुधध्यानम्"—एकस्यां मुष्टौ बाणान्, एकस्मिन् हस्ते कमलम्, एकस्मिन् हस्ते पुष्पादिकम्, तथा एकस्मिन् हस्ते धनुश्च विभर्ति। अर्थाद् दक्षिणाधोभुजे शरमुष्टिं दक्षिणोर्ध्वभुजे पद्मं, वामोर्ध्वभुजे पुष्पपल्लव-फलमूलशाकादीन्, वामाधोहस्ते च महाधनुर्विभर्ति।

"शाकसञ्चयम्"—शतवर्षव्यापिन्यामनावृष्टौ पृथिव्यां शस्योत्पत्तेरभावात् भगवती शाकम्भरी देवी स्वशरीरोत्पन्नशाकैर्जीवान् पालयति स्म। उक्तञ्चै-तत्प्रसङ्गे **देवीभागवते** (७।२८।४६-४७)—

इति तेषां वचः श्रुत्वा शाकान् स्वकरसंस्थितान्।
स्वादूनि फलमूलानि भक्षणार्थं ददौ शिवा।।
नानाविधानि चान्यानि पशुभोग्यानि यानि च।
काम्यानन्तरसैर्युक्तान् या नवीनोद्भवं ददौ।।
शाकम्भरीति नाम्नी सा तद्दिनात् समभून्नृप।

तथाच—भगवती शाकम्भरी देवानां ब्राह्मणानाञ्चकातरप्रार्थनां श्रुत्वा तेषामाहारार्थं निजकरस्थित सुस्वादुफलमूलशाकादीन् प्रददौ। एवञ्च याव-त्कालं नूतनशस्यादिर्न जायते स्म, तावन्मनुजेभ्य आहारोपयोगिविविधरसपूर्णानि खाद्यानि पश्वादिभ्यश्च तेषां भोज्यतृणादीनदात्। हे राजन्! तत्काले शाकैः सर्वजीवभरणात् तद्दिनावधि सा शाकम्भरीति नाम्ना प्रख्याताऽभवत्। भगवती शाकम्भरी देवी शारदीयदुर्गापूजायां "नवपत्रिका"रूपेण पूजिता भवति। महाभागवतमहापुराणे, रामायणे, कौटिल्यस्यार्थशास्त्रे च (२।२४) दुर्गैव केवलं सर्वशस्याधिष्ठात्रीदेवीरूपेण पूजिता भवतीति दृश्यते। भारतवर्षे प्रतिवर्षं शरत्काले शस्यानां श्रीवृद्धिकामनया "नवपत्रिका"रूपिणी शाकम्भरी पूजिता भवति। पुनर्मधुचैत्रमासेऽपि शुक्लाष्टम्यां भगवती शाकम्भरी अन्नदायिन्यन्नपूर्णरूपेण पूजिता भवति।

## नीलादेवीरहस्यम्

नीलवर्णा वा नीलादेवी, सीतोपनिषदि, परंब्रह्मरूपिणी पराशक्तिः "सीता" नाम्नाऽभिहिता। तस्यास्तिस्रो मूर्तयः, श्रीर्भूमिर्नीला चेति। नीला देवी सोमसूर्याग्निरूपा। उपनिषदि नीला, पुराणे शाकम्भरीति च कथ्यते। तदुक्तं **सीतोपनिषदि**,—

"सोमात्मिका ओषधीनां प्रभवति, कल्पवृक्ष-पुष्प-फल-लता-गुल्मात्मिका, औषध-भेषजात्मिका, अमृतरूपा, देवानां महस्तोमफलप्रदा, अमृते तृप्ति जनयन्ती देवानाम् अन्नेन पशूनां तृणेन तत्तज्जीवानाम्।" (१३)

तथाहि—नीलादेवी सोमस्वरूपेण ओषधीनामुपरि प्रभुत्वं करोति। सा च कल्पवृक्ष-फल-पुष्प-लता-गुल्मरूपा। तथैवौषधिभ्यो निर्मितभेषजरूपेणामृतस्वरूपा च। एवैव देवानां यज्ञफलदायिनी; एवञ्चामृतेन देवान्, अन्नेन मनुष्यादीन् तृणेन च पशून् पालयति। नीलादेवी सौरादिसर्वजगतां प्रकाशकारिणी। सा च दिवारात्रिस्वरूपिणी, निमेषमुहूर्तादिकालं विभज्य कालचक्रजगच्चक्रयोः परिचालिका चेति।

"अग्निरूपा, देवानां मुखरूपा, वनौषधीनां शीतोष्णरूपा, काष्ठेष्वन्तर्वहिश्च नित्यानित्यरूपा भवति।" (१५)

नीलादेवी अग्निरूपेण अन्नपानादिग्रहणकारिणां जीवानां क्षुधातृष्णारूपिणी। सा च देवानामुपजीव्ययज्ञस्वरूपा। वनौषधीनां शीतोष्णदिरसतापरूपिणी। एवं वनस्पतीनामन्तर्वहिश्च जड़चैतन्यात्मिका।

## शाकम्भरी नवपत्रिकारूपम्

उद्भिज्जगतां मध्यतो महाशक्तिर्मातृरूपेणावतीर्णा, साधकस्तामावाह्य यथाविधि पूजयति। "नवपत्रिका" ह्युद्भिज्जगतां प्रतिनिधिस्थानीया।

देवपूजकानां भारतीयार्यजातीनामितिहासातीतसंग्रामसमूहकाहिनीं वयमल्पमात्रमेवजानीमहे। अतीतकाले पशुराक्षसासुरपिशाचादीनां मिथः संग्रामे विजयी मानवः कस्य वा उद्भिदः साहाय्येन विजयी अभूदित्येतदितिहासोऽद्यापि न ज्ञायते। किन्तूद्भिज्जगतस्तरुलताफलमूलादयः खाद्यरूपेण भेषजरूपेण च मानवानां तथा पश्वादीनाञ्चाशेषोपकारं साधयति। तेषां साहाय्येन मानवदेह इन्द्रियादिः स्नायुमण्डली च क्रमशो ग्रथिता भवन्ति। सर्वजन्तूनां मिथः प्रतिकूलतासंग्रामे उद्भिज्जगत् मानवानां दैहिकशक्तिमुत्पाद्य विजयलाभे आनुकूल्यं करोति। उद्भिज्जगतः प्रतिनिधिस्थानीयायां नवपत्रिकायां मातृशक्तिपूजाया एतदेव निगूढ़तात्पर्यम्।

## नवपत्रिकास्वरूपम्

शारदीय दुर्गापूजायां सप्तमीदिने नवपत्रिकास्थापनपूर्वकं भगवती प्रतिनिधिज्ञानेन पूज्यते। तदुक्तं स्मार्तप्रवररघुनन्दनकृत**दुर्गापूजातत्त्वे,—**

सप्तम्यां पत्रिकापूजा रम्भादिनवभिर्युता।
रम्भा कच्ची हरिद्रा च जयन्ती विल्वदाड़िमौ।
अशोको मानकश्चैव धान्यञ्च नवपत्रिकाः।।

तथाहि—नवपत्रिका यथा—(१) रम्भा, (२) कच्ची, (३) हरिद्रा, (४) जयन्ती, (५) विल्वः, (६) दाड़िमः, (७) अशोकः, (८) मानकः, (९) धान्यञ्चेति।

नवपत्रिकास्नानान्ते श्वेतापराजितया लतया वेष्टयित्वा वस्त्रं परिधाप्य दक्षिणाभिमुखीं पश्चिमाभिमुखीं वा कृत्वा तां नवपत्रिकां संस्थाप्य पूजयेत्। नवपत्रिकायाः प्रत्येकमेकैकाऽधिष्ठात्री देवी वर्तते। ताश्च भगवत्या दुर्गाया एव विभिन्नमूर्तित्वेन समष्टितो नवदुर्गेति नाम्ना कीर्तिताः।

## नवदुर्गास्वरूपम्

तदुक्तं विद्यापतिकृत**दुर्गाभक्तितरङ्गिण्याम्**—

ब्रह्माणी कदलीकाण्डे दाड़िमे रक्तदन्तिका।
धान्ये लक्ष्मीर्हरिद्रायां दुर्गा मानकपत्रके।।
चामुण्डा कालिका कच्च्यां शिवा विल्वे प्रतिष्ठिता।
अशोके शोकरहिता जयन्त्यां कार्तिकी स्मृता।।

(१) रम्भाधिष्ठात्री देवी ब्रह्माणी, (२) दाड़िमाधिष्ठात्री देवी रक्तदन्तिका, (३) धान्याधिष्ठात्री देवी लक्ष्मीः, (४) हरिद्राधिष्ठात्री देवी दुर्गा, (५) मानकाधिष्ठात्री देवी चामुण्डा, (६) कच्च्याधिष्ठात्री देवी कालिका, (७) विल्वाधिष्ठात्री देवी शिवा, (८) अशोकाधिष्ठात्री देवी शोकरहिता, (९) जयन्त्यधिष्ठात्री च देवी कार्तिकीति।

मत्स्यसूक्ततन्त्रे नवपत्रिकावासिनीनां प्रत्येकस्याः पृथक् पृथक् ध्यानमस्ति, **प्राणतोषिणीतन्त्रस्य** पञ्चमपटले। नेपालादौ च केवलं दिनत्रयं व्याप्य नवपत्रिकायामेव महापूजा प्रचलिता।

उक्तञ्च,—

ॐ पत्रिके नवदुर्गे त्वं महादेवमनोरमे।
पूजां समस्तां संगृह्य रक्ष मां त्रिदशेश्वरि।।
ॐ ह्रीं नवपत्रिकावासिन्यै दुर्गायै नमः।

## अन्नपूर्णा-रहस्यम्

भगवती शाकम्भरी देवी मधुचैत्रमासे शुक्लाष्टम्यां विश्वचराचरस्यान्नदायिनी अन्नपूर्णारूपेण पूजिता भवति। अन्नपूर्णोपनिषदि, अन्नदाकल्पतन्त्रे कारणागमे, महीधरविरचित-मन्त्रमहोदधितन्त्रस्य नवमतरङ्गे, काशीखण्ड-प्रभतिषु चान्नपूर्णास्वरूपं, ध्यानं, मन्त्रं, पूजापद्धतिर्माहात्म्यञ्च सविशेषं वर्णितम्। महामहोपाध्यायश्रीमत्कृष्णानन्दविरचित "तन्त्रसार"निबन्धेऽन्नपूर्णाया विभिन्ना मन्त्राः, पूजाप्रयोगः, स्तव-कवचादयश्च दृश्यन्ते, तन्मध्ये श्रीमच्छङ्कराचार्यविरचितस्तोत्रमेव सुप्रसिद्धम्।

अष्टादशशतिकाया मध्यभागे वङ्गदेशे भारतचन्द्ररायो गुणाकरो वङ्गभाषया **अन्नदामङ्गलं** काव्यं रचयित्वा अन्नपूर्णामहिमानं जनसाधारणे प्रचारितवान्। तन्त्रे पुराणे च तस्या ध्यानमन्त्रे सा देवी द्विभुजेति चतुर्भुजेति च वर्ण्यते। देव्याः सुप्रचलितध्यानं यथा **तन्त्रसारे**—

ॐ रक्तां विचित्रवसनां नवचन्द्रचूड़ाम्,
अन्नप्रदाननिरतां स्तनभारनम्राम्।
नृत्यन्तमिन्दुशकलाभरणं विलोक्य,
हृष्टां भजे भगवतीं भवदुःखहन्त्रीम्॥

मन्त्रञ्च—"ह्रीं नमो भगवति महेश्वरि अन्नपूर्णे स्वाहा।"

देवी अन्नपूर्णा रक्तवर्णा विचित्रवसनपरिहिता, ललाटेऽर्द्धचन्द्रभूषिता सा सर्वदा विश्वब्रह्माण्डेऽन्नं वितरति। सा स्तनभारनम्रा नृत्यपरायना चन्द्रशेखरं महादेवं दृष्ट्वाऽतीवानन्दिता। तां भवदुःखहारिणीं भजामि।

(क) **कारणागमे** द्विभुजान्नपूर्णाध्यानं यथा,—

वामे माणिक्यपात्रं मधुरसभरितं बिभ्रतीं पाणिपद्मे,
दिव्यैरन्नैः प्रपूर्णां धृतमणिवलये दक्षिणे रत्नदर्वीम्।
रक्ताङ्गीं पीनोत्तुङ्गस्तनभरविलसत्तारहारां त्रिनेत्राम्,
वन्दे पूर्णेन्दुविम्बप्रतिनिधिवदनामम्बिकामन्नपूर्णाम्॥
(श्रीतत्त्वनिधिधृतम्)

सा देवी वामकरकमले मधुरसपूर्णं माणिक्यपात्रं धारयति। मणिवलयशोभिते च दक्षिणकरे दिव्यान्नपरिपूर्णां रत्नमयदर्वीं बिभर्ति। सा रक्तवर्णा पीनोन्नतस्तनभरशोभिता त्रिनयना। तां पूर्णचन्द्रसदृशाननां जगज्जननीमन्नपूर्णां देवीं वन्दे।

(ख) **कारणागमे** चतुर्भुजान्नपूर्णाध्यानं यथा—

सिन्दूराभां त्रिनेत्राममृतां शशिकलां खेचरीं रक्तवस्त्राम,
पीनोत्तुङ्गस्तनाढ्यांमभिनवविलसद्यौवनारम्भरम्याम् ।
नानालङ्कारयुक्तां सरसिजनयनामिन्दुसंक्रान्तमूर्तिम्,
देवीं पाशांकुशाढ्यामभयवरकरामन्नपूर्णां नमामि ।।
(श्रीतत्त्वनिधिधृतम्)

अन्नपूर्णा देवी सिन्दूरवर्णा त्रिनयना अमृतवर्षिणी चन्द्रकलया शोभिता। सा हृदयाकाशे विहारकारिणी, रक्तवस्त्रपरिधाना, समुन्नतस्तनभारनम्रा। नवयौवना सुन्दरी, नानालङ्कारभूषिता कमलनयना, चन्द्रप्रभासदृशदेहकान्ति-विशिष्टा, चतुर्भुजा पाशांकुशवराभीतिमुद्राधारिणी; तामन्नपूर्णादेवीं प्रणमामि।

श्रीमच्छङ्कराचार्यविरचितेऽन्नपूर्णास्तोत्रे द्विभुजा चतुर्भुजा च दृश्यते,—

दर्वी स्वर्णविचित्ररत्नखचिता दक्षे करे संस्थिता,
वामे स्वादुपयोधरी सहचरी सौभाग्यमाहेश्वरी ।
भक्ताभीष्टकरी दृशा शुभकरी काशीपुराधीश्वरी,
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ।।८।।



हे देवि ! तव दक्षिणकरे विचित्ररत्नखचितस्वर्णदर्वी, वामकरे च सुमिष्ट-चरुपूर्णं पात्रं वर्तते। त्वं भक्ताभीष्टसौभाग्यविधायित्री, कृपाकटाक्षेण च मङ्गलदायिनी। त्वं काशीपुराधीश्वरी, करुणामयी माता जगदीश्वरी अन्नपूर्णा मह्यं भिक्षां देहि।

## अन्नपूर्णा शङ्कराचार्यश्च

केन प्रकारेणाचार्यः शङ्करो भगवत्या अन्नपूर्णायाः कृपां दर्शनञ्चालभत इत्येतत्सम्बन्धेऽनन्तरोक्ता किंवदन्तीपरम्परा वर्तते,—श्रीमच्छङ्कराचार्योऽद्वैत-वेदान्तवादप्रचारार्थं काशीधाम प्रविश्य मणिकर्णिका-समीप उवास। स च तत्राधिकारिविचारमनधिकारिविचारञ्चाकृत्वा सर्वसाधारण्येन ब्रह्मतत्वोपदेशं कुर्वन्नासत। "निर्विशेषे परब्रह्मणि कुतः शक्तिस्थानम् ? ब्रह्मैव केवलं परमार्थ-सत्यम्।" इत्येवम्भावेन केवलब्रह्मस्वीकारेण शक्तेरस्वीकारमकरोत्।

एकदा तु ब्राह्मे मुहूर्ते श्रीमच्छङ्कराचार्यो मणिकर्णिकाघट्टे स्नानार्थं गत्वा काञ्चित्षोड़शवर्षदेशीयां युवतीमबलामेकां क्रोड़े मृतपतिमस्तकमवस्थाप्य पति-सत्काराय साहाय्यभिक्षां कुर्वाणां घट्ट उपविष्टामपश्यत्। ततस्तत्शवदेहं

घट्टो-परि पन्थानमवरोध्य स्थापितं दृष्ट्वा श्रीमच्छङ्कराचार्यो युवतीमवदत्— "मातः! शवदेहं यद्येकदेशे स्थापयसि, तदाहं स्नानाय घट्टोपरि गन्तुं शक्नोमि।" परन्तु शोकाभिभूता नारी शङ्करवाक्यं श्रुत्वापि अवहेलया तत्कथायामणुमात्रमपि मनःसंयोगं नाकरोत्। ततः श्रीमच्छङ्कराचार्यो वारं वारं तां तथैवानुरुद्धवान्, सा च परिशेषे तमवदत्—"कथं महात्मन्नेवं मां वारं वारमनुरुध्यसे? कथं न शवं प्रति भाषसे?" इति। आचार्येणोक्तम्, "मातः! शोकेन हतबुद्धिरसि; कथं शक्तिहीनः शवः स्वयमेव स्थानादपसर्तुं समर्थो भवेत्?" युवतिरवदत्, "महात्मन्! भवतां नये शक्तिशून्यस्याद्वैतब्रह्मण एव जगत्कर्तृत्वमुक्तम्। ततः कथं शवः स्वयं न गच्छे"दिति।

एतच्छ्रुत्वा शङ्कराचार्योऽतिविस्मितोऽचिन्तयत्,—"अप्येषा काचिद्दैवी लीला!" इति चिन्तयत्येव शङ्कराचार्येऽकस्माद् युवती शवश्चान्तर्हितोऽभूत् तयोः स्थले च काशीपुराधीश्वरी देव्यन्नपूर्णा आविरासीत्। शङ्कराचार्यः कृताञ्जलिपुटेन भक्तिगद्गदचित्तेन च तां तुष्टाव।

ॐ नित्यानन्दकरी वराभयकरी सौन्दर्यरत्नावली,
निर्धूताखिलघोरपावनकरी प्रत्यक्षमाहेश्वरी।
प्रालेयाचलवंशपावनकरी काशीपुराधीश्वरी,
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी॥१॥

हे मातस्त्वं निरन्तरं सर्वेषामानन्दवर्धनकारिणी स्वीयकरेऽभयवरमुद्रां धृतवती। त्वं सौन्दर्यसागरस्वरूपा, त्वं हि सन्तानगणसर्वपापध्वंसं साधयित्वा तान् पवित्रयसि। त्वं प्रत्यक्षमाहेश्वरीशक्तिः। स्वजन्मना हिमालयवंशं पवित्रं कृतवती। त्वं काशीपुराधीश्वरी, जगज्जननी मातान्नपूर्णा, त्वं करुणापरवशतया भिक्षां मे देहि।

श्रीमच्छङ्कराचार्यो भगवत्यन्नपूर्णासमीपे भिक्षामयाचतेति तदुक्तम्—

अन्नपूर्णे सदा पूर्णे शङ्करप्राणवल्लभे।
ज्ञानवैराग्यसिध्यर्थं भिक्षां देहि च पार्वति॥(११)

हे मातः अन्नपूर्णे! त्वं नियतपूर्णरूपेण विराजिता, महादेवस्य प्राणप्रिया च। हे पार्वति! त्वं ज्ञान-वैराग्यसिध्यर्थं मह्यं भिक्षां देहि। परमकरुणामयी भक्तवत्सला भगवत्यन्नपूर्णा शङ्कराचार्यस्तवेन सन्तुष्टा सती स्ववामकरस्थितामृतभाण्डाद्दक्षिणकरस्थितदर्व्या शङ्कराचार्याय पूर्णज्ञानवैराग्यामृतं परिवेशयति। शङ्कराचार्यश्च दिव्यानुभूतिं लब्ध्वा परमानन्देन गायति,—

"माता च पार्वती देवी पिता देवो महेश्वरः।
बान्धवाः शिवभक्ताश्च स्वदेशा भुवनत्रयम् ॥" इति।

अन्नपूर्णातत्त्वमन्नपूर्णोपनिषदि सविशेषं प्रोक्तम्। भगवती साऽन्नपूर्णा साधकाय ब्रह्मज्ञानामृतं प्रदाय तं कृतार्थीकरोति।

पुरा कदाचि"न्निदाध"नामा योगी ब्रह्मज्ञमृभुमपृच्छत्——

"कयोपासनया ब्रह्मन्नीदृशीं प्राप्तवानसि।
तां मे ब्रूहि महाविद्यां मोक्षसाम्राज्यदायिनीम् ॥" इति।

हे ब्रह्मन्, ब्राह्मण! कया उपासनया त्वमीदृशीं ब्रह्मज्ञानरूपां महाविद्यां प्राप्तवानसि? मह्यं तां मोक्षसाम्राज्यदायिनीं महाविद्यां स्वरूपतः कथय। तदुत्तरभृभुरवदत्,——"यस्या ज्ञानमात्रात् साधको जीवन्मुक्तो भवितुमर्हति, तां विद्यां कथयामि, श्रूयताम्। मम पिता मह्यं सप्त विंशतिवर्णात्मकान्नपूर्णा-मन्त्रदीक्षां दत्त्वा तस्याः साधनाय मामुपादिशत्। प्रोक्तो महामन्त्रो यथा—— "ऐँ ह्रीँ सौँ श्रीँ क्लीँ ओँ नमो भगवत्यन्नपूर्णे ममाभिलषितमन्नं देहि स्वाहा" इति।

ततो नियमग्रहणपूर्वकमहं स्वीयाश्रमोक्ताचारपरायणो भूत्वा दीर्घकालं यावन्महामन्त्रसाधनमकरवम्।

एवं गते दीर्घकाले प्रादुरासीन्ममाग्रतः।
अन्नपूर्णा विशालाक्षी स्मयमानमुखाम्बुजा ॥

तथाहि——सुदीर्घकालं यावन्महामन्त्रसाधनया विशालनयना ईषद्धास्य-युक्ता कमलानना भगवती अन्नपूर्णा ममसम्मुख आविरभवत् "स्वाभिमतवर-प्रार्थना क्रियता"मिति चावदत्। ततस्तमहं दण्डवत्प्रणम्य कृताञ्जलिरिदं प्रार्थयम्——

"आत्मतत्त्वं मनसि मे प्रादुर्भवतु पार्वति।" इति।

मातः पार्वति! मम चित्ते आत्मतत्त्वज्ञानं प्रादुर्भवेदिति वरो दीयताम्।

तथैवास्त्विति मामुक्त्वा तत्रैवान्तरधीयत।
तदा मे मतिरुत्पन्ना जगद्वैचित्र्यदर्शनात् ॥

ततो देवी तथास्त्वित्युक्त्वाऽन्तर्हिताऽभवत्। तदा जगद्वैचित्र्यदर्शनेन ममचित्ते ब्रह्मज्ञानमुदैत्।

"प्राचीन-रोमेऽन्नपूर्णापूजा"––इदं सम्भाव्यते यत्प्राचीनरोमवासिनो भारतवर्षे वाणिज्यार्थमागत्यास्माकमन्नपूर्णामाहात्म्यं पूजापद्धतिञ्च ज्ञात्वा गतवन्तः। अस्माकम् अन्नपूर्णानाम्ना सह लेटिनभाषानिबद्धस्य "अन्नपेरेन्ना"-नाम्नःसौसादृश्यं वर्तते। तेषामप्यन्नपेरेन्ना देवी सर्वदाऽन्नं वितरति। यदा किल रोमवासिनस्तेषाम् "आमेन्टाइन" पर्वतं गतवन्तस्तदाऽन्नपेरेन्ना देवी तेभ्यः सर्वक्षणमन्नं दत्तवती। चैत्रमासस्य शुक्लाष्टम्यां यदाऽस्माकमन्नपूर्णापूजा भवति, तदा तेषामपि अन्नपेरेन्ना पूजा प्रचलिता जाता। एवमेव यूरोपेषु चैशियादिमहादेशेषु च शक्तिपूजा प्रचलिताऽभवत्, केवलं भाषास्वेव विशेषः।

### शाकम्भरीनामरूपभेदरहस्यम्

शाकम्भरी शताक्षी सा सैव दुर्गा प्रकीर्तिता।
विशोका दुष्टदमनी शमनी दुरितापहा॥
उमा गौरी सती चण्डी कालिका साऽपि पार्वती॥१५॥

तथाहि––सा शाकम्भरी देवी "शताक्षी"नाम्ना "दुर्गा"नाम्ना च कथ्यते। सा देव्यानन्दमयी दुष्टदैत्यदानवानां दमनकारिणी। पापतापनाशिनी विपत्तारिणी च। सैव उमा गौरी सती चण्डी पार्वती कालिका चेति नाम्ना प्रसिद्धा एका अद्वितीया पराशक्तिश्च कार्यभेदेन विभिन्नं नाम रूपञ्च बिभर्ति। तदुक्तं **देवीभागवते**,––

सा नित्या सर्वदैवास्ते देवकार्यार्थसिद्धये।
नानारूपा त्वेकरूपा जायते कार्यगौरवात्॥
यथा नटो रङ्गगतो नानारूपो भवत्यसौ।
एक रूपस्वभावोऽपि लोकरञ्जनहेतवे॥
तथैषा देवकार्यार्थमरूपाऽपि स्वलीलया।
करोति बहुरूपाणि निर्गुणा सगुणानि वै॥
कार्यकर्मानुसारेण नामानि प्रभवन्ति हि।
धात्वर्थगुणयुक्तानि गौणानि सुबहुन्यपि॥

तथाहि—सा नित्या सदैव चैकरूपेणावस्थिता। किन्तु एकरूपैव सा देवानां कार्यसिद्ध्यर्थं कर्मगौरववशतो नानारूपेणाविर्भूता भवति। रङ्गालये स्थितो नटो यथा एकरूपाऽपि लोकरञ्जनहेतवे नानारूपाणि बिभर्ति, तथैव सा गुणातीताऽरूपापि देवकार्यार्थं स्वलीलया सत्त्वादिगुणमयं विविधं रूपं गृह्णाति। करणीयकर्मानुसारेण धात्वर्थगुणयुक्तानि गौणानि मुख्यानि च बहुविधानि तदीयानि नामान्युल्लिखितानि सन्ति।

"सैव दुर्गा प्रकीर्तिता"—शताक्षीमूर्त्या दुर्गामूर्तितो भेदाभावाच्छाकम्भरी-पूजाविधिमेव तत्रातिदिशती"ति (गुप्तवती)।

भगवती शाकम्भरी कार्यकर्मानुसारेण शताक्षी दुर्गादेवीत्यभिहिता भवति। **चण्डीमन्त्रे** (११।४६-५०)

तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम्।
दुर्गादेवीति विख्यातं तन्मे नाम भविष्यति।। इति।

तत्रैव शाकम्भरीरूपावतारेऽहं दुर्गमनामकं महासुरं वधिष्यामि, तेन चाहं "दुर्गा" देवीति नाम्ना भविष्यामि।

"विशोका"—भगवती सर्वशोकातीता आनन्दमयी। यः साधक आनन्द-मयीं जानाति, सोऽप्यानन्दमयो भवति। उक्तञ्च श्रुतौ,—

"रसो वै सः रसं ह्येवायं लब्ध्वा आनन्दीभवति एष ह्येवानन्दयति।"
(तैत्तिरीयोपनिषद् २।७)

तथाहि—सा रसरूपा। अयं जीवो रसस्वरूपं प्राप्य आनन्दमयो भवति। सा एव जीवायानन्दं ददाति। रसश्च आनन्दघनीभूतावस्था। तदुक्तं सुरेश्वराचार्यकृत**दीपिकायाम्**—

रसः सारोऽमृतं ब्रह्म आनन्दो ह्लाद उच्यते।
निःसारं तेन सारेण सारवल्लक्ष्यते जगत्।।

"रसः" सारः, अमृत्, आनन्द, आह्लादश्चेति कथ्यते। ब्रह्मस्वरूपः। ब्रह्मणो रसो वा सारस्वात् निःसारमिदं जगत् सारवत् प्रतिभाति।

"शङ्करानन्दोक्तं"—"रस आनन्दद्रवः स्वयंप्रकाशमानानन्दः।" रसो ह्यानन्दस्य द्रवो निर्यासो वा स्वयंप्रकाशमानानन्दः।

"दुष्टदमनी"—दुष्टदानवानां दमनमेव कर्मास्या इति दुष्टदमनी दुष्टदमनकारिणी। देवीसूक्ते जगदम्बाऽवदत्,—

अहं रुद्राय धनुरातनोमि,
ब्रह्मद्विषे शरवे हन्तवा उ
अहं जनाय समदं कृणोमि।

तथाहि—ब्रह्मद्वेषी ब्रह्महिंसको योऽसुरस्तस्य वधार्थमहं रुद्रधनुषि ज्यासंयोगं करोमि। सज्जनानां रक्षार्थं संग्रामं करोमि। उक्तञ्च **चण्डीमन्त्रे** शक्रादिस्तुतौ,—

"दुर्वृत्त-वृत्त-शमनं तव देवी शीलम्।" (४।२१)—

हे देवि! दुर्वृत्तानां दुष्कृतिदमनमेव तव स्वभावः। दुष्टदानवदमनार्थं देवी युगे युगेऽवतीर्णा भवति। देव्येतत् स्वयमेव श्रीमुखेनाङ्गीचकार।

इत्थं यदा यदा बाधा दानवोत्था भविष्यति।
तदा तदावतीर्याहं करिष्याम्यरिसंक्षयम्॥११।५५॥

## सत्यवताररहस्यम्

**देवीभागवते** सप्तमस्कन्धे ऊनत्रिंशत्तमे त्रिंशत्तमे चाध्याये, जगन्मातुः सतीरूपावतारस्य कारणं वर्णितमेतद् यथा, मणिद्वीपनिवासिनी परात्परा ब्रह्मरूपिण्याद्या शक्तिर्भुवनेश्वरी महालक्ष्मीर्देवी ब्रह्मणे सरस्वतीं विष्णवे लक्ष्मीं शिवाय गौरीञ्च (प्राधानिकरहस्योक्तरूपेण) प्रददौ। ते च तदवधि स्वस्वशक्तियोगेन सृष्टिकार्यादि सर्वं निर्वाहयन्ति। एकदा ब्रह्मणो वरेण वरदृप्तै"हलाहल"नामकदानवगणैः सह हरिहरयोर्महाघोरतरः संग्रामोऽभूत्। हरिहरौ च तान् दानवगणान् संग्रामे पराजित्याभिमानवशेनाचिन्तयतां यत्तयोः पराक्रमेणैव दानवगणा निहता इति। वस्तुतस्तु हरिहरौ तयोः स्वस्वशक्ति-लक्ष्मीगौरीभ्यामेव तान् दानवान् पराजितवन्तौ निहतवन्तौ चेति तौ नाजानीताम्। ततः सानन्दं गृहमागत्य स्वस्वशक्तिसमीप आत्मश्लाघां कुर्वतोस्तयोस्तदभिमानमवगम्य ते लक्ष्मीगौर्यौ स्मितमकुरुताम्। तद्दृष्ट्वा कुपिताभ्यां हरिहराभ्यां दुर्वाक्यप्रयोगेण निर्भर्त्सिते लक्ष्मीगौर्यौ हरिहरौ परित्यज्यान्तर्हिते अभवताम्। ततः स्वस्वशक्तिपरित्यक्तौ हरिहरौ शक्तिहीनौ तेजोहीनौ विचेतनौ च स्वस्वकार्यपरिचालनाशक्तौ सञ्जातौ। उक्तंच **शक्तिसङ्गमतन्त्रे**, ताराखण्डे (२४।४३-४७)—

नारी त्रैलोक्यजननी नारी त्रैलोक्यरूपिणी।
नारी त्रिभुवनाधारा नारी देहस्वरूपिणी॥
पुरुषञ्च स्त्रियो रूपं यत्किञ्चिद्रूपमुत्तमम्।
नारीचक्रं सर्वरूपं यत्किञ्चिज्जगतीगतम्॥
न च नारीसमं सौख्यं न च नारीसमा गतिः।
न नारीसदृशं भाग्यं न भूतं न भविष्यति॥

भगवद्गीतायामपि पराऽपरा प्रकृतिरेव जगदित्युक्तम्। अतएव कदापि शक्त्यवमानना न कार्या।

ततो ब्रह्मणा ध्यानबलात्परिज्ञातं यच्छक्त्यवमाननातो जगदम्बायाः क्रोधवशत एवैतदनर्थो जात इति। तदोपायान्तरमनवलोक्य ब्रह्मा स्वयमेव हरिहरकार्यं परिचालितवान्। तपस्याचरणानवकाशाद् ब्रह्मा दक्षमनुसनकादि–मानसपुत्रान् आहूय यथा हरिहरयोः पुनः शक्तिलाभो भवेत्, तदर्थं तान् पराशक्त्याराधनायादिदेश। ततो दक्षादयो मानसपुत्रा ब्रह्मणो निर्देशाद्धिमालयं गत्वा कस्मिंश्चिन्निर्जने स्थाने समवेताः सन्तो "मायावीज"योगेन भुवनेश्वरीमन्त्रं जपन्तो लक्षवर्षाण्यत्यवाहयन्। तदुक्तं **देवीभागवते** सप्तमस्कन्धे त्रिंशाध्याये,—

ध्यायतां परमां शक्तिं लक्षवर्षाणि चेलिरे।
ततः प्रसन्ना सा देवी प्रत्यक्षं दर्शनं ददौ ॥२॥
पाशांकुशवराभीति-चतुर्भुजा त्रिलोचना।
करुणारससम्पूर्णा सच्चिदानन्दरूपिणी ॥३॥

तथाहि—परमशक्तिं ध्यायतां दक्षादीनां लक्षवर्षेष्वतीतेषु देवी सुप्रसन्ना सती तेभ्यो दर्शनमदात्। तेऽपि तां चतुर्षु भुजेषु पाशांकुशवराभीतिमुद्राधारिणीं त्रिनयनां करुणारसैः परिपूर्णां, सच्चिदानन्दरूपिणीम् अपश्यन्। ततश्च सनकादिब्रह्मतनया जगन्मातरं भुवनेश्वरीदेवीं प्रणिपातेन प्रणम्य हरिहरयोऽर्थे तयोः शक्तिलाभवरं प्रार्थितवन्तः। दक्षप्रजापतिश्च विशेषेण पुनरिदंप्रार्थयति स्म, देवी मम गृहे मम कन्यारूपेण जन्मग्रहणं कृत्वा मां कृतार्थं कर्तुमर्हतीति।

तदनन्तरं देवी ब्रह्मतनयानवदत्,—"तयोर्हरिहरयोरेवांशभूतयोः शक्तिद्वयोरवमाननया तावशेषदुर्गतिं प्राप्तवन्तौ, परं यदि पुनरपि कदापि शक्त्यवमाननां न कुरुतस्तदा (यथाकालं पुनस्ते शक्तिद्वयं लप्स्येते)" इति। दक्षप्रजापतिमप्यवदत्,—"तयोः शक्त्योर्मध्ये लक्ष्मीःक्षीरोदसागरे गौरी च तव गृहे जनिष्यते, हरिहरौ च यथाकालं ते लप्स्येते" इति।

अथ कियत्काले व्यतीते कस्यांश्चित्पुण्यतिथौ परशक्तिः परमतेजःस्वरूपिणी देवी भगवती दक्षप्रजापतिगृहेऽवतीर्णाऽभवत्। तदुक्तं **देवीभागवते**—

मङ्गलायां सुजातायां जातं सर्वत्र मङ्गलम्।
तस्याः नाम सतीं चक्रे सत्यत्वात्परसंविदः ॥(७।३०।२२)॥

जीवानां जन्ममृत्युनिवारिण्या दाक्षायणीदेव्या जन्मग्रहणानन्तरं सर्वस्थानेषु मङ्गलं जातम्। सा सत्या सनातनी ब्रह्मरूपिणीति प्रजापतिर्दक्षस्तस्याः "सती"ति नामकरणमकरोत्।

अनन्तरञ्च यथाकालं दक्षः शिवशक्ति सतीं शिवकरे समर्पितवान्। इतश्च देवाः समुद्रमन्थनकाले लक्ष्मीं प्राप्य वैकुण्ठपतये विष्णवे तां समर्पितवन्तः।

शाकम्भरीं स्तुवन् ध्यायन् जपन् संपूजयन्नमन्ः
अक्षय्यमश्नुते शीघ्रमन्नपानामृतं फलम्।।१६।।

तथाहि—शाकम्भरीदेव्याः स्तव-ध्यान-जप-पूजा-नमस्कारादीनि कुर्वन् साधकः शीघ्रमक्षय्यमन्नपानम् अमृतरूपं फलञ्च भुङ्क्ते।

"अन्नपानामृतं फलम्"—भगवत्याः शाकम्भरीदेव्या उपासनया साधक इहकाले अक्षयान्नपानादिरूपामैहिकसमृद्धिं परकाले च मोक्षमाप्नोति। श्रीश्रीचण्डीस्तवे मेधा ऋषिः सुरथं नाम राजानमकथयत्,—

तामुपैहि महाराज शरणं परमेश्वरीम्।
आराधिता सैव नृणां भोगस्वर्गापवर्गदा।।(१३।५)।।

हे महाराज! स्तव-ध्यान-जप-पूजा-नमस्काररूप-पञ्चाङ्गोपासनया देव्याः शरणं प्रपद्यताम्। सा आराधिता चेत् साधकाय भोगं मोक्षञ्च ददाति।

"शाकम्भरी-पीठम्"—साहारानपुरस्योत्तरे कियद्दूरे पार्वत्यप्रदेशे निर्झरा तीरे शाकम्भरीदेव्याः पीठस्थानं विद्यते। तत्राश्विनशुक्लचतुर्दश्यां पूजामहोत्सवादिकं भवति। तत्काले तत्र "सराल" नामकमेकं सुखाद्यं भूमध्ये किञ्चित्खननेन लभ्यते।

## दुर्गापीठ-रहस्यम्

श्रीश्रीसप्तशत्यां नाम चण्डीस्तवे उक्तं भगवती शाकम्भरी दुर्गमनामकं महासुरं हत्वा "दुर्गादेवी"ति नाम्ना प्रसिद्धाऽभवत्। साहारानपुरतोऽदूरवर्तिस्थाने "देओवनं" "देवीवनं" वा क्षेत्रम्। तत्र दुर्गमनाशिनी दुर्गादेव्या अति प्राचीनं मन्दिरं विराजते। देवीवनं तु मुसलमानशासनकाले "देओवन"-नाम्ना परिवर्तितमासीत्, अद्यापि तन्नाम्नैवोक्तस्थानं प्रसिद्धं वर्तते। मन्दिरसम्मुखे

देवीकुण्डं नाम सरो वर्तते। तत्तीरे देवीकुण्डनामक एकः संस्कृतविद्यालयो-ऽवस्थितः। तत्र देओवन-दुर्गापीठेऽद्यापि चैत्र-शुक्लचतुर्द्दश्यां सप्ताहव्यापि-पूजामहोत्सवादिकं प्रारभते।

## भीमावतार-रहस्यम्

भीमापि नीलवर्णा सा दंष्ट्रा दशनभासुरा।
विशाल लोचना नारी वृत्तपीनपयोधरा ॥१७॥
(मूर्तिरहस्ये)

सा भीमा देवी नीलवर्णा, तस्या दशनसमुहश्च दशनकर्मणा समुज्ज्वलः। सा नारी विशालनयना वर्तुलस्थूलपयोधरविशिष्टा। श्रीश्रीचण्डीस्तवे ११।५१।५२ मन्त्रेषु भीमादेव्यवतारो वर्णितः।

"भीमास्थानम्"—महाभारते वनपर्वणि तीर्थयात्रायां भीमास्थानस्य तत्रस्थयोनिकुण्डस्य चोल्लेखो वर्तते। तच्च पञ्चनद(पाञ्जाब)स्य समीपे-ऽवस्थितम्। युधिष्ठिरादयः पञ्चपाण्डवास्तत्तीर्थदर्शनं कृतवन्तः।

अथ पञ्चनदं गत्वा नियतो नियताशनः।
पञ्चयज्ञानवाप्नोति क्रमशो येऽनुकीर्तिताः॥
ततो गच्छेत राजेन्द्र भीमायाः स्थानमुत्तमम्।
तत्र स्नानात्तु योन्यां वै नरो भरतसत्तम॥
देव्याः पुत्रो भवेद्राजन् रत्नकुण्डलविग्रहः।
गवां शतसहस्रस्य फलं प्राप्नोति मानवः॥

तथाहि—संयतचित्तो मिताहारः सन् पञ्चनदं गतो नरः क्रमानुकीर्तितं पञ्चयज्ञफलं लभते। तस्माद् भीमादेव्या उत्तमं स्थानं गच्छेत्। तत्र च योनिकुण्डे स्नात्वा साधको रत्नकुण्डलधारी देवीपुत्रो भवेत्। शतसहस्रगोदान-फलञ्च लभते। पद्मपुराणस्य स्वर्गखण्डे भीमादेव्या उल्लेखोऽस्ति। ख्रीष्टीय-सप्तमशताब्द्यां सुप्रसिद्धचैनिकपरिव्राजक इउयेनसाङाख्यो गान्धारराज्य-स्याधुना राओयालपिण्डि-पेशोयाराञ्चलस्य मध्यस्थाने प्रोक्तप्राचीनतीर्थ-परिदर्शनानन्तरं यल्लिखितवान् तस्माद् भीमादेव्या माहात्म्यं तत्तीर्थस्य गुरुत्वं जनप्रियत्वञ्च सुस्पष्टं परिज्ञायते।

उत्तरपश्चिमसीमान्तप्रदेशस्य पेशोयारान्तर्गत-करमर-पर्वतशृङ्गे महेश्वर-पत्न्या भीमादेव्या मन्दिरमस्ति। तत्र महाघोरनीलवर्णाया भीमादेव्या स्वय-

भूप्रस्तरमूर्तेर्दर्शनार्थं भारतवर्षस्य सर्वप्रदेशेभ्यस्तीर्थयात्रिणो जनाः समागता भवन्ति। विश्वासिना देवीभक्तेन सप्ताहकालं तत्रोषित्वा व्रताद्याचरणं कुर्वता देवीसमीपे वरः प्रार्थ्यते चेद्देवी कामनां पूरयति भग्यवशात्कदाचिद्दर्शनदानमपि करोति। तत्पर्वतपाददेशे शिवमन्दिरमप्यस्ति। तत्रापि पाशुपतयात्रिणः समवेताः सन्तो भगवन्तं शिवमर्चयन्ति। एतेन सुस्पष्टमिदं प्रतीयते यच्छक्तिपीठेनैव सह भैरवस्य सम्बन्धः सप्तमशताब्द्याः पूर्वतोऽप्यासीत्।

**भीमाया नामरूपभदः**

चन्द्रहासञ्च डमरुं शिरःपात्रञ्च विभ्रती।
एकवीरा कालरात्रिः सैवोक्ता कामदा स्तुता॥(१८)॥

तथाहि—भीमा देवी चतुर्षु भुजेषु चन्द्रहासनामकं खड्गं, डमरुं, नरमुण्डं, पानपात्रञ्च विभर्ति। सा "चैकवीरा" "कालरात्रि" इचेतिनामभ्यामभिहिता। सा स्तुता पूजिता चेत् कामनासिद्धिर्जायते।

"एकवीरा"—स्कन्दपुरानस्य माहेश्वरखण्डान्तर्गत-कुमारिकाखण्डे ऊनचत्वारिंशत्तमाध्याये एकवीरादेव्या विवरणं दृश्यते। सा "अण्डकटाह" नामकस्य पातालप्रदेशस्याधिष्ठात्री देवी। एकवीरादेव्या नामान्तरं "कपालीशा" इति। पाताले यत्रानन्तदेवो विराजते, यन्मस्तके समग्रमिदं विश्वं सर्षपवद् विद्यमानम् तन्निम्ने अण्डकटाहः, तत्र एकवीरा देवी अधिष्ठिता। तदुक्तम्—

तदधोऽण्डकटाहश्च एकवीराऽस्ति तत्र च।
तदधोऽण्डकटाहोऽथ, कोटिमात्रस्तथाऽपरः॥
देवीयुक्ता कपालीशा दण्डहस्तेन चापि सा।
देवीनां कोटिकोटिभिः संवृता तत्र पालिनी॥
सङ्कर्षणस्य निःश्वासप्रेरितो दाहकोऽनलः।
कालाग्नि प्रेरयत्येव कल्पान्ते दहते जगत्॥
(३९।२८।३२-३३)

तथाहि—अण्डकटाहस्य गभीरतमप्रदेशे एकवीरा देवी विराजमाना। अस्याश्च नामान्तरं कपालीशा। सा हि दण्डधारणपूर्वकं कोटिकोटिदेवीगणपरिवृता तत्प्रदेशं पालयति। कल्पान्ते तत्रस्थसङ्कर्षणदेवस्य निःश्वासवायुना परिचालितेन सता कालाग्निं संवर्ध्य तन्महाग्नौ जगद् दग्धं करोति च।

"कालरात्रिः"––देवीभागवते पञ्चमस्कन्धस्य त्रयोविंशाध्याये उक्तम्–– पार्वतीदेहकोषतो निर्गमनादम्बिकादेवी त्रिलोकवासिभिः सर्वैः "कौषिकी"ति कीर्त्यते। कौषिक्या निःसरणान्तरं परिणामवशतः पार्वती महाघोरकृष्णवर्णा भूत्वा "कालिके"त्यभिहिताऽभवत्। तस्या महाभयङ्करकृष्णवर्णमूर्तिदर्शनाद् दैत्यानामपि महाभयं संजातम्। अत एवैषा देवी सर्वमनोरथपूरयित्री "कालरात्रि"रिति नाम्ना विख्याता।

पार्वत्यास्तु शरीराद् वै निःसृता चम्बिका यदा।
कौषिकीति समस्तेषु ततो लोकेषु गीयते।।
निःसृतायां तु तस्यां सा पार्वती तनुव्यत्ययात्।
कृष्णारूपाथ सञ्जाता कालिका सा प्रकीर्तिता।।
मसिवर्णा महाघोरा दैत्यानां भयवर्धिनी।
कालरात्रीति सा प्रोक्ता सर्वकामफलप्रदा।।
(५।२३।२-४)

कालरात्रिध्यानम्––

एकवेणी जपाकर्णपुरा नग्ना खरस्थिता।
लम्बोष्ठी कर्णिकाकर्णी तैलाभ्यङ्गशरीरिणी।।
वामपादोल्लसल्लोहलताकण्टकभूषणा।
वर्धन्मूर्धध्वजा कृष्णा कालरात्रिर्भयङ्करी।।

कालरात्रिदेवी एकवेणीधारिणी, जवाकुसुमकुण्डला, नग्ना गर्दभोपर्युपविष्टा लम्बमानोष्ठाधरा कर्णे कर्णभूषणशोभिता तैलाक्तशरीरा च। तस्या वामपादं लौहलताकण्टकैर्विभूषितं, मस्तके ध्वजं धारयति, कृष्णवर्णा भयङ्करी कालरात्रिः।

## कालरात्रिदेव्याः प्रलयनृत्यम्

योगवाशिष्ठरामायणस्य निर्वाणप्रकरणे उत्तरार्धे एकाशीतितमसर्गे भगवत्याः कालरात्रिदेव्या अपूर्ववर्णना दृश्यते। महर्षिर्वशिष्ठदेवः समाधौ भगवता रुद्रदेवेन सह कालरात्रिदेव्या अतिभीषणं प्रलयनृत्यं दृष्ट्वा श्रीरामचन्द्रसमीपे विवृत्यावर्णयत्,––अनन्तमहाकाशे नृत्यतः संहाररूपिणो रुद्रदेवस्य देहाद्देवी कालरात्रिराविर्भूय तस्य पुरोभागे नृत्यमकरोदिति।

कृष्णा कृशा शिरालाङ्गी जर्जरा वितताकृतिः।
ज्वलाकुलनला लोलवनसम्भारशेखरा॥
भिन्नाञ्जनतमःश्यामा यामिनी चाकृतिं गता।
तमः श्रीर्देह्युक्तेव साकारेवाम्बरद्युतिः॥
अतिदीर्घा करालास्या नभो मातुमिवोद्यता।
दीर्घजानुभुजभ्रान्त्या मातुकामेव दिंमुखम्॥

सा देवी कालरात्रिः कृष्णवर्णा कृशाङ्गी, तस्या सर्वाङ्गं शिरासमूहैः परिव्याप्तम्। सुवृहद्जीर्णशरीरायास्तस्या मुखविवरादनवरतमग्निशिखा विनिर्गच्छति, सा वसन्तकालीनकाशकुसुमादि वनश्रेणीवत् पुष्पपल्लवसौन्दर्यशालिशेखरेण शोभमाना। मनसि सम्भाव्यते यत् कज्जलप्रभ-प्रगाढ़ान्धकारे श्यामवर्णा कृष्णरजनी मूर्ति धारयति, तथा अन्धकारलक्ष्मीश्च मूर्तिपरिग्रहार्थमाकाशस्य नीलवर्णेनैव सावयवा भवति। करालवदनातिदीर्घाकृतिरेषा रमणीमूर्तिराकाशं परिमापयितुमिवोर्ध्वं उत्थितेति। अस्या दीर्घभुजं दीर्घजानुदेशञ्च दृष्ट्वा मनसि भवति यद्दिमण्डलं परिमापयितुमेषा कामिनी दण्डायमाना इति।

विश्वरूपमयार्कादिशिरःकमलजालकैः।
कृतमालाऽमलालोकवातवह्निमयाञ्चला॥१५॥
प्रलम्बकर्णालुलितनागा नृशवकुण्डला।
शुल्कतुम्बीलताष्ठीला दीर्घा लोलासितस्तनी॥१६॥
कालरात्रिरियं सेति भया नमितदेहिका।
काली भगवती सेयमिति निर्णीतसज्जना॥२४॥

तथाहि—सा देवी सूर्यादिदेवदानवसमूहानां नानावर्णमस्तकपद्मैर्ग्रथितं माल्यं कण्ठे धारयति। तस्या वस्त्राञ्चलं वायुसन्धुक्षितशिखायुक्ताग्निसंयोगेन समुज्ज्वलम्। तस्याः प्रलम्बितकर्णकूहरे नागा दोदुल्यमानाः। सा च मृतनृशरीराभ्यां कर्णकुण्डले विदधाति। तस्याः कृष्णवर्णं सुवृहत् स्तनद्वयं विशालाऽलाबुवद्दोदुल्यमानमुरुप्रदेशं यावल्लम्बमानमस्ति। एतादृग्लक्षणेनाहं तां "कालरात्रि"रिति जानामि। इममेव देवीं सज्जना "भगवती काली" ति निर्णयन्ति।

तस्यां भ्रामन्त्यां चतुरं चन्द्रार्कदिनरात्रयः।
नखाग्रलेखा लोकान्तर्भाति काञ्चनसूत्रवत्॥५८॥
विभान्ति सृष्टयस्तस्या घर्माणि जलजालिकाः।
इव नीहार-हारिण्या नीलवारिदवाससः॥५९॥

भगवती कालरात्रिर्नृत्यपरायणा भूत्वा चतुर्दिक्षु भ्राम्यति। तन्नृत्यसमये हस्तसञ्चालनात्तस्या नखाग्रतो या आभा विस्फुरिता, तन्मध्ये दिवा-रात्रि-चन्द्र-सूर्य-प्रभृतिवस्तुनिचयः काञ्चनसूत्रवत् प्रभां विस्तारयति। तत्काले मेघनिःसृतवारिधाराः तस्या नीलाम्बरधारिण्या नीहारहारशोभिन्याः कालरात्रि-देव्या घर्मविन्दुरूपेण शोभन्ते।

खमेव तस्याः सम्पन्नं कवरी-मण्डलं वहत्।
पातालं चरणौ भूमिरुदरं बाहवो दिशः ॥६०॥
द्वीपाब्धयोऽन्त्रवलयः पार्श्वकाः सर्वपर्वताः।
प्राणापानावली दोलाः पवनः स्कन्धशालिकाः ॥६१॥

असीममाकाशमेव तस्याः केशकलाप-कवरी, पातालं चरणौ, पृथिव्युदरम्, चतुर्दिशो हस्तमिति च सम्भाव्यते। समुद्रमध्यस्थितद्वीपसमूहस्तस्यास्त्रिबलिः, पर्वतश्रेणी पार्श्वदेशः, आकाशरूपाया अट्टालिकाया दोदुल्यमानप्रवहप्रभृतयः प्राणापानादयश्च वायवस्तस्या दोलेत्यनुमीयते।



तदानुभूतं नृत्यन्त्यास्तस्या वपुषि विस्तृते।
हिमवन्मेरुसह्याद्यैर्दोलितमभ्रमद्रिभिः ॥६२॥
तरदद्रिगुलुच्छास्ता वलयन्त्या तया स्रजः।
पुनः कल्पान्त आरब्ध इव ताण्डवहेलया ॥६३॥

सा यदा नृत्यति, तदा दृश्यते हिमालयसुमेरुसह्याद्रिप्रभृतिभूधरास्तस्याः शरीरे आन्दोलिता भवन्ति। पर्वतरूपमञ्जरीसमन्विता या ब्रह्माण्डमालाः सा परिधत्ते, नृत्यसमये ताः सर्वा आन्दोलिता भवन्ति, तेन इदं प्रतिभाति यत्सा नृत्यच्छलेन पुनर्जगत्प्रलयमारभत इति।

डिम्बं डिम्बं सुडिम्बं पच पच सहसा झम्यं झम्यं प्रझम्यम्,
नृत्यन्ति शब्दवादैः स्रजमुरसि शिरः केशरं तार्क्ष्यपक्षैः ॥
पूर्णं रक्तासवानां यममहिषमहाशृङ्गमादाय पानौ,
पायाद्वो वन्द्यमानः प्रलयमुदितया भैरवः कालरात्र्या ॥१०२॥

सा कालरात्रिर्मस्तके गरुड़पक्षविनिर्मितशिखाविभूषणा, कण्ठे मुण्डमाला-शोभिता, रक्तासवैः परिपूर्णा, यमवाहनमहिषस्य विशालं शृङ्गद्वयं हस्ताभ्यां विधृत्य "डिम्बं डिम्बं सुडिम्बं, पच पच झम्यं झम्यम्" इत्याकारतालशब्देन सह नृत्यति। अपि च क्षणे क्षणे सा नृत्यपरायणा भैरवं प्रति दृष्टिं निक्षिपति।

तया प्रलयानन्दनिमग्नया भगवत्या कालरात्रिदेव्या सह वर्तमानो भगवान् रुद्रदेवो युष्मान् रक्षतु।

### भ्रामरी-रहस्यम्

तेजोमण्डलदुर्धषा भ्रामरी चित्रकान्तिभृत्।
चित्रानुलेपना देवी चित्राभरणभूषिता।
चित्रभ्रमरपाणिः सा महामारीति गीयते।।१६।।
(**मूर्तिरहस्ये**)

तथाहि--भ्रामरी देवी दुःसहनीयतेजःपुञ्जशालिनी, विचित्रकान्ति-धारिणी, विचित्रालङ्कारावलीभूषिता च, सा हस्ते विचित्रभ्रमरसमूहधारण-कारिणी, महामारीनाम्ना प्रसिद्धा च।

"चित्रभ्रमरपाणिः"--हस्ते बहुवर्णविशिष्टभ्रमरधारिणी। स च भ्रमरो जीवरूपः, तेन च सर्वे जीवास्तदधीनाः सन्तीति बोध्यम्। तदुक्तं **भुवनेश्वरी-संहितायाम्**--

"द्विरेफा जीवरूपाः स्युस्तया हस्ते धृताः सदा।
जीवाधीशा ततः प्रोक्ता भ्रामरी लोकसुन्दरी।।"

सा हस्ते अनेकवर्णविशिष्टभ्रमरसमूहं धारयति। ते च भ्रयरसमूहा जीवानां प्रतीकरूपाः। एतेन सर्वे जीवास्तदधीना इति ज्ञाप्यते। भ्रामरीदेव्या अवतारवृत्तान्तः श्रीश्रीचण्डीमन्त्रे (११।५३-५४) उक्तः।

देवी भ्रमरवासिनी"--कल्लनकृतराजतरङ्गिणीग्रन्थस्य तृतीयतरङ्गे काश्मीरराजरणादित्यस्य (षष्ठशताब्दे) पूर्वजन्मवृत्तान्तप्रसङ्गं भ्रमर-वासिनीदेव्या एकं मनोरममाख्यानं वर्णितम्। तदत्र प्रसङ्गादुक्तम्।

पूर्वजन्मनि राजा रणादित्यो द्यूतकर आसीत्। एकदा धूर्ता द्यूतकराः द्यूतक्रीड़या तस्य सर्वस्वमहरन्। तदा स जीविते निराशोऽभवत्। तेन च ज्ञातं यद् विन्ध्याचले देवी भ्रमरवासिनी नित्यमेव तिष्ठतीति।

अबन्ध्यदर्शनां विन्ध्ये देवीं भ्रमरवासिनीम्।
द्रष्टुमैच्छद् वराकाङ्क्षी निर्व्यपेक्षः स्वजीविते।।
(**राजतरङ्गिण्याम्** ३।३९४)

तथाहि—स जीवनाशां परित्यज्य स्वाभीष्टसिध्यर्थं विन्ध्यपर्वते भ्रमरवासिनीदेवीं द्रष्टुमभिलषितवान्। यतस्तस्या दर्शनं कदापि निष्फलं न भवेदित्याशयेन स दृढतरं सङ्कल्पमकरोत्।

"भ्रामरीदर्शनयात्रा"—द्यूतकरो विन्ध्याचले देव्या पूर्वत एव परिज्ञातः तत्र गन्तुकामस्य सर्वः पन्थाः सुखातिक्रम्यः, परमन्त्यं योजनपञ्चकमतीव दुर्गमम्। यतस्तस्मिन् पथिमध्ये वज्रपुच्छ-शंकुपुच्छप्रभृतिनानाजातीय-भीषण-भ्रमरसमूहा न्यवसन्। तेषां दंष्ट्राक्षतः कोऽपि जीवितुं न शक्नोति। बुद्धिमता तेन द्यूतकरेण प्रथमं लौहनिर्मितवर्मणा सर्वशरीरमावृत्य तदुपरि महिषचर्मनिर्मितं वर्म परिधाय तदुपरि गोमयमिश्रितमृत्तिकाप्रलेपञ्च दत्त्वा आतपतापेन विशुष्कं कृत्वा च स्वशरीरं दुर्भेद्यदुर्गवत् कृतम्। ततस्तेन स्थिरसङ्कल्पं कृत्वा-निर्भयं भ्रमरवासिनीदर्शनार्थं प्रस्थितम्।

"भ्रमरवाहिन्या आक्रमणम्"—अथ यस्मात् स्थानात्तच्छेषपञ्चयोजनपथ आरब्धस्तत्र स्थित्वा स द्यूतकरोऽपश्यत् भीषणान्धकारपूर्णं कञ्चिद् गुहापथम्, अबुध्यत च स एव तस्य गन्तव्यपथ इति। ततश्चैकान्तभक्त्या भ्रमरवासिनीचरणं चिन्तयन् यदा स द्यूतकरो गुहाभ्यन्तरं प्रविष्टस्तदाऽसंख्येया भ्रमराः स्वस्ववासस्थानान्निर्गत्य तम् आक्रामन्ति स्म, तस्य सर्वगात्रे पतित्वा गोमयमृत्तिकाप्रलेपोपरि पुनः पुनरदशंश्च। एवमपि स द्यूतकरो योजनत्रयं पन्थानमतिक्रान्तवान्। परन्तु तस्य प्रथमावरणं मृत्तिकाप्रलेपः क्षयं गतः। अतः परं भ्रमरास्तस्य द्वितीयावरणे महिषचर्मवर्मणि मुहुर्मुहुर्दंशनं कृत्वा भयङ्करं शब्दविशेषमुत्पादितवन्तः। एवंभावेन चतुर्थयोजनस्यार्धपथं गत्वा द्यूतकरः स्पष्टमेवान्वभवद् यत्तदानीं भ्रमरा महिषचर्मावरणं भित्त्वा लौहवर्मोपरि दंशनं कर्तुमारमन्त इति। इदमुपलभ्य सोऽतिद्रुतमधावत्। तदनन्तरं तस्य लौहवर्मापि वज्रपुच्छभ्रमरसमूहदंशनेन गात्राद् भूपातितमभवत्।

गव्यूतिमात्रमासन्ने देवीधामानि धैर्यवान्।
धून्वन् कराभ्यां मधुपान् धावति स्म स धीरधीः॥
अथ स्नाय्वस्थिशेषाङ्गो लूनमांसः षड़ंघ्रिभिः।
कराभ्यामक्षिणी रक्षन् देव्यायतनमासदत्॥
(**राजतरङ्गिणी** ३।४०७-८)

तथाहि—यदा देवीस्थानं प्राप्तुं क्रोशद्वयमात्रःपन्था अवशिष्यते स्म. तदानीं धैर्यशाली स द्यूतकर उभाभ्यां हस्ताभ्यामनवरतं भ्रमरकुलं विताड़यन्नतिवेगेन प्रधावति स्म। अस्यां परिस्थितौ भ्रमरा द्रुतं तस्य गात्रमांसं

खण्डयित्वा भूमौ पातितवन्तः केवलं स्नायुयुक्तास्थिमात्रसारं कलेवरमवशिष्टमासीत्। तदा द्यूतकरो हस्तद्वयेन चक्षुर्द्वयं समाच्छाद्य कथमपि देवीस्थानं प्राप्तो भ्रमरदंशनाच्च मुक्तोऽभवत्।

प्रशान्ते भङ्गसम्पाते प्रकाशमवलोकयन्।
स देव्याः पादयोरग्रे पपातोद्भ्रान्तजीवितः॥
स्तोकावशेषप्राणं तं देव्याश्वासयितुं ततः।
अभिरामं वपुः कृत्वा पस्पर्शाङ्गेषु पाणिना॥
दिव्येन पाणिस्पर्शेन तेन पीयूषवर्षिणा।
स क्षिप्रासादितस्वास्थ्यो दिक्षु चिक्षेप चक्षुषी॥
(३।४०९-११)

ततो भ्रमरदंशने प्रशमिते द्यूतकारः समुज्ज्वलमालोकं ददर्श, देव्याश्चरणप्रान्ते पतित्वा च मूर्च्छितोऽभवत्। तदा तं स्वल्पप्राणमात्रमवलोक्य तं पुनर्जीवितं कर्तुं तस्मै मनोरमं देहं दत्त्वा स्वहस्तेन तं देहं मार्जयित्वाऽन्तर्हिताऽभवत्। द्यूतकारश्च तस्या अमृतमयकरस्पर्शनात्तस्मिन्नेव मुहूर्ते पूर्वस्वास्थ्यं लब्ध्वा चतुर्दिक्षु दृष्टिं सञ्चाल्य देवीमप्राप्य तस्याः सिंहासनसमीपे अवस्थाय प्रथमं देव्या यन्मूर्तिमवलोकितवान् अधुना तन्मूर्तिं न दृष्टवान्। परन्तु चतुर्दिक्षु दृष्टिसञ्चालनेन तदुपवनस्य पुष्करिणीतीरे कस्मिंश्चिल्लतागृहे अपूर्वामेकां परमसुन्दरीं पद्मलोचनां दिव्यां रमणीमपश्यत्। स तस्या रूपलावण्यं दृष्ट्वा विमोहितः सन् कामासक्तोऽभवत्। स तामप्सरा इति मत्वा देवीतिज्ञानेन रहितोऽभवत्। परं दयामयी देवी प्रथममेव द्यूतकारमुक्तवती, "हे सौम्य! पथिमध्ये त्वमतीव दुःसहां यातनां प्राप्तवानसि। इदानीं विश्रान्तः सन् सुस्थो भव, पश्चादभिमतं वरं प्रार्थयिष्यसि।"

अनन्तरञ्च "यदेव प्रार्थयिष्यसे, तदेव वररूपेण प्राप्स्यस" इत्यङ्गीकृतवती देवीं दुर्बुद्धिर्द्यूतकारः पत्नीरूपेणैव प्राप्तुमभिलाषं प्रकाशितवान्। यतः सोऽचिन्तयत्,—अस्यां मनोरमायां देव्यां मम पत्नीत्वेन प्राप्तायां सत्यां मे धर्मार्थकामादिसर्वसिद्धिर्भविष्यतीति।

अभ्यधावत् सा दुर्बुद्धे कोऽयं तेऽनुचितो विधिः।
प्रार्थयस्वेतरद् यस्मात्साऽहं भ्रमरवासिनी॥(३।४२३)॥

ततो देवी क्रुद्धा तमभ्यधावदुक्तवती च, "रे दुबुद्धे! कोऽयमयोग्यव्यवहारस्ते! यतोऽहमेव सा भ्रमरवासिनी देवी, ततोऽभिवलाषादस्माद् विरतो भव, वरान्तरं प्रार्थय चे"ति।

देवीं तां जानतोऽप्यस्य नाभूदवहितं मनः।
निरुद्धा वासनाः केन जन्मान्तरनिबन्धनाः ॥(४२४)॥

किमेतत्, तां देवीं ज्ञात्वाऽपि द्यूतकारस्य मनो नावहितमभवत्। जन्मान्तरीणसंस्कारोत्पन्ना वासना केन बाध्यते? अतएवोक्तं सुधीभि "नियतिः केन बाध्यते" इति।

देवी वा भवकान्ता वा भीमा वा शोभनापि वा।
यादृशीं पूर्वमद्राक्षं तादृश्येव भवसि मे ॥(४२७)

त्वं देवी वा भवजाया भवान्यपि वा भवेः अथवा सुन्दरी भयङ्करी वापि भवेः, पूर्वमेवाहं यादृश्या भावनया अद्राक्षम्, तादृश्या भावनायाः पात्ररूपेण ममाग्रे प्रकाशिता भव।

तमित्थं कथयन्तं सा ज्ञात्वा निश्चल निःशलम्।
एवं जन्मान्तरे भावीत्यभ्यधादनुरोधतः ॥(४२८)॥
उत्सहन्ते हि संप्रष्ठुं न दिव्यामर्त्यधर्मिणः।
तद् गच्छ क्रूरसङ्कल्पेत्युक्त्वा सान्तर्दधे ततः ॥(४२९)॥



अथ द्यूतकारवाक्यं श्रुत्वा देवी तं स्थिरसङ्कल्पं ज्ञात्वा, स्वीकारोक्त्याऽकथयद् "वाढ़"मिति,"पर-जन्मनि तव वासना पूर्णा भविष्यति। यतो मर्त्यवासी मनुष्यो दिव्यरमणीं स्प्रष्टुं न शक्नोति। अत एव रे क्रूरसङ्कल्प! अधुना गच्छे" त्युक्त्वा अन्तर्हिताऽभवत्।

अतः परं स द्यूतकारो देव्या सह मिलित्वा सार्थकजन्मलाभाशया प्रयागस्थाक्षयवटाग्रशाखातः पतित्वा प्राणांस्तत्याज।

सोऽजायत रणादित्यो रणरम्भा च सा भुवि।
मर्त्यभावेऽपि या नैव जहौ जन्मान्तरस्मृतिम् ॥

असौ द्यूतकार एव "काश्मीरराजरणादित्य"रूपेण जन्मग्रहणमकरोत्। असौ भ्रमरवासिनी च पृथिव्यां तस्य पत्नी "राज्ञी रणरम्भा" भूत्वाऽऽविरभूत्। सा च मनुष्यभावेन स्थिताऽपि पूर्वजन्मस्मृतिं नात्यजत्।

इत्येता मूर्तयो देव्या व्यख्याता वसुधाधिप।
जगन्मातुश्चण्डिकायाः कीर्तिताः कामधेनवः ॥२०॥

मेधा ऋषिः सुरथमकथयत्, "हे पृथिवीपते ! सुरथ ! जगन्मातुश्चण्डिकाया एता मूर्तयो व्याख्याताः। एताः सर्वा एव कामधेनुरूपेण कीर्तिताश्च।

"एता मूर्तयः"––मेधा ऋषि सुरथाय मूर्तिरहस्यप्रकरणे परप्रकृत्या जगज्जनन्याश्चण्डिकायाः सप्तावताराणां (यथानन्दा-रक्तदन्तिका-शाकम्भरी-शताक्षी-दुर्गा-भीमा-भ्रामरीणां) रूपाणि विवृत्येदानीं प्रकरणस्योपसंहारः कृतः।

"कामधेनवः"––भगवत्याश्चण्डिकायाः कथितानामासां मूर्तिनामुपासना कामधेनुरिव साधकानाममीष्टफलप्रदा। कामधेनुर्यथा प्रार्थकानाममीष्टं पूरयति, तथासां यस्यां कस्यामपि मूर्तावाश्रितायां सत्यां देवी तस्य सर्वाभीष्टं पूरयति। अर्थाद् भोगं, स्वर्गमपवर्गञ्च विदधाति।

"जगन्माता चण्डिका"––एषा हि देवी आद्या मूलप्रकृतिः परमेश्वरी **प्राधानिकरहस्ये** महालक्ष्मीरिति नाम्ना कीर्तिता। तदुक्तं **प्राधानिकरहस्ये,—**

सर्वस्याद्या महालक्ष्मीस्त्रिगुणा परमेश्वरी।
लक्ष्यालक्ष्यस्वरूपा सा व्याप्य कृत्स्नं व्यवस्थिता॥

परमेश्वरी महालक्ष्मीस्त्रिगुणमयी (सात्त्विकी, राजसी, तामसी च युगपदेव) सर्वेषामाद्या प्रकृतिः। सा लक्ष्या (सगुणा) अलक्ष्या (निर्गुणा) जगत्प्रपञ्चं व्याप्यावस्थिता च।

महालक्ष्मीर्महाराज सर्वसत्त्वमयीश्वरी।
निराकारा च साकारा सैव नामाभिधानभृत्।
नामान्तरैर्निरूप्यैषा नाम्ना नान्येन केनचित्॥२६॥

सर्वसत्त्वमयी ईश्वरी महालक्ष्मीर्वा (श्रीचण्डिका) निराकाराऽपि साकरा, साकारावस्थायां सा विविधनामरूपाणि धारयति। निर्गुणरूपेण सा सच्चिदानन्दस्वरूपलक्षणया निरूप्या, परन्तु प्रत्यक्षादिप्रमाणैर्न लभ्या।

जगन्माता चण्डिका महालक्ष्मीर्वा एकाधारे एव विश्वातिरिक्ता आद्या-शक्तिः परा प्रकृतिर्विश्वव्यापिनी विश्वरूपिणी, पुनश्च बहुविधव्यष्टिरूप-धारिणी, सा एका अद्वितीयापि असंख्यशक्तिसमन्विता अगणनविग्रहा

अगणनविभूतिश्च। अनन्तरूपगुणमध्ये सा स्वयं प्रकटिता भवति। तदुक्तं **श्रीश्रीचण्डीस्तवे,—**

"एकैवाहं जगत्यत्र द्वितीया का ममापरा।" १०५

विभिन्नकार्यसिद्ध्यर्थं बहुरूपेण प्रकाशिताऽपि वस्तुतः सा "एका" अद्वितीया।

इदं रहस्यं परमं न वाच्यं यस्य कस्य चित्।
व्याख्यानं दिव्यमूर्तीनामधीष्वावहितः स्वयम्॥२१॥

परमगोपनीयमिदं रहस्यत्रयम् अनधिकारिणे कदापि न कथनीयम्। जगन्मातुश्चण्डिकाया दिव्यमूर्तिसमूहव्याख्यानस्य, अर्थाद्रहस्यत्रयसहितस्य सप्तशतीस्तवस्यार्थज्ञानायावश्यपठनीयत्वमनेन मेधसो महर्षेर्विधिवाक्येन प्रतिपादितम्।

यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्केन्धो न तज्ज्वलति कर्हिचित्॥



यत् पठितमथ चार्थतोऽविज्ञातं, तत् कदापि फलप्रसू न भवति। यथा अग्निशकन्यस्थाने शष्ककाष्ठार्पनेऽपि तन्न प्रज्वलति तद्वदित्येर्थः।

## रहस्यत्रयाधिकारिनिरूपणम्

इदं रहस्यं परममनाख्येयं प्रचक्ष्यते
भक्तोऽसीति न मे किञ्चित्तवावाच्यं नराधिप॥३॥
(प्राधानिकरहस्ये)

श्लोकोऽयं व्याख्यातोऽग्रे। **परशुरामकल्पसूत्रे** उक्तं "सर्वेषु दर्शनेषु गुप्तेयं विद्ये" ति।(१।३०)।

**कुलार्णवतन्त्रेऽपि—**

"इयन्तु शाम्भवी विद्या गुप्ता कुलबधूरिव।" इति

देवीभागवतान्तर्गत-देवीगीतायां भगवती पार्वती पितरं हिमालयं प्रति रहस्यविद्याधिकारिनिरूपणप्रसङ्गे उक्तवती—

इदन्तु गीताशास्त्रं मे नाशिष्याय वदेत् क्वचित् ।
नाभक्ताय प्रदातव्यं न धूर्ताय च दुर्हृदे ।।
एतत्प्रकाशनं मातुरुद्घाटनमुरोजयोः ।
तस्मादवश्यं यत्नेन गोपनीयमिदं सदा ।।
देयं भक्ताय शिष्याय ज्येष्ठपुत्राय चैव हि ।
सुशीलाय सुवेशाय देवीभक्तियुताय च ।।
(७।४०।३४–३६)

रहस्यविद्या ब्रह्मविद्या वा देवीगीताशास्त्रमपि च शिष्यभिन्नानां न वदेत् । अभक्त-धूर्त-दुष्टहृदयजनाय च न दद्यात् । ब्रह्मविद्याया अनधिकारिणे प्रकाशनं मातृस्तनयोरन्यसमीपे उद्घाटनमिव दूषणीयम् । अत एवावश्यं महता यत्नेन सा सर्वदा गोपनीया । परन्तु शिष्याय, ज्येष्ठपुत्राय, तथा सुशील-सुवेश-देवी-भक्तिपरायणजनाय सा प्रदेया ।

पराप्रकृति-महालक्ष्म्याश्चण्डिकाया दशावताराः प्राधानिकरहस्ये प्रोक्ताः । भगवती महालक्ष्मीश्चतुर्भुजा दिव्यमूर्तिः । तस्याः सकाशात् सर्वेषां देवी-देवानामुत्पत्तिरभूत् । वैकृतिकरहस्ये तस्याः प्रधानावतारत्रयं, तामसी महाकाली, राजसी महालक्ष्मीः, सात्त्विकी महासरस्वती चैतद्व्यष्टिरूपत्रयं यथायथं वर्णितम् । एवञ्च मूर्तिरहस्ये नन्दादि-भ्रामरीपर्यन्तानां परवर्तिनां सप्तावताराणां दिव्यमूर्तयो यथावद् विवृत्य वर्णिताः । एषां दशावताराणां प्रत्येकस्यावतारा मूर्तिभेदाश्चापि यथायथमालोचिताः । शास्त्रान्तरे आद्याशक्त्याः पराप्रकृत्या परमेश्वर्या महालक्ष्मीदेव्या मूर्त्यन्तराणां विवरणं दृश्यते । महाभागवतान्तर्गत **देवीगीतायां** हिमालयो भगवतीमपृच्छत्—

मातर्बहुविधं रूपं स्थूलं तव महेश्वरि ।
तेषु किं रूपमाश्रित्य सहसा मोक्षभाग् भवेत् ।।
तन्मे ब्रूहि महादेवि यदि ते मय्यनुग्रहः ।।(४।१९)

हे जननि ! बहूनि ते स्थूलरूपाणि, तन्मध्ये किं रूपमाश्रित्य जनो मोक्ष-लाभे समर्थो भवेत् ? हे महादेवि ! मह्यं यदि ते कृपा वर्तते, तत्प्रकाशय ।
**देव्युवाच,—**

मया व्याप्तमिदं विश्वं स्थूलरूपेण भूधर ।
तत्राराध्यतमा देवीमूर्तिः शीघ्रं विमुक्तिदा ।।२०।।
साऽपि नानाविधा तत्र महाविद्या महामते ।
विमुक्तिदा महाराज तासां नामानि मे शृणु ।।२१।।

देवी हिमालयमकथयत्, हे भूधर! स्थूलरूपया मयेदं विश्वं व्याप्तमस्ति। तन्मध्ये देवीमूर्तिरेवाशु मुक्ति प्रदास्यति। सा एवाराध्यतमा। हे महामते! तासां देवीमूर्तीनां मध्ये मुक्तिदायिन्योऽनेका महाविद्या वर्तन्ते। तासां नामानि च वक्ष्यामि श्रूयन्ताम्।

इति कामरूपान्तर्वर्ति–श्रीमदुग्रतारामहापीठाध्यक्ष–श्रीचक्रेश्वरभट्टाचार्य-
सङ्कलितशाक्तदर्शने देव्या दशावतारवर्णनं
नाम सप्तमः परिच्छेदः।

ॐ तत्सत् ॐ

---



# अष्टमः परिच्छेदः

।। दशमहाविद्याविर्भाव-रहस्यम् ।।

दक्षस्य शिवविद्वेषणं शिवविहीनयज्ञानुष्ठानञ्च श्रीमद्भागवते चतुर्थ-स्कन्धस्य द्वितीयाद्यध्यायत्रये वर्णिते।

एकदा विश्वस्रष्टॄणां यज्ञे देवा ऋषयश्च समवेतास्तत्रोपविष्टा आसन्। तत्काले दक्षप्रजापतिरुपस्थितो बभूव। तदा यक्षस्य आगमने देवा ऋषयश्चोत्थितास्तस्याभिवादनमकुर्वन्। किन्तु शिवः समाधिस्थः स्वासने पर्यतिष्ठत्। परन्तु शिवो जामातृत्वेनापि तमवमन्यत इति मत्वा दक्षप्रजापतिरत्यन्तं क्रोधान्वितः सन् शिवं तिरस्कृत्य अद्यावधि यज्ञभागाद् वञ्चितो भविष्यसीति प्रशप्तवान्।

तदनन्तरं शिवविद्वेषपरवशो दक्षपतिर्महासमारोहेण एकं शिवरहित-यज्ञानुष्ठानमारब्धवान्। तस्मिन् यज्ञे शिवसत्यौ विना सर्वे देवा ऋषयश्च निमन्त्रिता उपस्थिताश्च बभूवुः। इत्यवसरे सती पितृगृहे यज्ञवार्तां श्रुत्वा सुहृद्दिदृक्षुमना कौतुकेन यज्ञदर्शनार्थं दक्षालये गन्तुं शिवं प्रार्थयत। शिवस्ताम् अनाहूता कार्योपलक्षे पित्रालयेऽपि गन्तुं नोचितमिति बारम्बारं प्रबोध्य निषेधयामास। तदुक्तं **श्रीमद्भागवते**—

सुहृद्दिदृक्षा प्रतिघातदुर्मनाः
स्नेहाद् रुदत्यश्रुकलाति विह्वला।
भवं भवान्यप्रतिपुरुषं रुषा
प्रधक्षतीवैक्षत जातवेपथुः।।

प्रतिहतसुहृद्गणदर्शनेच्छा सती दुर्मना इव स्नेहवशतो रोरुद्यमानाऽश्रु-धारयाभिभूयमाना च परमपुरुषं महादेवं रुषा भस्मसात् कर्तुमना इव प्रकम्पितकलेवरा कोपदृष्या देवदेवमैक्षत।

अत्रान्तरे महाक्रोधेन सती दशमहाविद्यारूपधारणेन दशोदिश आच्छाद्य शिवमतीव विभ्रान्तमकरोत्। तदुक्तं **बृहद्धर्मपुराणे**—

ततः क्रुद्धा महाकाली घोररूपमकल्पयत्।
ततो भयेन भूतेशः पलायनपरोऽभवत्॥

ततो दाक्षायणी क्रोधपरवशतया महाघोररूपमहाकालीमूर्ति धृतवती। तदालोक्य भूतेशो भयेन पलायनपरोऽभवत्।

तं धावमानं गिरिशं दृष्ट्वा दाक्षायणी सती।
माभैर्माभैरिति गिरा मा पलायेत्युवा॑च सा॥
तथाप्येनं पलायन्तं न निवृत्तं विलोक्य ह।
दशमूर्तिर्बभौ देवी दशदिक्षु शिवेक्षिता॥

अनन्तरं भयेनातिधावमानं गिरिशं दृष्ट्वा दयापरतया देवी माभैर्माभैरिति गिरा मा पलायस्वेत्युक्त्वा तन्निवारयति। तथापि शिवं पलायमानमनिर्वृत्तं विलोक्य पुनस्तन्निवारणाय दशदिक्षु शिवेक्षिता दशमूर्तिधारणेन प्रकाशिताऽभवत्। **महाभागवते** महापुराणेऽष्टमाध्याये च—

संप्रार्थ्य मामनुप्राप्य पत्नीभावेन शंकरः।
मामवज्ञाय वचनं भाषतेऽपि सुदारुणम्॥
त्यक्त्वैनमपि दर्पिष्ठं पितरञ्च प्रजापतिम्।
संस्थास्यामि कियत्कालं स्वस्थानं निजलीलया॥
ततश्च प्रार्थितानेन भूत्वा हिमवतः सुता।
शम्भोः पत्नी भविष्यामि भूयोऽहं स्वयमेव हि॥

शंकरः सम्यक् संप्रार्थ्य मां पत्नीभावेन प्राप्तः सन्निदानीं मामवज्ञाय निदारुणवाक्यमवदत्। अत्यन्तदर्पिष्ठशंकरमेवं पितरं प्रजापतिञ्च परित्यज्य निजलीलावशतः कियत्कालं स्वधाम्नि स्थास्यामि। ततः शंकरस्य प्रार्थनया पुनर्हिमालयस्य कन्यारूपेणावतीर्णाऽहमेव स्वयं शम्भुपत्नी भविष्यामि। दाक्षायणी सतीत्येवं चिन्तयित्वा सहसा कमलवदनां भयंकरीं मूर्त्ति धारयन्ती अट्टहासमकरोत्। तच्छ्रुत्वा महाभीतचेताः शिवो विमूढोऽभवत्।

त्यक्त्वा हैमिं रुचिं प्रासीत् कृष्णाञ्जनसमप्रभा।
दिगम्बरगलत्केशा लोलजिह्वा चतुर्भुजा॥
कामालसलसद्देहा स्वेदाक्ततनुरुल्वना।
महाभीमा घोररावा मुण्डमालाविराजिता॥
उद्यत्प्रचण्डकोदण्डचन्द्रार्धकृतशेखरा।
उद्यदादित्यसंकाशकिरीटोज्ज्वलमस्तका॥

अनन्तरं सती तस्याः स्वर्णकान्ति परित्यज्य घोराञ्जनवत्कृष्णवर्णाऽभूत। अपिच नग्नातिलम्बमानकेशा लोलजिह्वा चतुर्भुजा कामजनितलास्योल्लासित-देहा तज्जन्यस्वेदाक्ता इव प्रतीयमानाभूत्। सा देवी महाभयंकरी घोरनिनाद-कारिणी, मुण्डमाला विभूषिता, एवं देवी अङ्गप्रभया उदीयमानकोटिसूर्य्यतुल्या चन्द्रार्धशेखरा देदीप्यमानसूर्य्यसदृशोज्ज्वलकिरीटमस्तका च बभूव। महेश्वरोऽतिभीषणां तन्मूर्त्ति दृष्ट्वा नितरां महाभीतः पलायनमकरोत्। किन्तु यस्यां यस्यां दिशि प्रधावति तत्र तत्रैव मुर्त्तिमेकां दृष्ट्वा प्रतिनिवृत्तो बभूव।

एवं पतिं वीक्ष्य भयाभिभुतकं
दयान्वितां तत्प्रतिवारणेच्छया।
सर्व्वासु दिक्षु क्षणमात्रमध्यतः
स्थिता च भूत्वा दशमूर्त्तयस्तदा॥

तथा च— एवं पतिं शिवं भयाभिभूतं दृष्टवा, देवी दयापरवशतया तस्य प्रतिनिवारणेच्छया च क्षणकालमध्ये दशमहाविद्यामूर्त्तिधारणपूर्वकं दशदिशो व्याप्यातिष्ठत्।



सन्धावमानो गिरिशोऽतिवेगतः
प्राप्नोति यां यां दिशमेव तत्र ताम्।
भयानकां वीक्ष्य भयेन विद्रुतो
दिशं तथान्यां प्रति चाभ्यधावत॥

गिरिशोऽति वेगेन यां यां दिशं प्रत्यधावत् तत्र तत्रैवभयङ्करीं मूर्त्तिमवलोक्य भयेन पलायनं कृत्वा तस्मादन्यदिशं प्राधावत्।

न प्राप्य शम्भुस्तु भयान्वितो दिशं
तत्रैव संमुद्रितचक्षुरास्थितः।
उन्मील्य नेत्राणि ददर्श तां परः,
श्यामां लसत्पकजसन्निभाननाम्॥

भयाभिभूतः शम्भुः पलायनपथमदृष्ट्वा तत्रैव मुद्रितनयनोऽतिष्ठत्। कियत्कालानन्तरं नयनत्रयमुन्मील्य नीलोत्पलसदृशाननां देवीमवैक्षत।

हसन्मुखीं पीनपयोधरधरां
दिगम्बरां भीमभीषणलोचनाम् ।
विमुक्तकेशीं रविकोटिसन्निभां
चतुर्भुजां दक्षिणसम्मुखस्थिताम् ।।

सा देवी हास्यमुखी पीनोन्नतपयोधरा दिगम्बरा भयंकरी विशालनेत्र-त्रयविशिष्टा मुक्तकेशी कोटिसूर्य्यतुल्यप्रभाशालिनी चतुर्भुजा दक्षिणाभिमुख-मवस्थिता च ।

महाभीतो महादेवस्तां देवीमपृच्छत् । हे देवि! का त्वं श्यामा! मम प्राणवल्लभा सती क्व गता । देव्युवाच--

न पश्यसि महादेव सतीं मां पुरतः स्थिताम् ।
कथं तवेदृशी बुद्धिः किं मां त्वं लक्ष्यसेऽन्यथा ।।

हे महादेव! अहं सती तव सम्मुखेऽवस्थितास्मि । कथं वा तवेदृशी बुद्धिर्भवति । कथं मां त्वमन्यप्रकारां पश्यसि । शिवोऽवदत्, त्वं यदि ममप्राण-वल्लभा दक्षकन्या सती, तत् कथं वा कृष्णवर्णा कथं वा पृथिव्यां भयप्रदा भवसि । दशदिक्ष्ववस्थिता अतीव भीषणाः कास्तावदेता देव्यः । सत्युवाच--



अहन्तु प्रकृतिः सूक्ष्मा सृष्टिसंहारकारिणी ।
अभवं तद्वनितायै त्वदर्थे गौरदेहिका ।।
त्वामेव लिप्सुः पुरुष प्राक्स्वीकृतवशाच्छिव
साहं पितुर्महायज्ञविनाशाय भयानका ।
अभवं तन्तुमाभीतिं कुरुमत्रोमहेश्वर ।।

सत्युवाच--हे शिव अहं सृष्टिस्थितिसंहारकारिणी सूक्ष्माप्रकृतिः पूर्व्व-स्वीकृतिवशतः पुरुषरूपिणं त्वां प्राप्तुमिच्छया तववनितारूपेण त्वदर्थं गौरदेहं धारयामि । साहं पितुर्महायज्ञविनाशाय भयंकरीमूर्त्ति धृतवती । हे महेश्वर! त्वं मत्तो भीतिं मा कुरु--

दशदिक्षु महाभीमा या एतादृशमूर्त्तयः
सर्व्वा ममैव मा शम्भो भयं कुरु महामते ।।
त्वं शिव मत्समो भर्त्ता तवाहं वनिता सती ।
त्वां दृष्ट्वाहं महाभीतं धावमानं दिशो भयात् ।।
परिवार्य्य दिशः सर्व्वास्तवाहं दशधा स्थिता ।

हे शम्भो! दशदिक्षु या एता महाभीमा दशमूर्त्तय, स्ताः सर्व्वा एव मम मूर्त्तयः। हे महामते! भयं मा कुरु! त्वं मम प्राणतुल्यः स्वामी; अहं तवैव वनिता सती। त्वामहं महाभीतचित्तं दशदिक्षु धावन्तं दृष्ट्वा, दशदिशः परिवार्य्याऽहमेव दशरूपेणावस्थितास्मि।

शिव उवाच--हे महादेवि! महामोहवशतोऽहं तव स्वरूपं विस्मृत्य, तवाप्रियं वाक्यमकथयम्। हे परमेश्वरि क्षमस्वैतदपराधम्। यास्तवैता महाभीमा मूर्त्तयः आसां नामानि मह्यं कथय! देव्युवाच--

एताः सर्व्वा महदेव महाविद्याः समप्रभाः
आसां नामानि वक्ष्यामि श्रृणु तानि महेश्वर।।
काली तारा महाविद्या षोडशी भुवनेश्वरी।
भैरवी चिन्नमस्ता च सुन्दरी वगलामुखी।।
धूमावती च मातङ्गी नामान्यन्यानि वै शिव।

देव्युवाच--हे महेश्वर! एताः सर्व्वा एव महाविद्याः सदृशप्रभायुक्ताः आसां नामानि च श्रृणु! (१) काली, (२) तारामहाविद्या, (३) षोडशी, (४) भुवनेश्वरी, (५) भैरवी, (६) छिन्नमस्ता, (७) सुन्दरीकमला, (८) वगलामुखी, (९) धूमावती, (१०) मातङ्गीति।

मेयं ते पूरतः कृष्णा सा काली भीमलोचना।
श्यामवर्णा तु या देवी स्वयमुर्ध्वे व्यवस्थिता।।
सेयं तारा महाविद्या महाकालस्वरूपिणी।।

तव सम्मुखे या कृष्णवर्णा भीमनयना सा देवी काली (१)। उर्द्धदेशे श्यामवर्णा या देवी सा तारामहाविद्या, एषा महाकालस्वरूपिणी (२)।

दक्षे सव्येतरेमं या विशीषितिभयप्रदा।
इयं देवी छिन्नमस्ता महाविद्या महामते।।

हे महामते! तव दक्षिणेन या महाविद्या, सा छिन्नमस्तका अतीव भयंकरी देवी अवस्थिता।

वामेतरेयं या देवी सेयं तु भुवनेश्वरी।
पृष्ठतस्तव देव्यैषा वगलाशत्रुसूदनी।।

तव वामभागे या देवी सा भुवनेश्वरी। ता पृष्ठदेशे च शत्रुनाशिनी एषा बगला देवी।

वह्निकोने तवेयं या विधवारूपधारिणी।
सेयं धूमावती देवी महाविद्या महेश्वरी।।

अग्निकोणे विधवारूपधारिणी महेश्वरी महाविद्या एषा देवी धूमावती।

नैऋत्यान्तरे या देवी सेयं त्रिपुरसुन्दरी।
वायौ या तु महाविद्या सेयं मातङ्गनायिका।।

नैऋतकोणे या देवी अवस्थिता एषा देवी सुन्दरीकमला। वायुकोणे या महाविद्या सा तु मातङ्गीदेवी।

ऐशान्यां षोडशी देवी महाविद्या महेश्वरी।
अहं तु भैरवी भीमा शम्भो मा त्वं भयं कुरु।।

ईशानकोणे या देवी अवस्थिता एषा माहेश्वरी षोडशी महाविद्या अपिचाहं भयंकरी भैरवी महाविद्या हे शम्भो त्वं भयं मा कुरु।

एताः सर्व्वा प्रकृष्टास्तु मूर्त्तयो बहुमूर्त्तिषु।
भक्त्यां संभजतां नित्यं चतुवर्गफलप्रदाः।।
सर्व्वाभीष्टप्रदायिन्यः साधकानां महेश्वर।।

चतुर्व्वर्गफलप्रदायिन्यो नित्या एता दशमहाविद्या एव सर्व्वासां मूर्त्तिणां मध्ये श्रेष्ठाः शीघ्रफलदायिन्यश्च। हे महेश्वर! एताः साधकानां सर्व्वाभीष्टानि प्रयच्छन्ति।

मारणोच्चाटन-क्षोभ-मोहन-द्रावणानि च
वश्यस्तम्भनविद्वेषाद्यभिप्रेतानि कुर्व्वते।।
इमाः सर्व्वा गोपनीया न प्रकाश्या कदाचन।

साधकानामभीष्ट-मारण-उच्चाटन-क्षोभण-मोहन-द्रावण-वशीकरण-स्तम्भन-विद्वेषणानि च सर्व्वान्याभिः सम्पाद्यन्ते। ममैता मूर्तयो न प्रकाश्याः सर्व्वथा गोपनीयाश्च।

आसां मन्त्रं तथा यन्त्रं पूजां होमविधिं तथा
पुरश्चर्य्याविधानञ्च स्तोत्रञ्च कवचं तथा
आचारनियमञ्चापि साधकानां महेश्वर
त्वमेव वक्ष्यसि विभो नान्यो वक्तात्र विद्यते ।।
तदेवागम शास्त्रन्तु लोके ख्यातं भविष्यति ।।

आसां दशमहाविद्यानां मन्त्र-यन्त्र-पूजाहोम-पुरश्चर्य्या-स्तोत्र-कवच-आचार-नियमांश्च, हे महेश्वर! साधकानां हितार्थाय, सर्व्वान् भवानेव करिष्यति, हे विभो! तत्समुदायस्य वक्ता त्वमेव भविष्यसि। तदेवागमशास्त्रमितिलोके प्रख्यातं भवेत्। (दशमहाविद्यानां मन्त्रग्रहणनियमादिकं मत्प्रणीत-ताराच्चर्न-तन्त्रे उक्तम्। भावाचारोपासनानियमादिकञ्च ग्रन्थस्यास्य पञ्चमपरिच्छेद उक्तम्।)

आगमस्य भवान् कर्त्ता वेदकर्त्ता स्वयं हरिः
आगमश्चैव वेदश्च द्वौ बाहू मम शंकर
ताभ्यामेव धृतं सर्व्वं जगत्स्थावरजंगमम् ।।



हे शिव! भवानेवागमस्य कर्त्ता हरिः स्वयं वेदकर्त्ता, हे शंकर! आगमो वेदश्च मे द्वौ बाहू। ताभ्यामेव स्थावरजंगमं जगत् सर्व्वं धारयामि।

यस्त्वेतौ लंघयेन्मोहात् कदाचिदपि मूढधीः
सोऽधः पतति हस्ताभ्यां गलितो नात्र संशयः ।।
यश्चागमं वा वेदं वा समुल्लङ्घ्याथ भजेत्
तमुद्धर्त्तुमशक्ताऽहं सत्यमेव महेश्वर ।।

यो मूढ़बुद्धिर्मोहवशाद् वेदमागमञ्च परित्यज्य, अर्थाद् वेदतन्त्रविरुद्धमतं सेवते, स ममहस्तच्युतः सन्नधः पतिष्यति। हे महेश्वर! तं विरुद्धमतसेविनमुद्धर्त्तुं सत्यमेव न शक्नोमीति जानीहि ।।

द्वावेव श्रेयसां हेतू दुरुहावतिदुर्धरौ
सुधीभिरपि दुर्ज्ञेयौ पारावारविवर्ज्जितौ ।।
विविच्यैवानयोरैक्यं मतिमान् धर्म्ममाचरेत्
कदाचिदपि मोहेन भेदयन्न विचक्षणः ।।

वेद आगमश्च द्वावेव श्रेयोलाभहेतू। द्वावपि दुर्व्वोध्यावनिकष्टसाध्यौ च। विचक्षणपण्डितानामपि दुर्ज्ञेयौ पारावाररहितौ च। मतिमान् साधक उभयोरैक्यं विविच्य धर्म्ममाचरेत्। ज्ञानिनः कदाचिदपि भेदभावं न कुर्य्युः।

आसां ये साधकास्ते तु सभायां वैष्णवा इव
मय्यर्पितान्तःकरणा भवेयुः सुसमावृताः
मन्त्रो यन्त्रञ्च कवचं दत्तं यद् गुरुणा स्वयं
गोपनीयं प्रयत्नेन तत् प्रकाश्यं न कुत्रचित्
प्रकाशात् सिद्धिहानिः स्यात् प्रकाशादशुभं भवेत्
तस्मात् सर्व्वप्रयत्नेन गोपयेत् साधकोत्तमः
इति ते कथितं तत्वं महादेव महामते ।।

प्रोक्तमहाविद्यानां साधकसम्प्रदायाः सभास्थले वैष्णवा इव स्थातव्याः। परन्तु सुसमाहितचित्ता मय्यर्पितमनसश्च भवेयुः। गुरुदत्तानि मन्त्र-यन्त्र-स्तव-कवचादीनि अतियत्नेन गोपनीयानि तानि सर्वाणि कुत्रापि न प्रकाशयेत्। प्रकाशे सति सिद्धिहानिरशुभं च भवेत्। अतएव साधकश्रेष्ठस्तान् सर्व्वप्रयत्नेन गोपयेत्। हे महामते महादेव! गुह्यतत्त्वमेतदहं तुभ्यं प्रकाशयामि।

अहं तव प्रियतमा त्वञ्च मेऽतिप्रियः पति।
पितुः प्रजापतेर्दपनाशायाद्यव्रजाम्यहम्।
त्वमाज्ञापय देवेश त्वं न गच्छसि चेद् यदि।
इति देव ममाभीष्टं तवैवानुगताप्यहम् ।।
गच्छामि यज्ञनाशाय पितुर्दक्षप्रजापतेः।

तवाहं प्रियतमा पत्नी। त्वञ्च ममाति प्रियतमः पतिः, पितुर्दक्षप्रजापते-र्दपनाशार्थमद्यैव गमिष्यामि। हे देवेश! त्वं यदि न गमिष्यसि, तर्हि तत्र-गमनाय मह्यमाज्ञां देहि! किन्तु देव, ममाभिप्रायमेतदेव, तवानुगामिनी सती, पितुर्दक्षप्रजापतेर्यज्ञनाशाय यास्यामिति।

शिव उवाच,—

जाने त्वां परमेशानि! पूर्णां प्रकृतिमुत्तमाम्।
अजानता महामोहाद् यदुक्तं क्षन्तुमर्हसि ।।
त्वमाद्या परमा विद्या सर्व्वभूतेष्ववस्थिता।
स्वतन्त्रा परमाशक्तिः कस्तेविधिनिषेधकः ।।

हे परमेशानि! त्वं हि पूर्णा परमा प्रकृतिरित्यहं जाने। किन्तु महा-मोहवशतस्तव स्वरूपमज्ञात्वा, यदुक्तं तत्क्षमस्व। त्वमाद्या परमा विद्या सर्व्व-भूतेऽवस्थिता, त्वं स्वतन्त्रा पराशक्तिः। अतएव कस्ते विधिनिषेधको भवेत्।

त्वञ्चेद् गमिष्यसि शिवे दक्षयज्ञविनाशने।
कामे शक्तिस्त्वन्निषेद्धुं कथं तत्रास्मि वा क्षमः॥
यच्चोक्तं मतिमोहेन मत्वात्मानं पतिं तव।
तत् क्षमस्व महेशानि यथा रुचिस्तथा कुरु॥

हे शिवे त्वञ्चेद् दक्षयज्ञविनाशार्थं गन्तुमिच्छसि, तर्हि का मे शक्तिस्त्वन्निषेधे! तत्र क्षमता वा क्व! अहं तव पतिरिति, मोहवशतो यदुक्तं तत् सर्व्वं क्षमस्व। हे महेशानि। तव यथा इच्छा तथा कुरु।

अनन्तरं शिवाज्ञया सुसज्जिता सती, नन्दिभृङ्गिप्रभृतिप्रमथगणसमर्थिता दक्षस्य यज्ञवाटं प्रविश्य, दक्षमुखात् शिवनिन्दां श्रुत्वा पतिनिन्दामसहमाना दक्षमुवाच—हे पितः, त्वं भगवन्नीलकण्ठशिवनिन्दाकारी। तस्मात् त्वदुत्पन्नदेहमिममिदानीं न धास्यामि। यतो हि निन्दितान्नं मोहवशतो भुक्त्वा तदन्नस्य वमनेन शुद्धिरिति शास्त्रम्।

॥ **दक्षयज्ञविनाशिभद्रकाल्युत्पत्तिः** ॥

अतः परं सती स्वशरीरात् छायासतीमुत्पाद्य तस्याः शरीरात् चित्कलां योगावलम्बनपूर्वकं यज्ञाग्नौ दग्धामकरोत्। तद्दर्शनेन स्वर्गमर्त्यादिलोकेषु महाकोलाहलध्वनिरुत्थितोऽभवत्। ततश्च सतीदेहत्यागसंवादं श्रुत्वा, शङ्करोतिकातरस्सन् महाक्रोधेन रुद्रमूर्त्तिरभवत्। ततो दक्षयज्ञविनाशार्थं रुद्रकोपानलतो वीरभद्रस्योत्पत्तिरभवत्। सतीक्रोधाग्नितो भद्रकाली समुत्पन्नाभवत्। अनन्तरं शिवाज्ञया भद्रकाली कोटिकोटियोगिनीगणपरिवृत्ता वीरभद्रसहयोगेन दक्षयज्ञध्वंसमकरोत्। तदुक्तं **देवीभागवते** (३।२७।६-११)

पुराष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी।
प्रादुर्भूता महाघोरा योगिनीकोटिभिस्सह॥
अतोष्टम्यां विशेषेण कर्तव्यं पूजनं सदा।
नानाविधोपहारैश्च गन्धमाल्यानुलेपनैः॥
पायसैरामिषैः होमैः ब्राह्मणानाञ्च भोजनैः॥
फलपुष्पोपहारैश्च तोषयेज्जगदम्बिकाम्॥

पुरा दक्षयज्ञविनाशिनी महाभयङ्करी भद्रकाली कोटिकोटियोगिनीभिस्सह प्रादुर्भूताऽभवत्। ततः प्रभृति शारदीयमहाष्टम्यां गन्धमाल्यानुलेपनपरमान्नामिषविविधफलपुष्पाद्युपहारैः पूजा-होम-ब्राह्मणभोजनादिनानामहोत्सवेन च जगदम्बायास्तुष्टिविधानं सर्वेषामेव कर्तव्यम्।

श्रीश्रीशारदीयदुर्गापूजायां निम्नोक्तमन्त्रेण देवी भद्रकाली पूजिता भवति। ओं दक्षयज्ञविनाशिन्यै महाघोरायै योगिनीकोटिपरिवृतायै भद्रकाल्यै ह्रीं दुर्गायै नमः"।

## भद्रकालीस्वरूपम्

तन्त्रसारे—

क्षुत्क्षामा कोटराक्षी मसीमलिनमुखी मुक्तकेशी रुदन्ती
नाहं तृप्ता वदन्ती जगदखिलमिदं ग्रासमेकं करोमि
हस्ताभ्यां धारयन्ती ज्वलदनलशिखासन्निभं पाशयुग्मं
दन्तैर्जम्बुफलाभैः परिहरतु भयं पातु मां भद्रकाली।।

देवी भद्रकाली क्षुधया क्षीणांगी कोटरमध्यगतनेत्रयुगला मसीवर्णसम-मलिनमुखी, मुक्तकेशी रोरुद्यमाना वदन्ती, नाहं तृप्ताऽखिलमिदं जगत् ग्रासं करोमि। हस्ताभ्यां जाज्वल्यमानाग्निशिखावत् पाशयुग्मं धारयति। देव्या दन्तसमूहा जम्बुफलनिभकृष्णवर्णाः। ईदृशी भद्रकाली देवी सर्वभयपरिहार-पूर्वकमस्मान् रक्षतु।



दशमहाविद्यानामाविर्भावप्रसंगे उच्यते। चामुण्डातन्त्रे मुण्डमालातन्त्रे च सामान्येन प्रचलितानि पाठान्तरनामानि यथा—

काली तारा महाविद्या षोडशी भुवनेश्वरी।
भैरवी छिन्नमस्ता च विद्या धूमावती तथा।।
वगला सिद्धविद्या च मातंगी कमलात्मिका।
एता दशमहाविद्याः सिद्धविद्याः प्रकीर्तिताः।।

(१) काली (२) तारा (३) षोडषी (४) भूवनेश्वरी (५) भैरवी (६) छिन्नमस्ता (७) धूमावती (८) वगला (८) मातंगी (१०) कमला— एता दशमहाविद्याः सिद्धविद्याश्च। आसां सिद्धविद्यात्वसम्बन्धे मुण्डमालातन्त्रे उक्तम्—

नात्र सिद्धाद्यपेक्षास्ति नक्षत्रादिविचारणा।
कालादिशोधनं नास्ति नारिभिन्नादिदूषणम्।।
सिद्धविद्यातया नात्र युगसेवापरिश्रमः।
नास्ति किञ्चिन् महादेवि दुःखसाध्यं कदाचन।।

एताषां दशमहाविद्यानां मन्त्रग्रहणे सिद्धादिविचारः, नक्षत्रचक्रादिविचारः कालादिशोधनम् अरिमित्रादिविचारश्च न सन्ति। आसामुपासनायां कलियुग-घटितपरिश्रमोऽपि नास्ति। हे महेश्वरि, आसामुपासनायां कदापि किमपि दुःसाध्यं न भवति। कलौ संख्या चतुर्गुणा एतच्छास्त्रवाक्येन कलौ यज् जपपूजादिचतुर्गुणसंख्या निर्दिष्टा सा दशमहाविद्याविषये प्रयोज्या न भवति।

### महाविद्यायाः नामसंख्यादिविषये मतभेदः

विष्णोरवतारस्य नामसंख्यानां विभिन्नपुराणेषु यथा मतभेदा वर्तन्ते, तद्वत् महाविद्याया नामसंख्याविषये च तन्त्रशास्त्रे मतभेदो दृश्यते। **तन्त्रसारधृते मालिनीविजयतन्त्रे** यथा—

अथ वक्षाम्यहं या या महाविद्या महीतले।
दोषजालैरसंस्पृष्टा स्ताः सर्वा हि फलैः सह॥
काली, नीला महादुर्गा त्वरिता छिन्नमस्तका।
वाग्वादिनी चान्नपूर्णा तथा प्रत्यंगिरा पुनः॥
कामाख्यावासिनी बाला मातंगी शैलवासिनी।
इत्याद्याः सकलदेव्यः कलौ पूर्णफलप्रदा॥
सिद्धमन्त्रतया नात्र युगसेवापरिश्रमः।
तथा चैता महाविद्याः कलिदोषान्न बाधिता॥

या या महाविद्याः पृथिवीमण्डले दोषराशिशून्या आसन् फलसहितेनाहं तास्ता महाविद्याः कथयामि।

(१) काली (२) नीला तारा (३) महादुर्गा (४) त्वरिता (५) छिन्नमस्ता (६) वाग्वादिनी (७) अन्नपूर्णा (८) प्रत्यंगिरा (९) कामाख्या-वासिनी (१०) बाला त्रिपुरसुन्दरी (११) मातंगी (१२) शैलवासिनी कामाख्या चेति। एता देव्यः कलिकाले साधकस्य पूर्णफलं प्रदास्यन्ति। आसां सिद्धमन्त्रोपासनायां कलिकालवशतो नाधिकपरिश्रमो भवेत्। एता महाविद्याः कलियुगदोषग्रस्ता न भवेयुः।

### कालीकुलं श्रीकुलञ्च

विशेष विशेषतन्त्रमते महाविद्या अष्टादशसंख्यकाः। तन्मध्ये विभागानु-सारेण, कालीकुलं श्रीकुलञ्चेति श्रेणीद्वयमभूत्। यथा—

काली तारा छिन्नमस्ता भुवना महिषमर्दिनी।
त्रिपुरा त्वरिता दुर्गा विद्या प्रत्यंगिरा तथा।।
कालीकुलं समाख्यातं श्रीकुलञ्च ततः परम्।
सुन्दरी भैरवी वाला वगला कमलापि च।।
धूमावती च मातंगी विद्या स्वप्नावती प्रिये।
मधुमती महाविद्या श्रीकुलं परिभाषितम्।।

तथा कालीकुलान्तर्गता नवमहाविद्याः। यथा——(१) काली (२) तारा (३) छिन्नमस्ता (४) भुवनेश्वरी (५) महिषमर्दिनी (६) त्रिपुरा (७) त्वरिता (८) दुर्गा (९) प्रत्यंगिरा च।

श्रीकुलान्तर्गता नवमहाविद्याः——यथा——(१) सुन्दरी (२) भैरवी (३) बाला (४) वगला (५) कमला (६) धूमावती (७) मातंगी (८) स्वप्नावती (९) मधुमती चेति।

## दशमहाविद्यानां भिन्नभिन्नमूर्तीनामुपासकसम्प्रदायः साहित्यञ्च

दशमहाविद्यान्तर्गतप्रत्येकमहाविद्याया बहुमूर्तिभेदा वर्तन्ते। तन्त्रशास्त्रे तासां ध्यानम् उपासनाविधिः विभिन्नमन्त्राश्च विद्यन्ते——तत्तन्मतसिद्धप्राचीन-साधकमण्डल्या नामानि च उल्लिखितानि। प्रत्येकमहाविद्या विषये, विशेषतः कालीतारा-शोडषी (श्रीविद्या) विषयकं सम्प्रदायगतं सुबृहत् साहित्यमस्ति। विशालभाण्डारस्य तस्य कियदंशमात्रं मुद्रितं प्रकाशतां गतं च।

### (१) श्रीश्रीकालीमहाविद्यारहस्यम्

दशमहाविद्यानां मध्ये कालीमहाविद्योपासना एव समधिकप्रचलिता। अन्यासामुपासना प्रायशः काली प्रतिमायामेव प्रचलिता, पृथङ्मूर्तिनिर्माणस्य प्रयोजनं नास्ति।

बहुपीठस्थानेषु कालीविग्रहेऽपि बहुदेवदेवीपूजा यद्यपि प्रचलिता तथापि ध्यान-संकल्प-नाम-मन्त्रादीति च पृथक् पृथग् भवन्ति। कालिकाया बहुमूर्ति-भेदा वर्तन्ते। तन्मध्ये गृहस्थस्य नित्योपास्यमूर्ति "दक्षिणाकाली" तन्मन्त्रमेव गृह्णाति। अन्यान्यमूर्तिध्यानादि नैमित्तिककाम्यपूजायां प्रचलति। महादेवः स्वयं महाकालरूपेण दक्षिणकारिकाया उपासनामकरोत्, तन्त्रशास्त्रे तदुल्लेखोऽस्ति। कामरू वंगदेशे च अधिकांशब्राह्मणाः वंशपरम्पराक्रमेण दक्षिण-कालीमन्त्रपाठकाः।

आधुनिकयुगेऽपि कामरूपे श्रीगदाधरभट्टाचार्यः मुकलीमुरीयागोस्वामी, वंगदेशे श्रीकृष्णरामभट्टाचार्यः श्रीरामप्रसादः—श्रीकमलाकान्तः-श्रीरामकृष्ण परमहंसदेवश्चेत्येते प्रमुखशक्तिसाधकाश्च दक्षिणाकालीमन्त्रमुपास्य सिद्धि-मलमन्त ।

## कालीमूर्त्तिभेदाः

पुरश्चर्य्यार्णवतन्त्रस्य नवम-तरङ्गे—(१) दक्षिणाकाली, (२) महाकाली, (३) भद्रकाली (४) श्मशानकाली (५) गुह्य काली (६) कामकलाकाली (७) सिद्धिकाली (८) सिद्धिलक्ष्मीश्चेति।

जयद्रथयामलमते यथा—(१) डम्बरकाली, (२) गहनेश्वरी (३) एक-तारा (४) चण्डशावरी (५) वज्रवती (६) रक्षाकाली (७) इन्दिवरी-काली (८) धनदाकाली (६) रमन्याकाली (१०) ईशानकाली (११) मन्त्र माता चेति।

सन्मोहनतन्त्रे यथा—(१) स्पर्शमणिकाली (२) चिन्तामणिकाली, (३) सिद्धिकाली, (४) विद्याराज्ञी (५) कामकला (६) हंसकाली (८) (७) गुह्यकाली चेति।



गुह्यकालीपूजा नेपाले समधिकं प्रचलिता। गुह्यकाल्या अपि सप्तधा रूपभेदाः मन्त्रभेदाश्च प्रचलिता आसन्। ब्रह्मा, वशिष्ठो, रामचन्द्रः, कुवेरो, यमः, भरतो, रावणो, बलिः—इन्द्रप्रभृतिदेवा मनुष्याश्च गुह्यकालिकोपासकरू-पेणोल्लिखिताः सन्ति। महाकालसंहितायां—कामकलाकालिकोपासकमण्डली यथा—इन्द्रो, वरुणो, यमो, विवस्वान्, चन्द्रो, विष्णुप्रभृतिदेवा ऋषयश्च कामकलोपासकाः।

## कालीसम्प्रदायः साहित्यञ्च

कालीमहाविद्याम् अधिकृत्य मूलग्रन्थ—टीका—प्रकरणग्रन्थादिविशिष्ट-विशालसाहित्यस्य सृष्टिरभूत्। साम्प्रदायिकरहस्योपासनातत्त्वप्रभृतिसाधन-संक्रान्त—विशेष-विशेष-ज्ञानलाभाय जयद्रथयामलस्थ—काली-तन्त्रं, काली-कुलामृतं महाकालसंहिता व्योमकेशसंहिता—कालीकुलक्रमार्च्चनास्थश्यामा-रहस्यं (पूर्णानन्दगिरिकृतं) शाक्तक्रमः, कालीविलासः कालिकार्च्चनमुकुरः, सटीकः कर्पूरस्तवः कालज्ञानतन्त्रं कालोत्तरतन्त्रम्, उत्तरतन्त्रं, चिद्गगन-

चन्द्रिका (कालिदासकृता), शक्तिसंगमः—काशीखण्डं इत्यादयो ग्रन्था विशेषतो द्रष्टव्याः। पुरश्चर्य्यार्णवतन्त्रस्य :.वमतरंगान्तर्गतमहाविद्याप्रकरणे बहुविषयाः संगृहीताः सन्ति।

### श्रीश्रीदक्षिणाकालीध्यानस्वरूपम्

ओंकरालवदनां घोरां मुक्तकेशीं चतुर्भजाम्।
कालिकां दक्षिणां दिव्यां मुण्डमालाविभूषिताम्॥
सद्यश्छिन्नशिरःखड्गवामाधोर्द्ध्वकराम्बुजाम्।
अभयं वरदं चैव दक्षिणाधोर्द्ध्वपाणिकाम्॥
महामेघप्रभां श्यामां तथा चैव दिगम्बरीम्।
कण्ठावसक्तमुण्डालीगलद्रुधिरचर्च्चिताम्॥
कर्णावतंसतानीतशवयुग्मभयानकाम्।
घोरद्रंष्टां करालास्यां पीनोन्नतपयोधराम्॥
शवानां करसंघातैः कृतकाञ्चि हसन्मुखीम्।
सृक्वद्वय-गलद्रक्तधाराविस्फुरिताननाम्॥
घोररावां महारौद्रीं श्मशानालयवासिनीम्।
बालार्क्कमण्डलाकारलोचनत्रितयान्विताम्॥
दन्तुरां दक्षिणव्यापिमुक्तालम्बिकयोच्चयाम्।
शवरूपमहादेवहृदयोपरिसंस्थिताम्॥
शिवाभिर्घोररावाभिश्चतुर्द्दिक्षु समन्विताम्।
महाकालेन रत्यर्थमुपविष्ठां स्मरातुराम्॥
सुखप्रसन्नवदनां स्मेराननसरोरुहाम्।
एवं सञ्चिन्तयेत् कालीं धर्म्मकामार्थमोक्षदाम्॥

### श्रीश्रीउग्रतारा-महाविद्यारहस्म्

द्वितीया महाविद्या "तारा" नाम्नाऽभिहिता। तारयतीति तारा—(तारोपनिषद्) जीवं भवसागरादुत्तीर्णं कारयतीत्यनेन "तारा"। एषैव एकजटा-नीलसरस्वती-उग्रतारा-महातारा-विद्याराज्ञी-प्रभृतिनामभिश्च विदिता भवति। ताराभक्तिसुधार्णवे प्रथमतरङ्ग उक्तम्—

लीलया वाक्प्रदा चेयं तेन नीलसरस्वती
तारकत्वात् सदा तारा सुखमोक्षप्रदायिनी
उग्रापत्तारिणी यस्मादुग्रतारा प्रकीर्त्तिता॥

एषा हि अत्रोक्ता वाक्शक्तिप्रदात्री "नीलसरस्वती' जीवं सर्वदा परित्राणं कृत्वा, सुखमोक्ष प्रददातीत्यनेन "तारा"। एवं भीषणापद उद्धरतीत्यनेन "उग्रतारा" इति नाम्नापि कथ्यते। तारायाः मूर्त्तिभेदो **नीलतन्त्रे** द्वादशपटले यथा—

तारा चोग्रा महोग्रा च वज्रनीला सरस्वती
कामेश्वरी भद्रकाली इत्यष्टौ तारिणी स्मृता ॥

विशेष-विशेष-तन्त्रमते, आम्नायभेदेन, तारादेव्या बहुप्रकारमूर्त्तिभेदोल्लेखो दृश्यते। यथा पूर्वाम्नाये स्पर्शतारा चन्द्रतारा चण्डघण्टा-घण्टिका त्रैलोक्य-विजया च। दक्षिणाम्नाये-चिन्तामणिः। सिद्धजटा, क्रुरमालिका, क्रुरचण्डा, महाचण्डा, वज्रतारा, मणितारा, ब्रह्मतारा, नारसिंही, चतुर्व्वेदोदरी च। पश्चिमाम्नाये उग्रतारा, अष्टचत्वारिंशत्प्रकारा हंसतारा च। उत्तराम्नाये— अष्टतारा। उर्द्धाम्नाये महोग्रतारा, महानीला, शाम्भवतारा, महानीला सरस्वती, चीनसुन्दरी, नीलसुन्दरी, महानीलसुन्दरी चेति।

**उपासकसम्प्रदायः**

तारातन्त्रस्य प्रथमपटले उक्तम्—उग्रतारामहाविद्या महामन्त्रं जप्त्वा, बुद्धरूपी जनार्द्दनोऽजरामरतां प्राप्यैव सृष्टयादिकर्म्मणि कर्त्तृत्वलाभमकरोत्। वशिष्ठश्च तारादेव्या उपासनया नक्षत्रलोकं प्राप्तवान्, दुर्व्वासोव्यासबाल्मीकि-भरद्वाजादय ऋषयो भीमार्ज्जुनादिक्षत्रियाश्च तारादेव्या उपासनया सिद्धिलाभमकुर्व्वन्त।

रुद्रयामलतन्त्रस्य सप्तदशपटलादवगम्यते, महर्षिवशिष्ठो महाविद्याया दैववाणीं श्रुत्वा महाचीने (तिब्बते) गत्वा तत्र बुद्धदेवस्य समीपे दीक्षां लब्ध्वा "चीनाचार"क्रमेण तारामहाविद्यासाधनशिक्षामकरोत्। तदनन्तरमागत्य कामरूपान्तर्वर्त्तिकामपीठमध्ये (गुवाहातीनगरे) उग्रतारामहासिद्धपीठ उग्रतारा-महासिद्धविद्यामुपास्य सिद्धिमलभत।

**कालिकापुराणे**—

जग्मतुर्द्दक्षिणां काष्ठां यत्र सन्ध्याचलः स्थितः।
सन्ध्या ललिता कान्ता च वशिष्ठेनावतारिता ॥

तदनन्तरं वशिष्ठो नाभिपीठाद्दक्षिणे क्रोशत्रयाभ्यन्तरे सन्ध्याचलपाददेशे निर्ज्जनारण्यमध्ये आश्रमं निर्म्माय तत्र योगबलेन पर्व्वतस्योच्चशेखरात् सन्ध्या ललिता कान्ता चेति त्रिधारां गंगामावाह्य तदाश्रममध्ये भूतले पातयित्वा सन्ध्योपासनादिकं सर्व्वं सम्पादयामास। अरुन्धती च तस्य भार्य्या तत् समीपे प्रस्तरमयी विराजते। तदाश्रमे गंगास्नानार्थं बहवो यात्रिजना: सन्मिलिता भवन्ति। वशिष्ठेनावतारिता तत्त्रिधारा गंगा एव उत्तरवाहिनी सती भरलुनाम्ना प्रवहन्ती ब्रह्मपुत्रनदेन मिलिता भवति। एवमेव ब्रह्मतनयो वशिष्ठ: स्वीयाग्रजेन ब्रह्मपुत्रेण नदेन सानन्दं तस्या: संयोगं स्थापयति। इहाधुनिके च काले वामाक्षेपा ताराविद्यामुपास्य सिद्धिमलभत।

## श्रीश्रीउग्रतारामहापीठरहस्यम्

**कालिकापुराणे—**

ब्रह्मशैलस्य पूर्व्वस्यां भूमिपीठे व्यवस्थितम्।
चारुनिम्नशुभावर्त्तं कामाख्यानाभिमण्डलम्॥



तत्रोग्रतारारूपेण पूजितव्या शुभात्मिका। ब्रह्मपर्व्वतस्य नीलपर्व्वतस्य वा पूर्व्वेण क्रोशद्वयान्तर्वर्त्तिकामपीठे गुवाहाटीनगरमध्ये, भूमिपीठे मनोहरनिम्नग–शुभावर्त्त कामाख्यानाभिमण्डलं महासिद्धपीठं विराजते। केचिदेकजटापीठं नाभिपीठमपि वदन्ति। तत्र परममंगलदायिनी देवी उग्रतारारूपेण पूजितव्या अत्र सत्या नाभिमण्डलपातेन पीठमिदं नाभिपीठमित्युक्तम्। अक्षोभ्यनामा भैरव:।

"तारा सम्प्रदाय: साहित्यञ्च"—ब्रह्मानन्दगिरिकृततारारहस्यग्रन्थस्य प्रथमपटले, तारामहाविद्याया ग्रन्थसंख्या वर्त्तते, यथा—तारासार:, तारानिगम:, महानील:, महाचीन:, नीलतन्त्रम्, ताराकल्प:, शक्तिसार:, शक्ति कल्प:, रुद्रयामल:, नीलसारस्वतम्, ताराकुलसर्व्वस्वमित्यादय:। अपि च तोडलतन्त्रम् ब्रह्मयामलतन्त्रस्यैकांश:, "महाचीनक्रम" नाम्ना प्रसिद्ध: एकजटाकल्प:, एकवीराकल्प:, ताराभक्तिसुधार्णव: (नरसिंहठक्कुरकृता:) तारारहस्यवृत्तिका (गौडीयशंकरविरचिता) चेत्यादि ग्रन्थसमूहश्च विशेषेणोल्लेखयोग्य:। महायानबौद्धसम्प्रदाये तारादेव्या उपासना सुप्रचलिता वर्त्तते। तान्त्रिकबौद्धसाहित्ये च तारादेवीविषयका बहवो ग्रन्था वर्त्तन्ते।

## श्रीश्रीउग्रतारादेव्या ध्यानरहस्यम्

नीलतन्त्रे —

ओं प्रत्यालीढपदां घोरां मुण्डमालाविभूषिताम्
स्वर्व्वां लम्बोदरीं भीमां व्याघ्रचर्म्मावृतां कटौ ।।
नवयौवनसम्पन्नां पञ्चमुद्राविभूषिताम्
चतुर्भुजां लोलजिह्वां महाभीमां वरप्रदाम् ।।
खड्ग-कर्त्री समायुक्ता सव्येतरभुजद्वयाम्
कपालोत्पलसंयुक्तसव्यपाणियुगान्विताम्
पिंगोग्रैकजटां ध्यायन्मौलावक्षोभ्यभूषिताम्
बालार्क्कमण्डलाकारलोचनत्रयभूषिताम्
ज्वलच्चितामध्यगतां घोरदंष्ट्रां करालिनीम्
सावेशस्मेरवदनां स्त्र्यलंकारविभूषिताम्
विश्वव्यापकतोयान्तःश्वेतपद्मोपरिस्थिताम् ।

भगवती तारादेवी प्रत्यालीढपदां अर्थात् वामपादापसारणेन संकुचित-दक्षिणपादा अवस्थिता, भयंकरी नृमुण्डमालिनी स्वर्व्वाकृति, लम्बोदरी भीषणा, व्याघ्रचर्म्मपरिधाना च एषा देवी नवयौवनसम्पन्ना पञ्चमुद्राभिरलंकृता अर्थाल्ललाटे श्वेतास्थिपञ्चपात्रधारिणी। चतुर्भुजा, लोलजिह्वा महाघोररूपिणी वरप्रदायिनी च। दक्षिणकरे खड्गकर्त्तिकां च धारयति वामहस्तद्वये नरकपालं नीलोत्पलं च बिभर्ति। मस्तके उग्रपीङ्गलवर्णया एकजटया शोभमाना, तदुपरि अक्षोभ्यभैरवो नागरूपेण विराजते। नवोदितसूर्यमण्डलसदृशनयनत्रयेण शोभमाना, प्रज्वलितचितामध्यगता, भीषणदन्तुरा, करालमूर्त्तिश्च। किन्तु सा स्वकीयवेशेन स्वयमेव हासोज्ज्वलवदना, स्त्रीजनसुलभविविधालंकारैर्विभूषिता च। विश्वब्रह्माण्डव्यापकसलिलराशिमध्ये देवी, श्वेतपद्मोपरि अवतिष्ठते।

## अक्षोभ्यभैरवरहस्यम्

समुद्रमथने देवि कालकूटसमुत्थितम्
क्षोभादिरहितं यस्मात् पीतं कालकुटं विषम्
अतएव महेशानि अक्षोभ्यः परिकीर्त्तितः
तेन सार्धं महामाया तारिणी रमते सदा ।।

तारारहस्ये उक्तं देवी तारामूर्तिधारणं कृतवती, अक्षोभ्यो महाकालश्च देव्यामस्तके नागरूपेणावस्थितः।

एतेन तारा सा जाता शीर्षेऽक्षोभ्यभुजंगमः।
महाकालः स एव स्यात् तारारूपो जगत्त्रये॥

तन्त्रशास्त्रे अक्षोभ्यस्य ऋषिरूपेण वर्णना दृश्यते। स एव प्रथमं तारा-मन्त्रस्य द्रष्टा इति कथ्यते।

**तारामन्त्रे** द्वितीयपटले—

"अक्षोभ्यश्च ऋषिः प्रोक्ता बृहतीछन्द · ईरितम्"।

महायानबौद्धधर्मे अक्षोभ्यः पञ्चध्यानिबुद्धानामन्यतमः, तारादेवी अस्त्र-शक्तिः। तारादेवी मस्तकोपरि क्षुद्रां मूर्त्तिमेकां धारयति। तारामहाविद्यायाः सविशेषं मत्प्रणीततारार्च्चनतन्त्रे द्रष्टव्यम्।

## (३) श्रीश्रीषोडशीविद्याया श्रीविद्याया वा रहस्यम्



तृतीया महाविद्या "षोड़शी" अथवा श्रीविद्या इति नाम्नाऽभिहिता। एषा सुन्दरी-त्रिपुरा, त्रिपुरसुन्दरी, राजराजेश्वरी, ललिता, कला, बालत्रिपुर-सुन्दरी, सुभगा कामेश्वरी इति नाममूर्त्तिभेदेन पूजिता भवति।

त्रिपुरासुन्दर्या श्रीविद्याया वा मूर्त्तिभेदं सम्प्रदायं साहित्यञ्च अधिकृत्य प्रसंगतः तृतीय-चतुर्थपरिच्छेदयोः कियदालोचितम्। यदवशिष्यते तन्नवम-परिच्छेदे वक्ष्यते। भगवान् शंकराचार्य्य-प्रतिष्ठित-मठ-चतुष्टये श्रीयन्त्रे श्रीविद्या पूजिता भवति। एतेन समग्रभारतवर्षे षोडशीमहाविद्यायाः प्रभावः परिलक्षितो भवति।

### श्रीविद्याध्यानस्वरूपम्

**महाकालसंहितायाम्—**

ओं ततः पद्मनिभां देवीं बालार्क्ककिरणोज्ज्वलाम्।
जवाकुसुमसंकाशां दाडिमीकुसुमोपमाम्॥
पद्मरागप्रतीकाशां कुंकुमारूणसन्निभाम्।
स्फुरन्मुकुटमाणिक्यकिंकिनीजालमण्डिताम्॥

षोडशीदेवी पद्मनिभा, प्रातःकालीनसूर्य्यकिरणवत् समुज्ज्वलकान्ति-विशिष्टा, तथा जवाकुसुमदाडिमकुसुमपद्मरागमणि-कुंकुमसदृशारुणवर्णा। उज्ज्वलमुकुटस्थितमाणिक्यमयकिंकिनीजालभूषितमस्तका।

कालालिकुलसंकाशकुटिलालकपल्लवाम्।
प्रत्यग्रारुणसंकाश-वदनाम्भोजमण्डलाम्॥
किञ्चिदुर्द्धेन्दु-कुटिलललाटमृदुपट्टिकाम्।
पिनाकिधनुराकारभ्रूलतां परमेश्वरीम्॥

कृष्णवर्णभ्रमरसमूहवत् कुटिलेन अलकेन विभूषितशिरा बालरवितुल्य-वदनकमलेन सुशोभिता कुटिलललाटफलक-विराजमानार्द्धचन्द्रा हरधनुतुल्य-कुटिलभ्रूलताशोभिता परमेश्वरी।

आनन्दमुदितोल्लास-लीलान्दोलितलोचनाम्।
स्फुरन्मयूखसंकाश-विलसद्धेम-कुण्डलाम्॥
सुगण्ड-मण्डलभोग-जितेन्द्वमृतमण्डलाम्।
विश्वकर्मविनिर्माणसूत्रसुस्पष्टनासिकाम्॥



देव्या नेत्रचय आनन्दभरेण नीमिलित उन्मीलितेनान्दोलित अभूत्। तस्याः सुवर्णकुण्डलद्वयेन स्फुरत्किरणवदुज्ज्वलप्रभाविशिष्टेन सा विराजते। सम्पूर्णं सुगण्डस्थलं चन्द्रस्यामृतमण्डलं तिरस्करोति। सुस्पष्ट-नासिका स्वयं विश्वकर्मणा विनिर्मितेव लक्ष्यते।

ताम्रविद्रुमविम्बाभरत्नौष्ठीममृतोपमाम्।
स्मितमाधुर्य्यविजितमाधुर्य्यरससागराम्॥
अनौपम्यगुणोपेतचिवुकदेशशोभिताम्।
कम्बुग्रीवां महादेवीं मृणाललिलितैर्भुजैः॥
रक्तोत्पलदलाकार-सुकुमार-कराम्बुजाम्॥

ताम्र-विद्रुम-विम्बफलवत्तस्या अधरो रक्तवर्णः, देवी अमृतोपमा तस्या मृदुमन्दहास्यं माधुर्य्यरससागरस्य माधुर्य्यमपि पराजयते। अनुपमगुणविशिष्ट-चिवुकदेशेन देवी सातिशयं सुशोभिता, महादेवी शङ्खवद्ग्रीवाशोभिता मृदु-मृणालतुल्यभुजचतुष्टयेन रक्तोत्पलदलसदृशसुकुमारकरपद्मानि धारयति।

रक्ताम्बुज-नखज्योतिवितानित-नभःस्थलम् ।
मुक्ताहारलतोपेतसमुन्नतपयोधराम् ।।
त्रिबलिवलयायुक्तमध्यदेशसुशोभिताम् ।
लावण्यसरिदावर्त्ताकारनाभि-विभूषिताम् ।।

देव्या रक्तपदतुल्यनखप्रभया नभोमण्डलं वितानविशिष्टमिव शोभते, देवीस्तनद्वयोपरि मुक्ताहारलतया सातिशयं शोभमाना, त्रिबलिरेखायुक्त-मध्यदेशेन च अतीव मनोहरा। नाभिमण्डलं लावण्यसरिदावर्त्तवत् सुशोभितम् ।

अनर्थरत्नघटित-काञ्चीयुतनितम्बिनीम् ।
नितम्बविम्बद्विरद-रोमराजि-वरांकुशाम् ।।
कदली-ललितस्तम्भसुकुमारोरुमीश्वरीम् ।
लावण्यकुसुमाकारजानुमण्डलबन्धुराम् ।।

ईश्वरी महामूल्यरत्नग्रथितकाञ्चीहार-शोभितनितम्बिनी। देव्याः सुललितकरिकरविनिन्दितकदलीस्तम्भवत् सुकुमारमुरुद्वयं लावण्यपूर्णं, सुकोमलकुसुमसदृशं जानुमण्डलम्।



लावण्यकदलीतुल्य-जंवायुगलमण्डिताम् ।
गुदगुल्फ-पदद्वन्द्व-प्रपदाजितकच्छपाम् ।।
तनुदीर्घांगुलिस्वच्छ-नखराजिविराजिताम् ।
ब्रह्मविष्णु-शिरोरत्न-नृघृष्ट-चरणाम्बुजाम् ।।

देवी लावण्यपूर्णकदलीसदृश जंवाद्वयविशिष्टा तस्याश्चरणयुगलगुलफद्वयं कच्छप इव सुगुप्तम् । देवीशरीरस्य पादाग्रविस्तृतदीर्घांगुलिसमूहे स्वच्छनखराजिः शोभां तनुते। ब्रह्मविष्णोः शिरोरत्नेन मार्जितचरण-कमलविशिष्टा च ।

शीतांशु-शत-संकाश-कान्ति-सन्तानहासिनीम् ।
लौहित्य-जितसिन्दुर-जवा-दाडिमरूपिणीम् ।।
रक्तवस्त्रपरिधानां पाशांकुश-करोद्यताम् ।
रक्तपद्मनिविष्टां तु रक्ताभरणभूषिताम् ।।

शतचन्द्राणां सुस्निग्धप्रभाभिर्देव्या देहकान्तिः समुज्ज्वला, स्वशरीरस्य-लोहितप्रभया सिन्दुर-जवा-दाडिमकुसुमानां च प्रभा पराजिता। देवीरक्तवस्त्र-परिधाना हस्तद्वये उद्यत्पाशांकुशधारिणी। रक्तपद्मोपरि उपविष्टा रक्ताभरण-भूषिता च।

चतुर्भुजां त्रिनेत्रान्तु पञ्चवाणधनुर्द्धराम्।
कर्पूरशकलोन्मिश्र-ताम्बुलपूरिताननाम्॥
महामृगमदोद्दाम-कुंकुमारुणविग्रहाम्।
सर्व्वशृङ्गारवेशाढयां सर्व्वाभरणभूषिताम्॥

देवी चतुर्भुजा त्रिनयना च, एषा अपरहस्तद्वये पञ्चवाणान् धनुश्च धारयति। अस्या वदनं कर्पूरकणमिश्रितताम्बुलरसेन परिपूर्णम्। सर्व्वाङ्गा-न्यस्याः कस्तुरी-कुंकुमानुलेपनेन अरुण-वर्ण-रञ्जितानि। सा सर्व्वप्रकार-श्रृंगारोचितवेशभूषाभिः सुसज्जितदेहविशिष्टा।

जगदाह्लादजननीं जगद्रञ्जनकारिणीम्।
जगदाकर्षणकरीं जगत्कारणरूपिणीम्॥
सर्व्वमन्त्रमयीं देवीं सर्व्वसौभाग्यसुन्दरीम्।
सर्व्वलक्ष्मीमयीं नित्यां सर्व्वशक्तिमयीं शिवाम्॥

देवी जगत आह्लादोत्पादनकारिणी, जगज्जनानां रञ्जनकारिणी, जगदाकर्षणकारिणी, जगत्कारणरूपिणी च। एषा देवी षोडशी सर्व्वमन्त्रमयी, सर्व्वसौभाग्यसमृद्धा सुन्दरी, सर्व्वलक्ष्मीमयी, सर्व्वशक्तिमयी, नित्या मंगलमयी च। इत्येवंरूपेण षोडशीं ध्यायेत्। संक्षिप्तध्यानं यथा--

बालार्क्कमण्डलाभाषां चतुर्बाहुत्रिलोचनाम्।
पाशांकुश-शरांश्चापं धारयन्तीं शिवां भजे॥

पञ्चप्रेतासना भगवती षोडशी देवी श्रीविद्या वा। तदुक्तं **यामले**--

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः।
एते पञ्चमहाप्रेताः सिंहासनपरिस्थिताः
एते देव्यासनस्याध्यः शिवाः पञ्चव्यवस्थिताः॥

अत्र चतुर्भिः शिवैर्मञ्चं विधाय परमशिवं सदाशिवं प्रच्छदीकृत्य इत्यर्थः। (आनन्दलहर्याम् अष्टमश्लोके अच्युतानन्दः)। ब्रह्मविष्णु-रुद्र-ईश्वरा देवी-

पर्यङ्कस्य चतुष्पादाः, सदाशिवः फलकरूपेणावस्थितः। एतद् **देवीभागवते** उक्तम्। **महाकालसंहितायां** त्रिपुरासुन्दरीदेव्याः पर्य्यंकवर्णना एतादृशी दृश्यते–

रत्नसिंहासनं तस्या देव्या मध्ये स्मरेच्छुभम्।
विरिञ्चि-विष्णु-रुद्रेश-रूपपादचतुष्टयम्॥
सदाशिवमयं साक्षात् तस्मिन् परशिवात्मकम्।
पुष्पपर्य्यंकं तन्मध्ये श्रीमदुद्यानपीठके॥
पर्य्यंकबन्धविलसत् स्वस्तिकासनशालिनीम्।
त्रिपुरां सुन्दरीं देवीं बालार्क्ककिरणारुणाम्॥

ब्रह्मादिपञ्चशिवानां पञ्चप्रेतसंज्ञातातपर्य्यमेतदेव,-शक्तियुक्तशिवो हि सृष्टयादिकार्य्ये समर्थो भवति, शक्तिहीनः शवतुल्यनिष्क्रियो भवति। तदुक्तम् **आनन्दलहर्य्यां** प्रथमश्लोके—

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुम्।
न च देवं देवो न खलु कुशलः स्पन्दितुमपि॥

निर्व्विशेषब्रह्मैव स्वशक्तिविलासेन ब्रह्मविष्णुरित्युपाधिविशिष्टं सत् वामादि-तत्-तत्-शक्तिसान्निध्येन, सृष्टि-स्थिति-लय-निग्रहानुग्रहरूपपञ्चकृत्यानि सम्पादयति। यदा ब्रह्मादिपञ्चशिवाः स्वस्ववामादिशक्तिरहिताः सन्तो निष्क्रिया भवन्ति तदा ते पञ्चप्रेता इत्युच्यन्ते।

## (४) श्रीश्रीभुवनेश्वरीमहाविद्यारहस्यम्

**शारदातिलके**—

उद्यद्दिनकरद्युतिमिन्दुकिरीटां तुंगकुचां नयनत्रययुक्ताम्।
स्मेरमुखीं वरांकुशपाशाभीतिकरां प्रभजेद् भुवनेशीम्॥

भुवनेश्वरीदेव्याः शरीरकान्तिरुदीयमानसूर्य्यसदृशी। मुकुटोपरि चन्द्रकला विराजिता, उन्नतस्तनी, त्रिनयना ईषद्धास्यवदना। भुजचतुष्टये वराभयमुद्रे तथा पाशांकुशौ च धारयति।

॥ भुवनेश्वरी मूर्तिभेदः॥ तन्त्रशास्त्रे भुवनेश्वरीदेवी कुत्रचिद् रक्तवर्णा, द्विभुजा अन्यत्र च श्यामवर्णा चतुर्भुजा इत्येवमेव तस्य मूर्तिभेदो दृश्यते। बीजमन्त्रमपि पृथक् पृथक् वर्त्तते।

(२) सिन्दुरारुणविग्रहां त्रिनयनां मानिक्यमौलिस्फुरत्
तारानायकशेखरां स्मितमुखोमापीनवक्षोरुहाम्
पाणिभ्यां मणिपूर्णरत्नचषकं रक्तोत्पलं बिभ्रतीं
सोभ्यां रत्नघटस्थ-सव्यचरणां ध्यायेत्परामम्बिकाम्।

देवी सिन्दुरवद्रक्तवर्णा, त्रिनयना मस्तकचूडायां माणिक्येन विराजिता शेखरे चन्द्रकलया विराजिता। देवी सर्व्वदा हास्यमुखी, पीनोन्नतपयोधरा द्विभुजा। एकहस्ते मणिपूर्णं रत्नखचितं पानपात्रमपहस्ते रक्तपद्मं धारयति। परमाम्बिकादेव्याः सौम्यमुर्त्तिर्दक्षिणचरणं रत्नघटोपरिस्थापिता च।

(३) श्यामांगीं .शशिशेखरां निजकरैर्धृतञ्चरक्तोत्पलम्
रत्नाढयं चषकं वराभयकरां संविभ्रतीं शाश्वतीम्।
मुक्ताहारलसत्-पयोधरलतां नेत्रत्रयोल्लासिनीं
वन्देऽहं सुरपूजितां हरवधूं रक्तारविन्दस्थिताम्॥

देवी भुवनेश्वरी श्यामवर्णा अर्द्धचन्द्रेण शोभितललाटा चतुर्भुजेषु वरदान-मुद्रा, रक्तपद्मं, रक्तमयपात्रमेवमभययमुद्राञ्च धारयति। देवी सनातनी मुक्ता-हारेण देदीप्यमाना, स्तनभारनम्रा, त्रिनेत्रा रक्तपद्मोपरि आसीना, सुरगण-पूजिता च। ईदृशीं हरवधूभुवनेश्वरीदेवीं वन्दे।

"भुवनेश्वरी साहित्यम्"—पुरश्चर्यार्णवस्य नवमतरंगे भुवनेश्वरीप्रकरण-मस्ति। शाक्तप्रमोदे भुवनेश्वरीप्रकरणं तन्त्रसारे च भुवनेश्वरी पूजापद्धति-र्द्रष्टव्या। देवीभागवते (१२।१२) अध्याये मणिद्वीपभगवतीभुवनेश्वरी-विवरणमस्ति। देवीभागवतस्य टीकोपक्रमणिकायां शैवनीलकण्ठेन भुवनेश्वरी-तत्त्वमालोचितम्। एतत्प्रसंगे "भुवनेश्वरी उपनिषद्"—भुवनेश्वरीपारि-जातादिग्रन्ठोऽप्युल्लेखनीयः।

## (५) श्रीश्रीभैरवीमहाविद्यारहस्यम्

भैरवीध्यानं त्रिपुर-भैरवीध्यानं वा **तन्त्रसारे**—

ओं उद्यद्भानुसहस्रकान्तिमरुणक्षौमां शिरोमालिकाम्।
रक्तालिप्तपयोधरां जपवटीं विद्यामभीतिं वरम्॥
हस्ताब्जैर्दधतीं त्रिनेत्रविलसद्रक्तारविन्दश्रियम्।
देवीं बद्धहिमांशुरत्नमुकुटां वन्दे सुमन्दस्मिताम्॥

भैरवीदेव्या उदीयमानसहस्रसूर्य्यवद्देहकान्तिः, सा देवी रक्तवर्णा। कौषेयवस्त्रपरिधाना, नृमुण्डमालिनी रक्तरञ्जितस्तनभारनम्रा, करकमलचतुष्टये जपमालां, पुस्तकं वराभयमुद्रां च धारयति। सा त्रिनेत्रशोभिता, कमलवत् श्रीसम्पन्नं तस्या मुखमण्डलम्। यस्या रत्नमुकुटे चन्द्रो निबद्धः, तां मृदुमन्द-हास्यमयीं भैरवीदेवीं वन्दे॥

"भैरवीमूर्तिभेदः"––ज्ञानार्णव––शारदातिलक मेरुतन्त्रादि-ग्रन्थेषुभैरव्यां बहुप्रकारमूर्त्तिभेदो वर्णितः। पुरश्चर्य्यार्णवस्य नवमतरंगान्तर्गतभैरवी-प्रकरणे त्रिपुरभैरवी भुवनेश्वरभैरवी, चैतन्यभैरवी, कमलेश्वरीभैरवी, सम्पत्प्रदाभैरवी, कौलेश-भैरवी, कामेश्वरीभैरवी, षट्कूटा भैरवी, नित्या भैरवी, रुद्रभैरवी चेत्येतासां ध्यानमन्त्राः सन्ति। तन्त्रसारेऽपि मूर्त्तिभेदाः दृश्यन्ते। यथा सकलसिद्धिदा भैरवी, भय-विध्वंशिनी भैरवी, त्रिपुरबाला भैरवी, नवकूटबाला भैरवी, अन्नपूर्णा भैरवी च। आसां ध्यान-पूजा-मन्त्रा अपि तन्त्रसारे प्रदत्ताः सन्ति। एतेनानुमीयते––एकदा भैरवी महाविद्याया बृहत्साधकसम्प्रदाय आसीत्।

## (६) श्रीश्रीछिन्नमस्ता महाविद्यारहस्यम्

षष्ठमहाविद्याया नामान्तरं "प्रचण्डचण्डिका"––विश्वसारतन्त्रे, यामले चोक्तम्––एषा महाविद्या सर्व्वकाम-फलप्रदा। अस्याः कृपाकटाक्षेण साधकः सदाशिवत्वं लभते। सकामसाधको भगवत्याश्छिन्नमस्ताया उपासनया, पुत्र-धन-धान्यादिकञ्च लभते। देव्याः कृपया भक्तः कवित्वं सुपाण्डित्यं च लब्ध्वा धन्यो भवति। उक्तञ्च––

प्रचण्डचण्डिकां वक्ष्ये सर्व्वकामफलप्रदाम्
यस्याः प्रसादमात्रेण सदाशिवो भवेन्तरः
अपुत्रो लभते पुत्रमधनो धनवान् भवेत्
कवित्वं च सुपाण्डित्यं लभते नात्र संशयः॥

छिन्नमस्ताध्यानं **महाकालसंहितायां** यथा––

स्वनाभौ नीरजं ध्यायेदर्द्धविकसितं सितम्
तत्पद्मकोषमध्ये तु मण्डलं चण्डरोचिषः
जवाकुसुमसकाशं रक्तबन्धुकसन्निभम्
रजःसत्त्वतमोरेखायोनिमण्डल-मण्डितम्
मध्ये तु तां महादेवीं सूर्य्यकोटिसमप्रभाम्॥

स्वीयनाभिमण्डले अर्द्धविकसितश्वेतपद्मं ध्यायेत्। तत्पद्मकोषमध्ये सूर्य्यमण्डलम्। तन्मण्डलं जवापुष्पवत् बन्धुकपुष्पवत् वा रक्तवर्णं, रजःसत्त्व-तमःस्वरूपरेखात्रयेणग्रथितयोनिमण्डलेन मण्डितं, तन्मण्डलमध्ये कोटिसूर्य्यवत्प्रभाशालिनी महादेवी छिन्नमस्ता विराजिता।

छिन्नमस्तां करे वामे धारयन्तीं स्वमस्तकम्
प्रसारितमुखीं भीमां लेलिहानाग्रजिह्विकाम्।।
पिवन्तीं रौधिरीं धारां निजकण्ठविनिर्गताम्
विकीर्णकेशपाशाञ्च नानापुष्पसमन्विताम्।।

छिन्नमस्तादेवी निजवामकरे स्वीयछिन्नमस्तकं धारयति। तस्या मुख विस्तृतं भयंकरञ्च, जिह्वाग्रभाग लेलिहानः। निजकण्ठविनिर्गतरुधिरधारां पिवन्ती देवी नानाविधपुष्पैः शोभिता, विगलितकेशसमूहा च विराजते।

दक्षिणे च करे कत्री मुण्डमालाविभूषिताम्
दिगम्बरीं महाघोरां प्रत्यालीढपदेस्थिताम्
अस्थिमालाधरां देवीं नागयज्ञोपवीतिनीम्
रतिकामोपविष्टाञ्च सदा ध्यायन्ति मन्त्रिणः।
सदा षोडशवर्षीयां पीनोन्नतपयोधराम्।
विपरीतरतासक्तौ ध्यायेद् रतिमनोभवौ।।

देव्या दक्षिणकरे कर्त्तृका, गले मुण्डमाला सा विवस्त्रा भयंकरी, प्रत्यालीढपदेस्थिता; अर्थात् (प्रसारितवामपादा संकुचितदक्षिणपादा च)। देवी अस्थिमालापरिधाना नागयज्ञोपवीतिनी—सा सदा षोडशवर्षीया। पीनोन्नतस्तनभरा, एषा रतिकामदेवोपरि दण्डायमाना, साधकास्तामेवंरूपां सर्व्वदा ध्यायन्ति। (रतिकामदेवौ च) विपरीतरतासक्ताविति ध्यायेत्।

डाकिनी-वर्णिनीयुक्तां वाम-दक्षिणयोगतः
देवीगलोच्छलद्-रक्तधारापानं प्रकुर्व्वतीम्।।

छिन्नमस्तादेव्या वामे "डाकिनी" दक्षिणे "वर्णिनी" नाम नायिकेऽवस्थिते। उभावपि देव्या गलदेशान्निर्गतां रुधिरधारां पिवतः।

वर्णिनीं लोहितां सौम्यां मुक्तकेशीं दिगम्बरीम् ।
कपालकर्त्तृकाहस्तां वामदक्षिणयोगतः ।
प्रत्यालीढपदां दिव्यां नानालंकारभूषिताम्
सदा द्वादशवर्षीयामस्थिमालाविभूषिताम् ।।

छिन्नमस्ता देव्या दक्षिणेऽवस्थिता वर्णिनी रक्तवर्णा सौम्याकृतिः, मुक्तकेशी, दिगम्बरी च। सा वामकरे नरकपालपात्रं दक्षिणकरे कर्त्तृकां धारयति नागयज्ञोपवीतिनी, ज्वलत्तेजःस्वरूपा प्रत्यालीढपदा दिव्या, नानाभूषणभूषिता। सदा द्वादशवर्षीया अस्थिमालाविभूषणा च।

डाकिनीं वामपार्श्वस्थां कल्पसूर्यानलोपमाम्
विद्युज्जटां त्रिनयनां दन्तपंक्तिबलाकिनीम्
दंष्ट्राकरालवदनां पीनोन्नतपयोधराम्
महादेवीं महाघोरां मुक्तकेशीं दिगम्बरीम्
लेलिहानमहाजिह्वां मुण्डमालाविभूषिताम्
कपालकर्त्तृकाहस्तां वामदक्षिणयोगतः
देवीगलोच्छलद्रक्तधारा-पानं प्रकुर्व्वतीम्
करस्थितकपालेन भीषणेनातिभीषणाम् ।।

छिन्नमस्तादेव्या वामपार्श्वेऽवस्थिता डाकिनी, कल्पान्तकालीनसूर्य्याग्नितुल्या विद्युज्जटाजुटेन देदीप्यमाना त्रिनयना, शुभ्रदशना च। दन्तसमूहेनातिभयंकरी, पीनोन्नतपयोधरा सा महादेवी महाभयंकरी, मुक्तकेशी दिगम्बरी, सुवृहल्लोलजिह्वा, मुण्डमालाधारिणी च। वामहस्ते सा कपालं दक्षिणहस्ते कर्त्तृकां धारयति। छिन्नमस्तागलनिःसृतरक्तधारां पिवन्ती सती करस्थितभीषणनरकपालेनातिभीषणमूर्त्तिं धारयति।

आभ्यां निसेव्यमानां तां ध्यायेद्देवीं विचक्षणः दुर्निरीक्ष्यां चेतसाऽपि सर्वकामफलप्रदाम्। आभ्यां डाकिनीवर्णिनीभ्यां सेव्यमानां छिन्नमस्तादेवीं, विचक्षणसाधको ध्यायेत्। एषा चिन्तया दुरधिगम्याऽपि साधकाय सर्व्वकामफलप्रदा भवति।

"शाक्तप्रमोदे" संगृहीतं छिन्नमस्तास्तोत्रं, "भैरवतन्त्रो"क्तं त्रैलोक्यविजय-कवचं 'नन्दयावर्त्ते' छिन्नमस्ताहृदय-स्तोत्रं, छिन्नमस्ताशतनामस्तोत्रं च तथा विश्वसारतन्त्रोक्तं छिन्नमस्तासहस्रनामस्तोत्रञ्च द्रष्टव्यानि।

## (७) श्रीश्रीधूमावती महाविद्यारहस्यम्

धूमावतीदेव्या मन्त्रः पूजाप्रणाली च "फेत्कारिणी"तन्त्रे लिखिते स्तः। मूर्त्तिरेषा सर्व्वशत्रुविनाशिनी। उक्तञ्च--

"धूमावतीमनुः प्रोक्तो वैरिनिग्रहकारकः

महाथर्वणसंहितायामुक्तम्--

"अष्टाक्षरी महाविद्या भजतां सर्व्वसिद्धिदा"।

ध्यानं मेरुतन्त्रे यथा--

विवर्णा चञ्चला रुष्टा दीर्घा च मलिनाम्बरा।
विवर्णकुण्डला रुक्षा विधवा विरला द्विजा॥
काकध्वजरथारुढा विलम्बितपयोधरा।
शूर्पहस्तातिरुक्षाक्षी धूतहस्ता वरान्विता॥
प्रवृद्धघोणा तु भृशं कुटिला कुटिलेक्षणा।
क्षुत्पिपासार्द्दिता नित्यं भयदा कलहप्रिया॥



धूमावती देवी विवर्णा, चञ्चला, कोपान्विता दिर्घांगी मलीनवसना च। एषा विवर्णकेशा रुक्षा, विधवावेशा, विरलदशना, काकध्वजरथारुढा अति-लम्बमान-स्तना शूर्पहस्ता रुक्षनेत्रा, सातिशयरुक्षा, कम्पितहस्ता च। अपरहस्ते च वरमुद्राधारिणी। अस्या नासिकारन्ध्रः विस्तृतः देहभंगिश्चातिकुटिला। एषा सर्व्वदा क्षुत्पिपासया कातरा, भयप्रदा, तथा कलहप्रिया च।

उर्द्धाम्नाये धूमावतीस्तोत्रं प्रसिद्धम्--

महापदि महाघोरे महारोगे महारणे
शत्रूच्चाटे मारणादौ जन्तूनां मोहने तथा
पठेत् स्तोत्रमिदं देव्याः सर्व्वत्र सिद्धिभाग् भवेत्।

महाविपदि, महासंकटे, महारोगे, महारणे, शत्रूणामुच्चाटने मारणा-द्यभिचारकर्म्मणि जन्तूनां सम्मोहने च धूमावतीस्तोत्रपाठे सर्व्वसिद्धिर्भवति।

स्तोत्रेणानेन देवेशि किं न सिध्यति भूतले।
सर्व्वशान्तिर्भवेद्देवि अन्ते निर्व्वाणतां व्रजेत्॥

हे देवेशि ! अनेन स्तोत्रपाठेन धरातले सर्व्वकर्माणि सिध्यन्ति, साधकाः सर्व्वशान्ति लभन्ते, निर्व्वाणमुक्तिमपि प्राप्नुवन्ति। "शाक्तप्रमोदे"—धूमावती-कवचं हृदयं सहस्रनामानि च द्रष्टव्यानि।

## (८) श्रीश्रीवगलामहाविद्यारहस्यम्

अष्टममहाविद्या वगला वगलामुखी वा इति नाम्ना प्रसिद्धा तन्त्रशास्त्रे एषा कुत्र कुत्रापि पीताम्बरी वेत्यभिहिता। **यामलतन्त्र** वगलामुखीध्यानं यथा,—

(१) मध्ये सुधाब्धिमणिमण्डपरत्नवेदी-
सिंहासनोपरिगतां परिपीतवर्णाम्।
पीताम्बराभरणमाल्यविभूषितांगीम्
देवीं स्मरामि धृतमुद्गरवैरिजिह्वाम्॥

सुधासागरमध्ये मणिमयमण्डपं तन्मध्ये मणिमयवेदिकोपरिस्थापित-रत्नसिंहासने वगलामुखी देवी उपविष्टा, एषा देवी सम्यक् पीतवर्णा, पीतवस्त्रपरिधाना, पीताभरणभूषिता पीतमाल्यविभूषणा च। एषा एकहस्ते मुदगरम् अपरहस्ते शत्रुजिह्वां धारयति। एवंरूपा वगलामुखीदेवीं स्मरामि।

जिह्वाग्रमादायकरेण देवीं वामेन शत्रून् परिपीडयन्तीम्।
गदाभिघातेन च दक्षिणेन पीताम्बराढ्यां द्विभुजां नमामि॥

देवी वामहस्ते शत्रुजिह्वाग्रमाकृष्य, दक्षिणहस्तस्थितगदाघातेन शत्रुं निपीडयति। पीतवस्त्रशोभितां द्विभुजां वगलादेवीं प्रणमामि।

**मेरुतन्त्रे** चतुर्भुजवगलामुखीध्यानं दृश्यते यथा—

(२) गम्भीरां च मदोन्मत्तां तप्तकाञ्चनसन्निभाम्
चतुर्भुजां त्रिनयनां कमलासनसंस्थिताम्।
मुद्गरं दक्षिणे पाशं वामे जिह्वां च वज्रकम्॥
पीताम्बरधरां सान्द्रवृत्त-पीन-पयोधराम्।
हेम-कुण्डलभूषां च पीत चन्द्रार्द्धशेखराम्।
पीतभूषणभूषां च स्वर्णसिंहासनस्थिताम्॥

देवी वगला गम्भीराकृतिर्मदोन्मत्ता तप्तकाञ्चनवर्णा, चतुर्भुजा त्रिनयना पद्मासनोपविष्टा। दक्षिणहस्तद्वये मुद्‌गरं पाशमेवं वामहस्तद्वये वैरिजिह्वां वज्रञ्च धारयति। एषा पीताम्बरधारिणी, मनोज्ञ-वर्त्तुल-स्थूल-स्तनयुग्मा, स्वर्णकुण्डलान्विता, पीतार्द्धचन्द्रे शोभमान-किरीटिविशिष्टा, पीतवर्णालंकार-विभूषणा, तथा स्वर्णसिंहासने समासीना।

"वगलाया माहात्म्यं"—वैरिस्तम्भनाद्यभिचारिककर्म्मणि प्रायशो वगलामन्त्रस्यैव विनियोगो भवति।

ब्रह्मास्त्रं संप्रवक्ष्यामि सद्यः प्रत्ययकारकम्
साधकानां हितार्थाय स्तम्भनाय च वैरिणाम्
यस्याः स्मरणमात्रेण पवनोऽपि स्थिरायते॥

साधकानां हितसाधनार्थं शत्रूणां स्तम्भनकारकं ब्रह्मास्त्रस्वरूपं वगला-मुखीमन्त्रं कथयामि। एतद् ब्रह्मास्त्रस्वरूपमन्त्रः प्रयोगमात्रं फलमुत्पाद्य लोकप्रत्ययं जनयति। वगलामुखीमन्त्रस्मरणेन पवनोऽपि स्थिरायते।

**रुद्रयामलतन्त्रोक्तवगलामुखीस्तोत्र** उक्तम्—

वादी मुकति रंकति क्षितिपतिर्व्वैश्वानरः शीतति
क्रोधी शाम्यति दुर्ज्जनः सुजनति क्षिप्रानुगः खञ्जति
गर्व्वी खर्व्वति सर्व्वविच्च जडति त्वन्मन्त्रिणा मन्त्रितः
श्रीर्नित्ये वगलामुखि प्रतिदिनं कल्याणि तुभ्यं नमः॥

हे मातः। त्वन्मन्त्रजपपरायणजनस्याग्रे वादिनो मुका इव तिष्ठन्ति। क्षितिपतिः दरिद्रो भवति, अग्निः शीतत्वं याति क्रोधिजनः शाम्यति, दुर्ज्जनः सुजनवदाचरति, द्रुतगामिजनः खञ्जवद् भवति, गर्व्वितजनः खर्व्वी भवति, सर्व्वज्ञोऽपि जडवद् भवति। हे नित्ये! वगलामुखि त्वं सर्व्वमंगलमयी, त्वां सर्व्वदा प्रणमामि।

**श्रीश्रीमातंगीमहाविद्यारहस्यम्**

**वामकेश्वरतन्त्र** उक्तम्—मातंगीदेवी सर्व्वसिद्धिदायिनी। अस्या उपा-सनामात्रमचिरात् साधकस्य वाक्‌सिद्धिर्भवति।

अथ वक्ष्ये महादेवीं मातंगीं सर्व्वसिद्धिदाम्
अस्योपासनामात्रेण वाक्‌सिद्धिं लभतेऽचिरात्।

मातंगीध्यानम्—

श्यामांगीं शशिशेखरां त्रिनयनां रत्नसिंहासनस्थिताम्।
भजेवेदैर्बाहुदण्डैरसि-खेटकपाशांकुशधराम्॥

मातंगीदेवी श्यामांगी मस्तके अर्द्धचन्द्रधारिणी, त्रिनयना, तथा सिंहा-सनोपरि उपविष्टा। एषा देवी भुजचतुष्टये खड्गखेटकपाशांकुशान् धारयति।

**पुरश्चर्य्यार्णव**धृत-**यामलो**क्त ध्यानम्—

श्यामांगीं शशिशेखरां त्रिनयनां सद्रत्नसिंहासने
संस्थां रत्नविचित्रभूषणयुतां संक्षीणमध्यस्थलाम्
आपीनस्तनमण्डलां स्मितमुखीं ध्यायेद्दधन्तीं क्रमात्
वेदैर्बाहुभिरंकुशासिलतिके पाशं तथा खेटकम्॥

मातङ्गीदेवी श्यामवर्णा, मस्तके अर्द्धचन्द्रधारिणी, त्रिनयना उत्तमरत्न-सिंहासने उपविष्टा, रत्नमयविचित्रभूषणैरलंकृता। तस्याः मध्यदेशः क्षीणः, स्तनमण्डलं स्थूलं सा देवी सहास्यवदना, चतुर्भुजेषु अंकुश-असि-पाश-खेटकांश्च धारयतीत्येवं ध्यायेत्।



मातङ्गीमूर्त्तिभेदः—**पुरश्चर्य्यार्णवे** यथा—

(१) उच्छिष्टचण्डाली, (२) राजमातङ्गी, (३) सुमुखी, (४) वैश्य-मातङ्गी, (५) कर्णमातङ्गी चेति।

मातङ्गी माहात्म्यम्—रुद्रयामले मातङ्गीस्तोत्रे उक्तं ब्रह्मादि देवगणा मातङ्गिनीमाराध्य, परमसौभाग्यं प्राप्ताः। तस्याः प्रासादाद्हृदये वेदविद्या प्रबोधिता भवति।

आराध्य मातुश्चरणाम्बुजे ते ब्रह्मादयो विश्रुतकीर्त्तिमापुः।
अन्ये परं वा विभवं मुनीन्द्राः परां श्रियं भक्तिभरेण चान्ये।

मातः ब्रह्मादिदेवगणास्तवपादपद्ममाराध्य विश्रुतकीर्त्तिलाभमकुर्व्वन्। अन्यान्यमुनीन्द्रगणा अपि परमविभवमलभन्त, एवमपरेऽनेके भक्तिभरेणाराध्य परमश्रियमवापुः।

नमामि देवीं नवचन्द्रमौलिं मातङ्गिनीं चन्द्रकलावतंसाम्
आम्नायकृत्यप्रतिपादितार्थां प्रबोधयन्तीं हृदि सादरेण।

यस्या ललाटदेशे चन्द्रकला शोभमाना, या देवी वेदप्रतिपादितार्थं सादरेण हृदये प्रतिबोधयति, तां मातङ्गिनीदेवीं नमामि। "शाक्तप्रमोदे" मातङ्गी-स्तोस्त्रं कवचं, हृदयं शतसहस्रनामानि च द्रष्टव्यानि।

## (१०) श्रीश्रीकमलात्मिकामहाविद्यारहस्यम्

दशमहाविद्या कमला, कमलात्मिका लक्ष्मीविद्या वा महालक्ष्मीनाम्नाऽभिहिता। अस्याः कृपाकटाक्षेण साधकस्य परमश्रीसौभाग्यबृद्धिर्भवति। उक्तञ्च **शारदातिकलतन्त्रे**—

अथ वक्ष्ये श्रियो मन्त्रान् श्रीसौभाग्यफलप्रदान्
यस्याः कटाक्षमात्रेण त्रैलोक्यमपि वर्द्धते।

यस्याः कटाक्षमात्रेण त्रैलोक्यस्यापि श्रीबृद्धिर्भवति, तस्याः श्रीदेव्या मन्त्रसमूहान् कथयामि।



"**शारदातिलके**"—कमलात्मिकाध्यानम्—

कान्त्या काञ्चनसन्निभां हिमगिरिप्रख्यैश्चतुर्भिर्गजै-
र्हस्तोत्क्षिप्त-हिरण्मयामृतघटैरासिच्यमानां श्रियम्
विभ्राणां वरमब्जयुग्ममभयं हस्तैः किरीटोज्ज्वलाम्
क्षौमाबद्धनितम्बविम्बललितां वन्देऽरविन्दस्थिताम्।

कमलात्मिकादेव्या देहकान्तिः स्वर्णवत् समुज्ज्वला, हिमगिरिसदृशश्वेतवर्णा चतुर्भिर्गजैः करधृतामृतपूर्ण-स्वर्ण-कुम्भचतुर्भिर्देवी अभिषिच्यमाना, चतुर्भुज देवी वराभयमुद्रां धारयति। समुज्ज्वलकिरीटि-विभूषितमस्तका पट्टवस्त्र-परिधाना नितम्बविम्बेनातीव मनोहरा पद्मोपरिसमासीना च। ईदृशीं कमलात्मिकादेवीं वन्दे।

"**शारदातिलके**" महालक्ष्मीध्यानम्—

बालार्कद्युतिमिन्दुखण्डविलसत्कोटिरहारोज्ज्वलाम्
रत्नकल्पविभूषितां कुचनतां शालैः करैर्मञ्जरीम्,
पद्मौ कौस्तुभरत्नमप्यविरतं संविभ्रतीं सुस्मितां
फुल्लाम्भोजविलोचनत्रययुतां ध्यायेत् परामम्बिकाम्॥

महालक्ष्मीदेव्याः शरीरकान्तिर्बालसूर्य्यसदृशी अर्द्धचन्द्रशोभितकिरीटमस्तका समुज्ज्वलमणिमयहारविराजमानकण्ठा रत्नभूषणभूषिता च। स्तनभारनम्रा चतुर्भुजे धान्यमञ्जर्यः पद्मद्वयं तथा कौस्तुभमणिं च धारयति। प्रस्फुरितपद्मवन्नेत्रत्रयविशिष्टा एवंरूपां सुहास्यमयीं देवीं ध्यायेत्।

अपरं कमलाध्यानं **तन्त्रसारे**—

आसीना सरसिरुहे स्मितमुखीहस्ताम्बुजैर्व्विभ्रती
दानं पद्मयुगाभये च वपुषा सौदामिनीसन्निभा
मुक्ताहारविराजमाना पृथुलोत्तुङ्गस्तनोद्भासिनी
पायाद् वः कमलाकटाक्षविभवैरानन्दयन्त्री हरिम्।

कमला पद्मोपरि उपविष्टा, हास्यवदना, एषा हस्तचतुष्टये वरमुद्रां पद्मद्वयमभयमुद्राञ्च धारयति। तस्याः सौदामिनीवद् देहकान्तिः, गले मुक्ताहारः, स्तनौ पीनोन्नतौ च। एषाहि कटाक्षभङ्गिमया श्रीहरिमानन्दयति। एषा कमला युस्मान् रक्षतु। "शाक्तप्रमोदे" कमलात्मिकायाः स्तोत्रं कवचं हृदयम् अष्टोत्तरशतनामानि सहस्रनामानि च द्रष्टव्यानि।

कमलात्मिकाया मूर्त्तिभेदाः पुरश्चर्य्यार्णवे नवमतरङ्गे लक्ष्मीविद्याप्रकरणे—कमलात्मिका महालक्ष्मीः, साम्राज्यलक्ष्मीः गजलक्ष्मीरित्यादयो मूर्त्तिभेदा उल्लिखिताः। निखिलभुवनमध्ये महालक्ष्मीरेव प्रधाना, विश्वप्रकाशिनी महाशक्तिरिति तत्त्वम्।

आद्याशक्तिर्दशमहाविद्या च भगवती परमेश्वरी चण्डी युगपत् विश्वातिरिक्ता आद्या पराशक्तिः अपि च विश्वव्यापिनी विश्वरूपिणी महाशक्तिः। सा एका अद्वितीयापि तस्या बहुविधमूर्त्तयश्च, एवं नानाविधविग्रहाः विभूतयश्च।

दशमहाविद्यासु एकाखण्डविश्वशक्तेर्द्दशविधप्रकाशाः याभिः शक्तिभिः पराशक्तिर्विश्वजगन्नियन्त्रितं परिचालितञ्च करोति। उक्तञ्च **श्वेताश्वतरोपनिषदि**—

परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च। (६।८)

ब्रह्मणः पराशक्तिर्विविधैवैति श्रुतौ कीर्त्तितम्। सा शक्तिर्ब्रह्मणः स्वभावसिद्धा ज्ञानक्रिया बलक्रिया च।

महानिर्व्वाणतन्त्रे, महेश्वर एतां पराशक्तिं सम्बोध्य कथयति यत् काली-तारा-प्रभृतयो विद्या एकस्या अद्वितीयायाः शक्तेरेव विभिन्नप्रकाशाः।

त्वमाद्या सर्व्वविद्यानामस्माकमपि जन्मभूः
त्वं जानासि जगत् सर्व्वं न त्वां जानाति कश्चन
त्वं काली तारिणी दुर्गा षोडशी भुवनेश्वरी
धूमावती त्वं वगला भैरवी छिन्नमस्तका
त्वमन्नपूर्णा वाग्देवी त्वं देवी कमलालया।

सर्व्वशक्तिस्वरूपा त्वं सर्व्वदेवमयी तनुः (४।१२-१४) त्वमेव सर्व्व-विद्यानामादिभूता अस्माकं ब्रह्म-विष्णु-महेश्वराणाञ्च उत्पत्तिस्थानम्। त्वमेव जगत् सर्व्वं जानासि, किन्तु त्वां कोऽपि न जानाति। त्वमेव काली, तारा, दुर्गा, षोडशी, भुवनेश्वरी, धूमावती, वगला, भैरवी, छिन्नमस्ता च। त्वमेव अन्नपूर्णा, सरस्वती, लक्ष्मीश्च त्वमेव सर्व्वशक्तिस्वरूपिणी, तव शरीरं सर्व्वदेवतामयम्।

"अरूपाया रूपधारणम्"। या खलु विश्वातिरिक्ता सूक्ष्मातिसूक्ष्मा निराकारा, आद्या, पराशक्तिः, सा कथं काली-तारादि-साकारविग्रहं धृत्वा जगति अभिव्यक्ता भवतीत्येतत् महादेवो **महानिर्व्वाणतन्त्रे** एवं स्पष्टीकरोति—

त्वमेव सूक्ष्मा त्वं स्थूला व्यक्ताव्यक्तस्वरूपिनी
निराकारापि साकारा कस्त्वां वेदितुमर्हति।
उपासकानां कार्य्यार्थं श्रेयसे जगतामपि
दानवानां विनाशाय धत्से नानाविधास्तनूः॥
चतुर्भुजा त्वं द्विभुजा षड्भुजाष्टभुजा तथा
त्वमेव विश्वरक्षार्थं नानाशस्त्रास्त्रधारिणी। (४।५-१७)

त्वं हि स्थूला सूक्ष्मा, व्यक्ताव्यक्तस्वरूपिनी त्वमेव हि निराकारापि साकारा, कस्तावत्तव प्रकृततत्त्वं विजानाति, त्वमुपासकानां—कार्य्यार्थं जगन्मङ्गलसाधनार्थं, दानवगणानां विनाशाय च नानाविधमूर्त्तिं धारयसि। त्वं विश्वरक्षार्थं नानाविधास्त्रशस्त्रधारणपूर्व्वकं—कदाचिद्द्विभुजा, चतुर्भुजा कदाचित् षड्भुजा, एवमष्टभुजा भवसि।

"भेदबुद्धिः परित्याज्या"—साधको यां कामपि महाविद्यामाश्रित्य, साधनकाले, विद्यासमूहमध्ये परस्परभेदबुद्धिपरित्यागपूर्व्वकं साधनां कुर्य्यात्।

तन्त्रशास्त्रमेतदेव पुनः पुनः निर्द्दिशति। लीलाभेदे विभिन्नमूर्त्तिधारणेनापि स्वरूपतः सा एकाभिन्नेत्याकाराऽभेदज्ञानोपरि स्थिरप्राणप्रतिष्ठया साधकः स्वीयेष्टदेवताराधनां कर्त्तुमर्हति। तदुक्तं **ताराहस्ये** प्रथमपटले––

यथा काली तथा तारा तथा नीलसरस्वती
सर्व्वाभीष्टफलप्रदा तथा त्रिपुरसुन्दरी
अभेदमतमास्थाय यः कश्चित् साधयेन्नरः
त्रिलोके स तु संपुज्यः स्यात्तारासूत एव सः।

या काली सैव तारा, नीलसरस्वती, त्रिपुरसुन्दरी च, सा एव साधकाय वाञ्छितफलं ददाति। यः साधकोऽभेदभावेनैवासां साधनायां प्रवृत्तो भवति स एव त्रिलोकपूज्यः तत्पुत्रश्च भवेत्।

भेदं कृत्वा यदा मन्त्री साधयेदत्र साधनाम्
न तस्य निष्कृतिर्देवि निरये पच्यते हि सः

यस्तावत् भेदबुद्धया चैतासां साधनायां प्रवृत्तो भवति हे देवि! तस्य निष्कृतिर्नास्ति, स नरकाग्निना दह्यते।



### दशमहाविद्यानां दार्शनिकतात्पर्य्यम्

तन्त्रशास्त्रे दशमहाविद्यानां कालीतारादि विशेषविशेषनाम्नस्तात्पर्य्यं निरूपितम्। तदुक्तं कालीतन्त्रे (११।१२)

(१) काली—कालनियन्त्रणात् काली तत्त्वज्ञान-प्रदायिनी। महाकाल-नियन्तृत्वात्-कालीति नाम्ना प्रसिद्धा साधकाय तत्त्वज्ञानं प्रददाति।

(२) तारा—**कुब्जिकातन्त्रे** प्रथमपटले उक्तम्—

कलौ कृष्णत्वमासाद्य शुक्लापि नीलरूपिणी
लीलया वाक्प्रदा चेति तेन नीलसरस्वती।
तारकत्वात् सदा तारा तारिणी च प्रकीर्त्तिता॥

एषा विद्या शुक्लापि कलौ कृष्णत्वमापन्ना सती, नीलरूपिण्यभवत्। अवलीलया वाक्शक्तिप्रदानादेषा, "नीलसरस्वती" गीयते। एषा सर्व्वदा जीवपरित्राणकारित्वेन तारा तारिणी वा।

(३) श्री विद्या—श्रीदात्री च सदा विद्या श्रीविद्या परिकीर्त्तिता।।
निर्गुणा च महादेवी षोडशी परिकीर्त्तिता।।

एषा महाविद्या सर्व्वदा साधकाय श्रियःप्रदानात् श्रीविद्यानाम्नाभिहिता। त्रिगुणातीतत्वेन षोडशीति कीर्त्तितम्।

(४) भुवनेशी—भुवनानां पालकत्वाद् भुवनेश्वरी प्रकीर्त्तिता
सृष्टिस्थितिकरी देवी भूवनेशीति गीयते।।

एषा महाविद्या चतुर्द्दशभुवनानां पालयितृत्वेन तथा सृष्टिस्थितिकारित्वेन भुवनेश्वरीति कीर्त्त्यते।

(५) भैरवी— भैरवी दुःखसंहन्त्री भवदुःखविनाशिनी
कालभैरवभार्य्या च भैरवी परिकीर्त्तिता।

एषा महाविद्या साधकस्य सर्व्वविधदुःखं नाशयति, तथा कालभैरवभार्य्यात्वेन च भैरवीति विश्रुतम्।

(६) छिन्नमस्ता— त्रिशक्तिः कालदा देवी छिन्ना चैव सुरेश्वरी।
त्रिगुणा च महादेवी मोहिनी मोक्षदा ध्रुवा।।

देवी छिन्नमस्ता महाविद्या, त्रिशक्तिरूपिणी, मृत्युदायिनी छिन्नमस्तकत्वात् "छिन्नमस्ता"। देवी त्रिगुणमयी मोहिनी मोक्षदायिनी नित्या च।

(७) धूमावती— धूमावती महामाया धुम्रासुरनिसूदनी
धूमरूपा महादेवी चतुर्व्वर्गप्रदायिनी।

महामाया धूमावती धूम्रासुरविनाशिनी, धूमवर्णा "धूमावती" तथा धर्म्मार्थकाममोक्षप्रदायिनी, अर्थात् अज्ञाननाशिनी।

(८) बगला— वकारे वारुणीदेवी गकारे सिद्धिदा स्मृता
लकारे पृथिवी चैव चैतन्या मे प्रकीर्त्तिता।

महाविद्यावगलाया वकारेण वारुणीदेवी गकारेण सर्व्वसिद्धिदात्रृदेवी लकारे पृथ्वीरूपिणी वगला त्रिरूपिणी तथा चैतन्यरूपिणी।

(९) मातङ्गी— मातङ्गी मदशीलत्वान्मतङ्गासुरनाशिनी।
सर्व्वापत्तारिणी देवी मातङ्गी परिकीर्त्तिता॥

एषा महाविद्या मदशीलत्वान्मतङ्गासुरनाशित्वेन च साधकानां सर्व्वविपदुद्धारिणी "मातङ्गीति" कीर्त्यते।

(१०) कमला— वैकुण्ठवासिनी देवी कमला च प्रकीर्त्तिता।
पातालवासिनी देवी लक्ष्मीरूपा च सुन्दरी॥

एषा महाविद्या वैकुण्ठवासित्वेन कमलानाम्नाभिहिता, पातालावस्थानात् लक्ष्मीरिति नाम्नापि च कीर्त्यते।

## दशमहाविद्यामाहात्म्यम्

**कुब्जिकातन्त्रे** प्रथमपटले दशमहाविद्यानां तात्पर्य्यमुक्तम्। अथातो माहात्म्यं कथयति।

एता दशमहाविद्याः सिद्धविद्याः प्रकीर्त्तिताः।
धर्मार्थकामदा नित्यं चतुर्व्वर्गफलप्रदाः॥



एता दशमहाविद्याः सर्व्वा एव "सिद्धविद्याः" कीर्त्तिताः सर्व्वदा एताः साधकाय धर्म-अर्थ-काम-मोक्ष-फलञ्च प्रयच्छन्ति। कलियुगे येन तेन प्रकारेण एतासामुपासना पूर्णफलप्रदा भवति।

आसाञ्चैव समाना हि नास्ति त्रिभुवने ध्रुवम्।
एकोच्चारणमात्रेण सर्व्वपापात् प्रमुच्यते॥
स्मरणेनैव देवेशि मुच्यते भवबन्धनात्॥

त्रिभुवने आसां दशमहाविद्यानां समानं न किमपि विद्यते इति निश्चितं सत्यमेव। आसां नाम्नामेक वारोच्चारणेनापि जनः सर्व्वपापेभ्यः प्रमुच्यते। हे देवेशि, आसां स्मरणेनैव संसारबन्धनान्मुक्तो भवति। जगज्जनन्या नाममन्त्रजपे, तासां दिव्यमूर्त्तिध्यानेन तथा लीलाकाहिनीश्रवणकीर्त्तनाभ्यां च पापराशिर्विदुरितो भवति। उक्तञ्च **पाद्मे पुष्करखण्डे**—

मेरुपर्व्वतमात्रोऽपि राशिः पापस्य कर्म्मणः
कात्यायनीं समासाद्य नश्यति क्षणमात्रतः।

दुर्गार्च्चणरतो नित्यं महापातकसम्भवैः
दोषैर्न लिप्यते वीरा पद्मपत्रमिवाम्भसा ॥

पापराशीनां मेरुपर्व्वतपरिमानत्वेऽपि, यदि जनः कात्यायनीशरणं व्रजेत्, तस्य क्षणमात्रेणैव सर्व्वपापराशिर्नश्यति। यः सदा दुर्गाराधनतत्-परः, स महापातकोत्पन्नदोषजालैरपि पद्मपत्रं जलेनेव न लिप्यते।

देव्या ध्यानं मया ख्यातं गुह्याद्गुह्यतरं महत्।
तस्मात् सर्व्वप्रयत्नेन सर्व्वकामफलप्रदम् ॥

अतएव हे सुरथ! मया सर्व्वप्रयत्नेन सर्व्वाभीष्टफलप्रदायिन्या गुह्याति-गुह्यतरदिव्यमूर्त्तिसमूहस्य· ध्यानादिकं सवाग्र उक्तम्।

गुह्याद् गुह्यतरं महत्—देव्या महत्स्वरूपस्य वर्णना केनापि न कर्त्तुं शक्यते। तस्याः कृपया, एव अनुभूतिगम्यम्। सिद्धमहापुरुषादयः समाधि–योगेन तस्याः साक्षात्कारं लब्ध्वा भाषया यत् प्रकाशयन्ति तदपि ते संगोपनेन रक्षन्ति। अनधिकारिणे कदापि न प्रकाशयन्ति।

वेदो न यत् पारमुपैति मातः नैवागमो न प्रमथाधिपश्च।
कस्मान्नरः क्षीणमतिस्तवाम्ब तद्रूपसम्भावनतत्परः स्याम् ॥

इति कामरूपान्तर्वर्त्तिश्रीमदुग्रतारामहापीठाध्यक्षश्रीचक्रेश्वर-
भट्टाचार्य्यसंकलिते शाक्तदर्शने दशमहाविद्यारहस्यं
नाम अष्टमः परिच्छेदः।

---

# नवमः परिच्छेदः

## सती-देह-सम्भूत-पीठ-रहस्यम्

अथ दाक्षायणी सती दक्षालयं गत्वा, मातृमुखाद् यज्ञविवरणं श्रुत्वाति-क्रोधेन, महाघोरं भयङ्करं महाकालीरूपं धारयन्ती दक्षस्य यज्ञवेदीं प्रविश्य, दक्षमुखात् शिवनिन्दामशृणोत्। तदुक्तं **महाभागवते महापुराणे**, नवमाध्याये:—

रुषा ज्वलितसर्व्वांगी चिन्तयामास सा सती।
क्षणार्द्धेनैव पितरं समखं दैवतैः सह।
शक्नोमि भस्मसात्कर्त्तुं पितृहत्याभयेन तत्।
आत्मनः तुल्यरूपं सा छायां समसृजत् क्षणात्।
छायासतीं सती प्राह मद्वाक्यमवधारय।।
त्वमेकं कुरु मत्कार्य्यं यज्ञमेनं विनाशय।
शिवनिन्दाकरं वाक्यं श्रुत्वा पितृमुखान्मम।।
विशस्व यज्ञ वह्नौ त्वं रुषा ज्वलित-विग्रहा।।
एवमुक्त्वा महाकाली छायाकालीं हसन्मुखी।
स्वयमन्तर्हिता भूत्वा देवी गगनमास्थिता।।

ततो दक्षमुखात् शिवनिन्दां श्रुत्वा, महाक्रोधेन ज्वलत्सर्व्वांगी चिन्तयामास। क्षणार्द्धमात्रेणैव देवैः सह सयज्ञं पितरं भस्मसात् कर्त्तुं शक्नोमि। किन्तु पितृहत्यापापभिया क्षणं विचिन्त्य निमेषाद् योगबलेनात्मनस्तुल्यरूपां छायासतीमेकामसृजत्। अनन्तरं सती छायासतीमुवाच, देवि! त्वमेकं मत्कार्य्यं कुरु सयज्ञं दक्षं विनाशय। मम पितुर्मुखात् शिवनिन्दां श्रुत्वा कोपेन ज्वलितविग्रहा सती त्वं यज्ञवह्नौ प्रविश। हसन्मुखी सती छायासतीमेवमुक्त्वा स्वयमन्तरीक्षेऽन्तर्हिताभवत्।

अथ छाया-सती क्रुद्धा प्राह दक्षप्रजापतिम्।
किं शिवं निन्दसि मोहाद्देवदेवं सनातनम्।।

वाचं नियच्छ कल्याणं यदीच्छसि सुदुर्म्मते।
छिन्धि जिह्वां महामूर्ख शिवनिन्दाकरीमिमाम्॥
एवमुक्त्वा तु सा देवी छायाकाली रुषान्विता।
दधौ भयानकां मूर्त्ति ज्वलन्नेत्रत्रयोज्ज्वलाम्॥

अनन्तरं छायासती दक्षमुखात् शिवनिन्दां श्रुत्वा, दक्ष प्रजापति प्राह, रे दुर्म्मते! अज्ञानवशतः सनातनं देवदेवं किं निन्दसि! यदि कल्याणमिच्छसि तर्हि वाक्यसंयमं कुरु! रे महामूर्ख! शिवनिन्दाकरीमिमां जिह्वां छिन्धि, रुषान्विता सा छायाकाली दक्षमेवमुक्त्वा—नेत्रत्रयोज्ज्वलां भयावहां मूर्त्ति दधौ।

अहं ते चक्षुषोर्बाह्या भविष्यामि न केवलम्।
तज्जातदेहबाह्यापि भविष्याम्यचिरादिह॥
एवं छाया-सती देवी क्रोधोद्दीप्तविलोचना।
पश्यतां सर्व्वदेवानां यज्ञ-वह्नौ समाविशत्॥
ततश्चकम्पे वसुधा वायुः सुतुमुलो ववौ।

ततो यक्षो यदा, रे कुपुत्रि? मच्चक्षुषोरन्तर्हिता भवेत्यादिरूपं कुवाक्यमवदत्तदा, सती तद्वाक्यश्रवणेनाति—क्रोधान्विता दक्षमाह न केवलं तव चक्षुषोरन्तर्हिता भवामि, तज्जाताद् देहादप्यन्तर्हिता भवामीत्युक्त्वा, सर्वदेवानामृषीणाञ्च समक्षं त्यक्तदेहा देवी चित्कलारूपेण तस्मिन् यज्ञाग्नौ प्रविवेश। तत्काले वसुधा कम्पिताभवत्, वायुश्च तुमुलो वहति स्म, पृथिव्यां मुहुर्मुहुरुल्कापातोऽभवत्। छायासत्याः क्रोधाग्नितो देवी भद्रकाली उत्पन्नाभवत्। भद्रकालीस्वरूपमुक्तमष्टम-परिच्छेदे।

ततो नारदमुखात् सतीनिधनं श्रुत्वातिशयकातरः शिवो रोरुद्यमानो महाक्रोधेन रुद्रमूर्त्तिः सन् वीरभद्रमुत्पाद्य प्रमथगणैः भद्रकाल्या च सह स दक्षयज्ञ-ध्वंसार्थं वीरभद्रमादिदेश। एवं हा सती क्व गतेत्युक्त्वा भृशं रुरोद। अत्रावसरे ब्रह्मा विष्णुश्च तत्समीपमागत्य, कियद्दिनेभ्यः परं पुनः सतीं प्राप्स्यसीति सान्त्वनावाक्येन शिवं प्रबोध्य शिवेन सह कातरप्रार्थनया देवीं तुष्टुवुः। तेषां स्तवे तुष्टा भगवती गगने दर्शनं दत्त्वा वक्ष्यमाणवाक्यमुवाच। तदुक्तमेकादशाध्याये—

उपायं कथयाम्येवं कुरु शम्भो तदेव हि।
प्रतिलप्स्यसे मां नूनं पूर्व्ववच्च चिरेण तु॥

मम छाया यज्ञवह्नौ प्रविष्टा या महेश्वर।
तां मूर्ध्निकृत्य मां प्रार्थ्य भ्रम पृथ्वीमिमां शिव ।।
स देहो बहुधा भूत्वा पतिष्यति धरातले।
तत्र तद्धि महापीठं भविष्यत्यघनाशनम् ।।

हे शम्भो! अचिरेण यथा मां पूर्ववत् लप्स्यसे तदुपायं कथयामि। हे महेश्वर! यज्ञवह्नौ प्रविष्टं मम छायादेहं मूर्ध्निकृत्य मां प्रार्थ्य त्वमिमां पृथिवीं परिभ्रम! हे शिव! स देहो बहुधा भूत्वा धरातले पतिष्यति; यत्र यत्र पतिष्यति तत्र तत्र निश्चयं पापनाशकरं महापीठं भविष्यति।

योनिः पतिष्यति तत्र यत्र पीठोत्तमं परम्।
तत्र स्थित्वा तपस्तप्त्वा पुनर्मां प्रतिलप्स्यसे ।।
इत्युक्त्वा सा महादेवं समाश्वास्य पुनः पुनः।
बभुवान्तर्हिता सद्यः सहसा मुनिपुंगवा ।।

यत्र च मम योनिः पतिष्यति, तत्र स्थित्वा त्वं तपस्यां कुरु पुनर्मां प्राप्स्यसि। इत्येवं महादेवं समाश्वास्य हे मुनिश्रेष्ठ! सहसा सा देवी अन्तर्हिताऽभवत्।



ततः शिवः समागत्य पुनर्दक्षालये मुने।
क्व मे सती सतीत्येवं रुरोद प्राकृतो यथा ।।
यज्ञशालां प्रविश्यैव छायासत्याः शरीरकम्।
ददर्श दीप्यमानञ्च भूमिष्ठं मुद्रितेक्षणम् ।।
अक्षुण्णां तां विलोक्यैव निद्रितां प्रकृतामिव।
शोकसन्तप्तहृदयः प्राहेदं वचनं शिवः ।।
सति तेऽहं पति शम्भुस्त्वत्समीपमुपागतः।
उत्तिष्ठ त्वं पूर्व्ववन्मां कथं न परिभाषसे ।।

ततः शिवो दक्षालयमागत्य, हे मुने! पूर्व्ववत् क्व मे सती सतीत्युक्ता रुरोद। तस्माद् यज्ञशालां प्रविश्य भूमिष्ठं छायासतीशरीरं समुज्ज्वलमक्षुण्णं मुद्रितेक्षणं च दृष्ट्वा तां पूर्व्ववन्निद्रितामिव विलोक्य, शोकसन्तप्तहृदयः शिव इदमाह—हे सति! तव प्राणपतिः शम्भुस्त्वत्समीपमागतः। त्वमुत्तिष्ठ! पूर्व्ववन्मां कथं न परिभाषसे। एवं प्रकारेण बहुधा विलप्य मनुष्यवत् तां बाहुभ्यां समलिङ्गच शिरस्यधारयत्।

## शिवस्य ताण्डवनृत्यम्

तदुक्तं **महाभागवते**--

बाहुभ्यां तां समलिङ्गच जग्राह शिरसा मुने।
छायासत्यास्तु तं देहं धृत्वा शिरसि शङ्करः।।
संप्राप्त-परमामोदो ननर्त्त धरणीतले।
ब्रह्मादयः सुराधीशा देवा इन्द्रपुरोगमाः।।
अपूर्व्वं रथमास्थाय गगने द्रष्टुमागमन्।
पुष्पवृष्टिः समभवत् प्रमथाश्च दिशो दश।।
मुखवाद्यं ततश्चक्रुर्ननृतुश्च गलज्जटाः।
कदाचिच्छिरसा धृत्वा कदाचिद्दक्षिणे करे।।
कदाचित् वामहस्तेन कदाचित् स्कन्धदेशके।
कदाचित् वक्षसि प्रीत्या परिस्वज्य सदाशिवः।।
ननर्त्त चरणाघातैः कम्पयन् धरणीतलम्।।

हे मुने! शङ्करः छायासतीदेहं बाहुभ्यां शिरसि धृत्वा, परममामोदं प्राप्तः सन् धरणीतले ननर्त्त। तदा इन्द्रादि देवगणा, रथमारूढ़ा गगने स्थित्वा, शिवस्य ताण्डवनृत्यं ददृशुः। आकाशाच्च पुष्पवृष्टिरभवत्। प्रमथगणाश्च नृत्यरतशिवस्य चतुर्दिक्षु मुखवाद्यं कुर्व्वन्तो मुक्तजटा नृत्यन्ति। सदाशिवस्य छायासत्याः शवदेहः कदाचिद्दक्षिण-हस्ते कदाचित् वामहस्ते, कदाचिद् वा स्कन्धदेशे कदाचिद् वक्षसि धारणपूर्वकं प्रीतिभरेणालिङ्गनं कृत्वा, पदाघातेन धरणीं कम्पयन् नृत्यमकरोत्।

चन्द्रलोकस्थितश्चन्द्रो ललाटे तिलकोऽभवत्।
चलज्जटाविनिःक्षिप्ता बभूवुस्तारकगणाः।।
सूर्य्यलोकस्थितः सूर्य्यः कण्ठभूषणतां गतः।
कुर्म्मानन्तौ पीड़ितौ तां धरणीं त्यक्तुमुद्यतौ।।
नृत्यवेगसमुद्भूता वायुना च महीधरा।
सुमेरु-प्रमुखाश्चेलुर्वृक्षा इव महामुने।।
एवं भूतानि संक्षोभ्य नृत्यन् सर्व्वां वसुन्धराम्।
बभ्राम शिरसा धृत्वा छायासत्यास्तु विग्रहम्।।

चन्द्रलोकस्थश्चन्द्रस्तस्य ललाटे तिलकवत् प्रतिभाति। तदीयजटापरिचालनया तारकगणाश्चतुर्द्दिक्षु विक्षिप्ता जाताः। सूर्य्यलोकस्थः सूर्य्यदेवस्तस्य

कण्ठभूषणं भवति। पातालस्थितकुम्मनिन्तौ नितान्तं पीड़ितौ धरणीं त्यक्तुमुद्यतौ। नृत्यवेगोत्थितवायुना सुमेरु-प्रमुखगिरिसमूहश्च वृक्षा इव प्रचलिताऽभवन्। शम्भुः एवंरूपेण भूतगणसंक्षोभकारि नृत्यं कुर्वन् छाया-सती-शरीरं मस्तके विधृत्य पथिवी-मण्डलं परिबभ्राम।

शिवस्तु परमामोदो मनसेदं व्यचिन्तयत्।
सति त्वं मम भार्य्येति लोकलज्जां परित्यजन्॥
मुद्धर्ना वहामि ते छायां भाग्यं मम महोत्तरम्।
एवं स आत्मनो भाग्यमुपवर्ण्य सदाशिवः।
अतीव परमामोदो ननर्त्त स मुहुर्मुहुः॥

शिवः परमानन्दयुतो मनसेदमचिन्तयत्—हे सति! त्वं मम भार्य्येति लोकलज्जापरित्यागपूर्व्वकं तव छायादेहं मस्तके वहामीति मम महाभाग्यम्। स सदाशिव एवमात्मनो भाग्यं वर्णयन् अत्यधिक-परमानन्देन मुहुर्मुहुर्नृत्यमकरोत्।

क्षुब्धमासीज्जगत् सर्व्वं पक्षिणो मृतका इव।
अकाले प्रलयं भूत्वा गणयामासुरागतम्॥
ब्रह्माज्ञया तु ऋषयश्चक्रुः स्वस्त्ययनं महत्।
देवास्तु चिन्तयामासुः किमेवं समुपस्थितम्॥
उपायं नैव पश्यामि जगद्रक्षा भवेत् कथम्।
दक्षोऽस्माकं विनाशाय जगतोऽस्य क्षयाय च॥
आरब्धवान् कुयज्ञं स शिव-विद्वेष-कारणात्।

नृत्यवेगतस्तस्य सर्व्वं जगत् क्षुब्धमासीत्, पक्षिणो मृतकल्पा इव सञ्जाताः प्राणिनोऽपि प्रलयोऽकालागत इति गणयामासुः। ब्रह्माज्ञया ऋषयो महास्वस्तयने प्रवृत्ताः। देवाश्च चिन्तयामासुः किमिदं समुपस्थितम् इति। जगद्रक्षणोपायो न कोऽपि परिदृश्यते। दक्षोऽस्माकं विनाशाय जगतोऽस्य क्षयाय शिवविद्वेषात् कुयज्ञमेवारब्धवान्।

अथ भगवान् सृष्टिपालको विष्णुस्त्रिदशानुवाच—भयं मा कुरुत। पूर्व्वमेव महादेव्या उक्तं छाया-सत्या विग्रहः खण्डशो बहुधा भूत्वा भूतले पतिष्यति। अतएव सृष्टिरक्षार्थमहमुत्तमं साहसं कृत्वा, परमानन्दमग्नस्य शिवस्य शिरः-स्थित-छाया-सत्याः शरीरं सुदर्शनेन प्रभोः शिवस्याजानतः खण्डशः कृत्वा भूतले पातयिष्यामि। एवं कृते सा ब्रह्ममयी शंकरान्मां रक्षिष्यति।

ततो विष्णुर्महाबाहुर्ज्जगतां परिपालकः।
छायासत्याःशरीरं स पातयामास खण्डशः।।
सुदर्शनेन चक्रेण महाभीत इवाल्पशः।
आनन्दमुग्धचित्तस्य शिवस्य परमेशितुः।।
नृत्यमानो यदा शम्भुः क्षिप्यते चरणौ भुवि।
तदैव प्राक्षिपच्चक्रं छाया-देहं चकर्त्त सः।।
विष्णुचक्रेण विच्छिन्नस्तद्देहावयवः पृथक्।
पीठानामेक पञ्चाशदभवन्मुनिपुंगव।।
अङ्गप्रत्यङ्गपातेन, छाया-सत्या महीतले।।
तेषु श्रेष्ठतमः पीठः कामरूपो महामते।
यत्र साक्षाद् भगवती स्वयमेव व्यवस्थिता।।

तदनन्तरं विश्वपालको महाबाहुर्विष्णुः सुदर्शनचक्रेण महाभीत इवानन्द-मग्न-महादेवमस्तकाच्छायासत्याः शरीरं खण्डशः कृत्वा भूतले अपातयत्। शम्भुर्यदा नृत्यं कुर्वाणो भूतले चरणौ निक्षिपति तदा विष्णुश्चक्रनिक्षेपेण सतीदेहमच्छिनत्। हे मुनिश्रेष्ठ! छायासत्या विष्णुचक्रेण विच्छिन्ना देहावयवाः पृथक् पृथक् महीतले पतित्वा एक पञ्चाशद् भागाऽभवन्। प्रतिभागं पीठमेकं सञ्जातम्। हे महामते! तेषु पीठेषु श्रेष्ठतमो महापीठः कामरूपोऽभवत्। यत्र च कामपीठे देवी स्वयं साक्षात् तिष्ठति।

## पीठसंख्यानिरूपणम्

देवी-पीठ-संख्यानिरूपणमधिकृत्य नानापुराणेषु तन्त्रेषु च नानाप्रकारो मतभेदो दृश्यते। मत्स्यपुराणस्य त्रयोदशाध्याये, स्कन्दपुराणस्य अवन्त्य-खण्डान्तर्गतरेवाखण्डे (९८ अः) पीठानामुल्लेखो वर्तते। देवी-भागवते च अष्टोत्तरशतपीठसंख्या वर्त्तते। कति महापीठानि कति उपपीठानि तदुल्लेखो नास्ति। कालिकापुराणे (१८।४२-५१ अध्याये) सत्यङ्गभूत-महापीठ-समूहस्य संक्षिप्त-संख्या दृश्यते। यथा—

देवीकूटे पादयुग्मं प्रथमं न्यपतद् भूवौ।
उड्डियाने चोरुयुग्मं हिताय जगतां ततः।।
कामरूपे कामगिरौ न्यपतद् योनिमण्डलम्।
तत्रैव न्यपतद्भूमौ पूर्व्वतो नाभि-मण्डलम्।।

जालन्धरे स्तनयुग्मं स्वर्णहार-विभूषितम् ।
अंशग्रीवं पूर्णगिरौ कामरूपात् ततः शिरः ।।
यावद् भुवं गते भर्गः समादाय सतीशवम् ।
प्राच्येषु याज्ञिको देशस्तावदेव प्रकीर्त्तितः ।।

तथाहि प्रथमं देवीकूटनामकपर्व्वते सतीपादयुग्मं न्यपतत् । जगतां मङ्गलाय उड्डियाननामकस्थाने तस्या उरुयुग्ममपतत् । कामरूपे कामगिरौ नीलाचले देव्या योनिमण्डलं न्यपतत् । ततः पूर्व्वस्यां गुवाहाटी-नगर-मध्ये भूतले नाभिमण्डलं न्यपतत् । स्वर्णहारभूषितस्तनयुग्मं जालन्धरे न्यपतत् । पूर्णगिरौ स्कन्धो ग्रीवा च न्यपतेताम् । मस्तकं च कामरूपस्य पूर्वसीमाप्रान्ते न्यपतत् । महादेवो हि सतीशवदेहं शिरसि विधृत्य पूर्व्वस्यां दिशि यावद्दूरमगमत्, तावत्पर्यन्तं याज्ञिकदेश इति कीर्त्यते ।

अन्ये शरीरावयवा लवशः खण्डिताः सुरैः ।
आकाश-गङ्गामगमन् पवनेन समीरिताः ।।
यत्र यत्रापतन् सत्यास्तदा पादादयो द्विजाः ।
तत्र तत्र महादेवः स्वयं लिङ्गस्वरूपधृक् ।।
तस्थौ मोहसमायुक्तः सतीस्नेहवशानुगः ।।
ब्रह्मा विष्णुः शनिश्चापि सर्व्वदेवगणस्तथा ।
पूजयाञ्चक्रुरीशस्य प्रीत्या सत्याः पदादिकम् ।।

सती देहस्यान्यान्यावयवास्तिलपरिमाणेन खण्डशः कृतास्ताः पवनप्रेरिता आकाशगङ्गायां प्रविष्टाः । हे द्विजाः, तदा यत्र यत्र देव्याः पादाद्यङ्गानि निपतितानि तत्र तत्र सतीस्नेहविमूढो महादेवः स्वयं लिङ्गरूपेणावस्थानमकरोत् । तत्र पीठे ब्रह्मा विष्णुः शनिरेवमन्ये च देवाः परमप्रीत्या सतीशिवयोः पादानि पूजयामासुः ।

कस्मिन् पीठे देवी किंनामधारणेनावस्थिता प्रसिद्धा च तदकथयत्—

देवीकूटे महादेवी महाभागेति गीयते ।
सती-पादयुगेलीना योगनिद्रा जगत्प्रभुः ।।
कात्यायनी चोड्डियाने कामाख्या कामरूपिणी ।
पूर्णेश्वरी पूणगिरौ चण्डी जालन्धरे गिरौ ।।
पूर्व्वान्ते कामरूपस्य देवी दिक्कर-वासिनी ।
तथा ललिता-कान्तेति योगनिद्रा प्रगीयते ।।

देवीकूटे सत्याः पादयुग्मे अधिष्ठिता जगदीश्वरी महादेवी योगनिद्रा "महाभागा" (१) नाम्नाभिहिता। उड्डियाने (२) "कात्यायनी" (३) कामरूपे "कामाख्या" पूर्णगिरौ (४) "पूर्णेश्वरी", जालान्धर-पर्व्वते (५) "चण्डी", कामरूपस्य पूर्व्व-सीमा-प्रान्ते देवी दिक्करवासिनी (६) तथा (७) "ललिता कान्ता" चेति योगनिद्राया नामानि। अतएव कालिकापुराण-मते सत्यङ्गभूतसप्तमहापीठानां नामानि दृश्यन्ते।

रुद्रयामलतन्त्रे दशसङ्ख्यकप्रधानपीठानां नामानि यथा--(१) कामरूपः, (२) जालन्धरः, (३) पूर्णगिरिः, (४) उड्डियानः, (५) वाराणसी, (६) ज्वालामुखी, (७) मायावती, (८) मथुरा, (९) अयोध्या, (१०) काञ्ची च। कुब्जिकातन्त्रे द्विचत्वारिंशत् सङ्ख्यकानि पीठानि दृश्यन्ते। ज्ञानार्णवतन्त्रे पीठसंख्या पञ्चाशत् वर्त्तते।

तन्त्र चूड़ामणि-ग्रन्थे एकपञ्चाशत् पीठानि दृश्यन्ते। विष्णु-चक्रेण छाया-सत्या देहलता, खण्डिता सती एकपञ्चाशद्भागाः सन्तो निपतिताः। कस्मिन् स्थाने देव्याः कस्याङ्गस्य पातोऽभवत्, तत्तत्-स्थानाधिष्ठातृदेव्या किं नाम, तदीयभैरवश्च किंनामधेयोऽभवदित्यादि सविशेषं वर्ण्यते। एवं तन्मतमेव सामान्येन प्रचलितमस्ति। "शिवचरित" ग्रन्थे, नाना ग्रन्थावलम्बनेन सर्व्व-साकल्येन सप्तसप्तति-पीठस्थानानि वर्णितानि, तन्मध्ये एकपञ्चाशन्महा-पीठानि, षड्विंशत्युपपीठान्युक्तानीति। योगिनीतन्त्रेऽपि पीठशक्तिभैरवानां च नामान्युक्तानि--

यत्र यत्र महादेव्या अङ्गप्रत्यङ्ग-पातनम्।
महाविष्णुश्चक्रपाणिश्चकार धरणीतले॥
तत्र तत्र जगद्धात्री ब्रह्मज्योतिःस्वरूपिणी।
पाषाणरूपमास्थाय भक्तानां मुक्तिहेतवे॥
साधकानाञ्च हितार्थं नित्यं विहरति क्षितौ।
तत्रैव भैरवः शम्भुः नानारूपधरः स्थितः॥
रक्षार्थं साधकानाञ्च हिताय जगतामपि।
उपासते स्वयं देवीं करुणानिधिरीश्वरः॥

महाविष्णुश्चक्रपाणिः सुदर्शनचक्रेण पृथिव्यां यत्र यत्र छाया-सती-देव्या अङ्गप्रत्यङ्गपातमकरोत्। तत्र तत्र ब्रह्मज्योतिःस्वरूपिणी जगद्धात्री देवी भक्तानां मुक्तिहेतवे, तथा साधकानां मन्त्रसिद्ध्यर्थं प्रस्तरमयी भूत्वा महापीठ-रूपेण च नित्यं विराजिता आस्ते। शम्भुश्च तत्र तत्र महापीठे नानारूप-

भैरवमूर्त्तिधारणेनावस्थितः। करुणानिधिर्महादेवः साधकानां रक्षार्थमेव जगन्मङ्गलाय च तत्तत्स्थाने स्वयं देवीमुपास्ते।

## एकपञ्चाशत्पीठरहस्यम्

तन्त्र-चूड़ामणि-ग्रन्थान्तर्गत–महापीठनिर्णय-प्रकरणे एकपञ्चाशन्महापीठानामेतादृग्विवरणमस्ति। ईश्वर उवाच––

मातः परात्परे देवि सर्व्वज्ञानस्वरूपिणी।
कथ्यतां मे सर्व्वपीठ-शक्ति-भैरवदेवताः ॥१॥

ईश्वर–महादेवोऽवदत्–हे मातः! त्वं सर्व्वश्रेष्ठपदार्थेष्वपि श्रेष्ठा असि हे देवि! त्वं सर्व्वज्ञानमयी, हे जगदीश्वरि! त्वं मह्यं सर्व्वपीठानि, तदधिष्ठातृशक्तयस्तथा अधिष्ठातृभैरवनामानि च कथय!

देव्युवाच––

शृणु वत्स प्रवक्ष्यामि दयालो भक्तवत्सल।
याभिर्विना न सिद्ध्यन्ति जप-साधन-सत्क्रियाः ॥२॥
पञ्चाशदेकपीठानि एवं भैरवदेवताः।
अङ्गप्रत्यङ्गपातेन विष्णुचक्रक्षतेन च॥
ममाद्य वपुषो देव हिताय त्वयि कथ्यते ॥३॥

देव्युवाच, हे भक्तवत्सल दयामय वत्स! तुभ्यमेतत् सर्व्वं कथयामि श्रूयताम्। ताभिः शक्त्यादिभिर्विना जपसाधना सत्क्रियाश्च न सिद्ध्यन्ति। विष्णुचक्रेण छेदनात् छायासतीशरीरस्याङ्गप्रत्यङ्गपातेन, एकपञ्चाश् पीठानामुत्पत्तिरभूत्, तेषां नामानि प्रत्येकपीठाधिष्ठातृभैरवनामानि तत्तत्-पीठाधिष्ठातृदेवीनामानि च जगतां हिताय तव समीपे कथयामि। तन्त्र-शास्त्रे पीठाधिष्ठात्री देवी "विद्या" इति कथ्यते। एकपञ्चाशत्पीठेषु जगज्जननी एकपञ्चाशद् "विद्या" रूपेण विराजिता।

## मातृपरिक्रमारहस्यम्

(१) ब्रह्मरन्ध्रं हिंगुलायां भैरवो भीमलोचनः।
कोट्टरी सा महादेव त्रिगुणा सा दिगम्बरी ॥ (तन्त्रचुड़ामणौ)

हिंगुलायां प्रथमछायासतीदेव्या ब्रह्मरन्ध्रस्य पतनात् कोट्टरीनामक-महापीठम्। तत्र त्रिगुणमयी दिगम्बरी कालीरूपा "कोट्टरी" देवी, भीम-लोचनो भैरवः। हिंगुलाया आधुनिकनाम हिंगलाजः। एतद् वेलुचिस्थानस्य दक्षिणेन हिंगुलानद्यास्तीरे वर्त्तते। हिङ्गलाजः कराचीत उत्तरेणावस्थितः हिन्दूनामेष एव पश्चिमतमं तीर्थम्। अत्र च ब्रह्मानन्दो ज्ञानानन्द इति साधक-द्वयेन तन्त्रसाधना प्रचारिता।

(२-३) करवीरे त्रिनेत्रं मे देवी महिषमर्द्दिनी।
क्रोधीशो भैरवस्तत्र सुगन्धायाञ्च नासिका।
देवस्त्र्यम्बकनामा च सुनन्दा तत्र देवता॥

करवीरे सतीदेव्या नेत्रत्रयपतनाद्देवी "महिषमर्द्दिनी" महापीठं, क्रोधीशो भैरवः। तत् पीठं सिन्धुप्रदेशान्तर्व्वर्त्तिवर्त्तमान-सवकरनगरे वर्त्तते।

सुगन्धायां देव्या नासिकापातेन "सुनन्दा" महापीठं त्र्यम्बको भैरवः, पूर्व्ववङ्गान्तर्वर्तिवरिशालादुत्तरेण शिकारपुर-ग्रामे वर्त्तते। पुराकाले तत्र सुगन्धानदी पार्श्वगतासीत्।

(४) काश्मीरे कण्ठदेशस्य त्रिसन्ध्येश्वरो भैरवः।
महामाया भगवती गुणातीता वरप्रदा॥

काश्मीरे देव्याः कण्ठदेशपातेन "महामाया" महापीठम्। त्रिसन्ध्येश्वरी भैरवः। अधुना क्षीरभवानीति नाम्ना सा प्रसिद्धा। काश्मीरराजधानी-श्रीनगरोत्तरेण क्षीरभवानीमन्दिरमेकस्मिन् क्षुद्रद्वीपे वर्त्तते।

तत्र कुण्डमध्ये महापीठस्यावस्थानम्। तत्र क्षीरेण परमान्नेन च देव्याः पूजनं प्रसिद्धम्। कुण्डजलस्य च समये समये रक्त-नीलादिनानावैचित्र्याणि जायन्ते। तत्र प्राकृतिकदृश्यमतीव रमणीयम्। अत्र स्वामी विवेकानन्दः क्षीरान्नेन क्षीरभवानीदेवीं पूजयामास।

(५-६) ज्वालामुख्यां तथा जिह्वा देव उन्मत्तभैरवः।
अम्बिका सिद्धिदानाम्नी स्तनौ ज्वालन्धरे मम।
भीषणो भैरवस्तत्र देवी त्रिपुरमालिनी॥

ज्वालामुखीमहापीठं पाञ्जापस्य कांड़ा प्रान्तान्तर्गतम्। तत्र देव्या जिह्वा निपतिता, देवी अम्बिका, भैरव उन्मत्तनामा च।

ज्वालन्धर-महापीठं हिमालयस्य त्रिगर्त्तप्रदेशे अवस्थितम्। तत्र देव्या-स्तनौ निपतितौ, त्रिपुरमालि देवी, भीषणो भैरवः। प्राचीनकाले उत्तर-पश्चिमभारतवर्षे गान्धार-उड्डियान-काश्मीर-ज्वालान्धरेषु च तान्त्रिक-साधनाया मुख्यकेन्द्ररूपेण पीठमेतत् प्रसिद्धमासीत्। कालिकापुराणे उक्तं —"ज्वालन्धरे स्तनयुग्मं स्वर्णहारविभूषितम्" (१८-४४)। अतएव ज्वालन्धरः "स्तनपीठ"नाम्ना ख्यातः। तत्र काली, तारा, त्रिपुरा तथा व्रजेश्वरीदेवी विराजमाना।

"स्तनकुण्डम्"—महाभारतस्य वनपर्व्वान्तर्गततीर्थयात्रापर्व्वणि कतिपय-मातृतीर्थानामुल्लेखः दृष्टः। तन्मध्ये गौरी-शिखरस्थित-स्तनकुण्डस्य एतादृशी वर्णना वर्त्तते—

ततो गच्छेत धर्मज्ञ तीर्थसेवनतत्परः।
शिखरं वै महादेव्या गौर्य्या त्रैलोक्यविश्रुतम्॥
समारुह्य नरश्रेष्ठ स्तनकुण्डेषु संविशेत्।
स्तनकुण्डमुपस्पृश्य वाजपेयफलं लभेत्॥
तत्राभिषेकं कुर्व्वाणः पितृदेवार्च्चने रतः।
हयमेधमवाप्नोति शक्रलोकञ्च गच्छति।
(वनपर्व्व-८४।१५१।३)



तत्र त्रिलोकविश्रुतनगरीशिखरमारुह्य स्तनकुण्डे स्नात्वा पितृन् देवांश्च समभ्यर्च्च्य, अश्वमेधवाजपेययज्ञादिफलं लभते।

(७-८) हार्द्दपीठं वैद्यनाथे वद्यनाथस्तु भैरवः।
देवता जयदुर्गाख्या नेपाले जानु मे शिव॥
कपाली भैरवः श्रीमान् महामाया च देवता॥

वैद्यनाथो विहारप्रदेशान्तर्गतवैद्यनाथधामनाम्ना प्रसिद्धः। तत्र देव्या हृदयपातेन हार्द्दपीठं, पीठाधिष्ठात्री "जयगदुर्गा" वैद्यनाथो भैरवः। सुप्रसिद्ध-द्वादशज्योतिर्लिङ्गेषु वैद्यनाथस्य शिवलिङ्गमन्यतमं प्रधानमहालिङ्गम्। नेपाले पशुपतिनाथसमीपे देव्या जानुपातात्तत्र महापीठस्याधिष्ठात्री महामाया कपाली भैरवः। नवदुर्गानाम्नापि साभिहिता। पशुपतिनाथे गुह्येश्वरी देवी विराजमाना।

(९) मानसे अर्द्धदक्षहस्तो देवी दाक्षायणी हर।
अमरो भैरवस्तत्र सर्व्वसिद्धिप्रदायकः॥

मानससरोवरतीरे सतीदेव्या दक्षिणार्द्धकरपतनेन देवी दाक्षायणी हे हर! तत्र अमरभैरवः सर्व्वसिद्धिदः

(१०) उत्कले नाभिदेशश्च विरजाक्षेत्रमुच्यते।
विमला सा महादेवी जगन्नाथस्तु भैरवः।।

उत्कले पुरीक्षेत्रे सत्या नाभेस्तलदेशस्य वस्तिपतनादस्य नाम विरजा-क्षेत्रम्। देवी विमला, जगन्नाथो भैरवः। जगनाथमन्दिरस्य पश्चिमेन विमला-मन्दिरमवस्थितम्। देवी पूर्व्वाभिमुखं विराजिता। एषा देवी चतुर्भुजा दक्षिणनिम्नहस्ते अक्षमालां ऊर्ध्वहस्ते अमृतकुम्भं, वामोर्ध्वहस्ते नागकन्यामेवं, वामोर्ध्वहस्ते वराभयमुद्रां धारयति। कालिकापुराणमते नाभि-मण्डलं कामरूपे गुवाहाटीनगरमध्ये उग्रतारामहापीठनाम्ना प्रसिद्धं वर्त्तते। तन्मते उत्कले नाभेरधश्चेति पाठः।

(११) गण्डक्यां गण्डपातश्च तत्र सिद्धिर्न संशयः।
ततः सा गण्डकी चण्डी चक्रपाणिस्तु भैरवः।।

(१२) बहुलायां वामबाहुर्बहुलाख्या च देवता।
भीरुको भैरवस्तत्र सर्व्वसिद्धिप्रदायकः।

(१३) उज्जयिन्यां कूर्परञ्च माङ्गल्य-कपिलाम्बरः।
भैरवः सिद्धिदः साक्षाद्देवी मङ्गलचण्डिका।।

"हरसिद्धिः" महाराजविक्रमादित्यस्य राजधानी उज्जयिनी आसीत्। किन्तु तत्राधिष्ठात्री देवी हरसिद्धिरिति नाम्ना प्रसिद्धा, महाकालो भैरवश्च। तन्त्रमतेन मङ्गलचण्डी तथा कपिलाम्बरभैरव इति क्रमेण तत्र देवीभैरवौ। प्रसङ्गाद् द्वादशज्योतिर्लिङ्गानि **शिवपुराणे**।

सौराष्ट्रे सोमनाथञ्च श्रीशैले मल्लिकार्ज्जुनम्।
उज्जयिन्यां महाकालमोङ्कारपरमेश्वरम्।।
केदारं हिमवत्पृष्ठे डाकिन्यां भीमशङ्करम्।
वाराणस्याञ्च विश्वेशं त्र्यम्बकं गौतमीतटे।।
वैद्यनाथं चिताभूमग नागेशं दारुकावने।
सेतुबन्धे च रामेशं घृश्मेशञ्च शिवालये।।
द्वादशैतानि नामानि प्रातरुत्थाय यः पठेत्।
सर्व्वपापविनिर्मुक्तो सर्व्वसिद्धिफलो भवेत्।।
(१।३८।१८-१०)

(१) सौराष्ट्रदेशे सोमनाथ:, '(२) श्रीशैले मल्लिकार्ज्जुन:, (३) उज्जयिन्यां महाकाल:, (४) कावेरी-नर्म्मदा-समागमे मान्धातृपुरे ओंकारेश्वर: (५) हिमालयपृष्ठे केदार:, (६) डाकिन्यां पुणाया उत्तरपश्चिमतो भीम-नद्या उत्पत्तिस्थले भीमशङ्कर: (७) वाराणस्यां विश्वेश्वर:, (८) गोमती-नदीतटे गोदावर्य्यां त्र्यम्बक:, (९) सेतुबन्धे रामेश्वर:, (१०) दारुकवने नागेश:, (११) शिवालये इलातयां धूश्मेश:, (१२) चिताभूमौ वैद्यनाथ-लिङ्गम्-द्वादशैतानि नामानि प्रातरुत्थाय य: पठेत् स सर्व्वपापमुक्त: भवति, तथा तस्य सर्व्वकार्य्येषु सिद्धिर्भवेत् ।

(१४) चट्टलेऽर्द्धदक्षबाहुर्भैरवश्चन्द्रशेखर: ।
व्यक्तरूपा भगवती भवानी तत्र देवता ।।
विशेषत: कलियुगे वसामि चन्द्रशेखरे ।।

इदं महापीठं पूर्व्ववङ्गस्य चट्टग्रामप्रदेशस्य सीताकुण्ड"स्टेशन"समीपे चन्द्रनाथ-पर्व्वते अवस्थितम् । तत्र देव्या दक्षिणार्द्धबाहुर्न्यपतत्, इह देवी भवानी भैरवश्चन्द्रशेखरे वसति । चन्द्रनाथ: सर्व्वभारतीय-तीर्थरूपेण प्राचीनकालत: प्रसिद्ध: । तत्र बहूनि तीर्थानि सन्ति, यथा व्यासकुण्डम्, सीताकुण्डम्, ज्योति-र्म्मयलिङ्गं, गुरुधुनी, भवानी, स्वयम्भूनाथ:, गयाक्षेत्रं, सरस्वतीशिला, विरुपाक्ष:, हरगौरी, चन्द्रनाथ:, लवनाश:, सहस्रधारा, बाड़वानल: ज्वालामुखी इति ।

"भवानी" वाराहीतन्त्रस्य सप्तम-पटले, एतन्महापीठस्य अधिष्ठातृदेव्या विवरणं दृश्यते ।

व्यासकुण्डस्याग्निकोणे कम्पातीर-पथा व्रजेत् ।
मेरुपर्व्वत-सङ्ग: स्यात् सती-दक्षाङ्ग-सङ्गत: ।।
देववाद्यं देवनाटयं देवगीतं श्रुतिस्वनम् ।
यत्रैव श्रूयते नित्यं सर्व्वमङ्गलनि:स्वनम् ।।

व्यासकुण्डस्याग्निकोणे कम्पानद्यास्तीरात् कियद्दूरे मेरुपर्व्वतसङ्गनामकं पवित्रक्षेत्रं, सत्या दक्षिणार्द्धहस्ताङ्ग-पतनादेतत् स्थानमति-पवित्रं, तत्र च प्रतिदिनं देवानां वाद्य-नाटय-गीत वेदध्वन्यादि सर्व्वप्रकार-माङ्गलिक-शब्दाश्च कर्णगोचरा भवन्ति ।

तत्र काली वसेन्नित्यं वेदबाहुधरा शुभा ।
शवस्था मुण्डमालाढया नागयज्ञोपवीतिनी ।।

चन्द्रार्द्धधारिणी कृष्णा दिग्वाशा मदनोज्ज्वला।
खड्ग-मुण्डसव्यहस्ता वराभयददक्षिणा
देव-पूज्या देव-माता चामुण्डाकोटिभिर्युता ॥

तत्र शवारूढ़ा मुण्डमालिनी कृष्णवर्णा दिगम्बरी मङ्गलमयी चतुर्भुजा काली अवस्थिता। सा नागयज्ञोपवीतिनी ललाटे चन्द्रार्द्धधारिणी, खड्ग-मुण्ड-विभूषितवामहस्तद्वया, तथा एवं वराभयमुद्रान्वितदक्षिणहस्तद्वया। समुज्ज्वलदन्तराजिः सा देवानां पूजनीया माता च। तस्याश्चतुष्पार्श्वेषु कोटिचामुण्डा विराजन्ते।

यत्र बह्वाकृतिः शिला क्रोशार्द्धव्यापिनी स्थिता।
छाया-सती-भुजश्छिन्नः पतितो विष्णु-चक्रतः ॥
जगन्नाथस्तत्र कर्त्ता कृष्णेन सह राधिका।
सीतया च तथा रामः सर्व्वे देवाश्च संस्थिताः ॥

तत्र दृश्यते क्रोशार्द्धस्थानं वाप्य नानाकृति-शिलाः पतिताः सन्ति। तत्र सत्या दक्षिणबाहुर्विष्णुचक्रच्छिन्नो न्यपतत्। तत्र जगन्नाथः राधाकृष्णौ सीता-रामौ अन्ये च देवास्तिष्ठन्ति।

तारा च दक्षिणे तीरे कम्पायाः क्रोशमध्यतः।
सुन्दरी वामतीरस्था राजराजेश्वरी च या ॥
भुवनेशी ततः पूर्व्वे भैरवी ईशगामिनी।
छिन्नशीर्षा कुवेरस्था जलस्था धूमरूपिणी ॥
बगला वरुणस्थाने नैऋते सर्व्वमङ्गला।
यामस्था कमला यत्र त्रिकोटिशक्तिवृन्दकैः ॥

कम्पानद्या दक्षिणतीरे क्रोशमध्यवर्त्तिस्थाने, तारादेवी, वामतीरे सुन्दरी राजराजेश्वरी षोड़शी देवी, तत्पूर्व्वदिशि भुवनेश्वरी, ईशानकोणे भैरवी, उत्तरस्यां दिशिच्छिन्नमस्ता, सलिलोपरि धूमावती, पश्चिमेन बगला, नैऋत-कोणे सर्व्वमङ्गला, तथा दक्षिणे त्रिकोटिशक्तिभिः सह कमलाऽधिष्ठिता।

मृत्युञ्जय ऊर्द्ध्वमुखः पञ्चास्यः शिववृन्दकः।
अनेकशिवलिङ्गानि अनेकविष्णुरव्ययः ॥
अनेकशक्तयस्तत्र वेताला जम्भकादयः।
डाकिन्यो यातुधानाद्या योगिन्यो ध्यानतत्पराः।
क्रीड़न्ति विहगाः सर्व्वे गायन्त्यप्सरसोऽङ्गनाः।
नृत्यमानाश्च किन्नर्य्यो मोदमाना दिविस्थिताः ॥

तत्र च ऊर्द्ध्वमुख-मृत्युञ्जय-पञ्चानन-प्रभृतयो बहवः शिववृन्दा अवस्थिता, एवमनेकविष्णुमूर्त्तयो विद्यन्ते। तत्र अनेकाः शक्तयो वेताला जम्भकादयश्च सन्ति। अपि च डाकिनीगणा, राक्षसगणा, योगिणीगणाश्च ध्यानमग्ना वर्त्तन्ते। तत्र नानाजातीया सर्व्वे पक्षिणः क्रीड़न्ति, अप्सरोगणा गायन्ति तथा स्वर्गवासिन्यः किन्नर्य्यश्च परमानन्देन नृत्यन्त्यः स्वर्गे तिष्ठन्ति।

"चन्द्रशेखरः"––वाराही-तन्त्रे उक्तम्, देवादिदेवो महादेवश्चन्द्रनाथक्षेत्रे अष्टमर्तिधारणपूर्व्वकं तिष्ठति।

क्षितिरूपो महादेवो विरूपाक्षो महाशयः।
अग्निरूपो महादेवो मृदं भित्वा विराजितः॥
जलमूर्त्तिश्च देवेशि सहस्रधाकृतिः शुभे।
वायुरूपश्च देवेशि यत्र मुक्तिः करस्थिता॥
श्रीचन्द्रशेखरो देवः ख-मूर्त्तिश्च विराजते॥
राज्य-राजक-भावश्च स्वयम्भूलिङ्गरूपधृक्।
सोम-मूर्त्तिस्तथा ज्वाला सूर्य्यमूर्त्तिश्च बाड़वः॥

नारायणो नारायणीमवदत् (१) महाप्रभावशाली क्षितिरूपी महादेवस्तत्र विरूपाक्षरूपेण तिष्ठति (२) अग्निरूपी-महादेवो मृत्तिकां निर्भिद्य विराजते। (३) हे देवेशि। हे शुभे! जलमूर्त्तिर्महादेवस्तत्र सहस्रधारारूपेण विराजते (४-५) तस्य वायुमूर्त्तिस्तथा आकाशमूर्त्तिरपि तत्र विराजेते। (५) तस्य यजमानमूर्त्तिः क्षेत्रज्ञमूर्त्तिर्वात्र स्वयम्भूलिङ्गरूपेण विराजते (६) तस्य सोममूर्तिर्ज्वालारूपेण तथा (७) सूर्य्यमूर्त्तिर्व्वाड़वानलरूपेण च विराजते।

(१५) त्रिपुरायां दक्षपादो देवी त्रिपुर-सुन्दरी।
भैरवस्त्रिपुरेशश्च सर्व्वाभीष्टप्रदायकः॥

त्रिपुराराज्यान्तर्गत उदयपुरे राधाकिशोरपुरे वा सती-देव्या दक्षिण-पादपतनात् त्रिपुर-सुन्दरीमहापीठमवस्थितम्। देवी त्रिपुर-सुन्दरी, भैरवस्त्रिपुरेशः, मतान्तरे नलः। उदयपुरनगरात् पूर्व्व-दक्षिण-कोणे क्रोशमात्रदूरवर्त्यल्पोन्नतपर्व्वतस्य सानुदेशे देव्या मन्दिरं विराजते। मन्दिरमध्ये प्रस्तरमयी कालीमूर्त्तिविराजमाना तिष्ठति।

(१६) त्रिस्रोतायां वामपादो भ्रामरी भैरवेश्वरः।
त्रिस्रोतायाम् अर्थात् तिस्तायां सत्या वामपादोऽपतत्॥

तत्र शक्तिः भ्रामरी मतान्तरे "अमरी" भैरव ईश्वरः, मतान्तरे "अमरः" उत्तर-वङ्गस्य जलपाइगुरि प्रान्तान्तर्गततिस्तानदीतटे शालवाड़ीग्रामे महापीठमिदमवस्थितम्।

(१७) योनिपीठं कामगिरौ कामाख्या तत्र देवता।
यत्रास्ते त्रिगुणातीता रक्तपाषाणरूपिणी॥
यत्रास्ते माधवो साक्षाद् उमानन्दोऽथ भैरवः।
सर्व्वदा विहरेद्देवी तत्र मुक्तिर्न संशयः॥

कामगिरौ योनिपीठमवस्थितम्। पीठाधिष्ठात्री देवता कामाख्या। देवी गुणातीतापि, तत्र रक्तपाषाणरूपिणी रूपमास्थाय विराजिता आस्ते। तत्र पञ्चकोशमध्ये साक्षाद् हयग्रीवो माधवउमानन्दभैरवश्च विराजितौ। तत्र देवी स्वयं सर्व्वदा विहरति, जीवानां निःसन्देहेन मुक्तिलाभो भवेत्। भैरवस्य पाठभेदेन "रावानन्दः", शिवानन्दो, रामानन्द इत्येतान्यपि नामानि दृश्यन्ते। महापीठमिदं कामरूपे, आधुनिक असमप्रदेशे गौहाटीनगरस्य समीपे कामगिरौ नीलपर्व्वतोपरि वा विराजते। एतद् योनिपीठं कुब्जिकापीठमिति नाम्नाप्याख्यातम्।



## दशमहाविद्यापीठम्

**तन्त्रचूड़ामणौ—**

तत्र श्रीभैरवी देवी तत्र च क्षेत्रदेवता।
प्रचण्डचण्डिका तत्र मातङ्गी त्रिपुराम्बिका॥
कमला वगला तत्र भुवनेशी सधूमिनी।
एतानि नवपीठानि शंसन्ति पर-भैरवाः॥

तत्र नीलपर्व्वतोपरि (१) श्रीभैरवीमहाविद्यापीठम्, (२) क्षेत्रदेवता-त्रिपुरा-षोड़शी-महाविद्यापीठं, (३) छिन्नमस्ता-महाविद्यापीठं, (४) मातङ्गी-महाविद्यापीठं, (५) अम्बिका-महाकाली-महाविद्यापीठं, (६) वगला-महाविद्यापीठं, (७) कमला-महाविद्यापीठं, (८) भुवनेश्वरी-महाविद्यापीठं, (९) धूमावती-महाविद्यापीठं च विराजन्ते। एतेषां नवपीठानामुमानन्दस्तु भैरवः। अत्र विशेषः "कामाख्या-माहात्म्य"-नामक-ग्रन्थे द्रष्टव्यः।

## कामरूपपीठ-रहस्यम्

**तन्त्रचूड़ामणौ—**

सर्व्वत्र विरला अहं कामरूपे गृहे गृहे।
गौरीशिखरमारुह्य पुनर्ज्जन्म न विद्यते ।।
करतोयां समारभ्य यावद्दिक्करवासिनीम् ।
शतयोजनविस्तीर्णं त्रिकोणं सर्व्वसिद्धिदम् ।
देवा मरणमिच्छन्ति किं पुनर्मानवादयः ।।

देवी स्वयमवदत् सर्व्वत्राहं विरलापि कामरूपपीठे गृहे गृहे विराजितास्मि। अत्र गौरीशिखरे बारमेकमारोहणेन जीवानां पुनर्ज्जन्म न भवेत्। करतोय नद्या आरभ्य दिक्करवासिनी-देव्या अधिष्ठानपर्यन्तं, शतयोजन-विस्तीर्णमिदं त्रिकोणक्षेत्रं कामरूपं नाम महापीठं साधकाय सर्व्वसिद्धिं प्रददाति। अत्रैव कामरूपे मुक्तिकामा देवाऽपि मृत्युमिच्छन्ति। मानवादिजीवानां पक्षे किं वक्तव्यम्। कालिका-पुराण-मतेन दिक्करवासिन्यधिष्ठान-क्षेत्रं कामरूपस्य पूर्व्वप्रान्ते अवस्थितम्। "पूर्व्वान्ते कामरूपस्य देवीदिक्करवासिनी" (१८।५१) दिक्करवासिनी देव्या मन्दिरं सदीयासमीपे दिक्करङ्गनामकस्थाने विद्यते। कामाख्यापीठे न्यूनाधिकानि द्विपञ्चाशत अधिकानि तीर्थस्थानान्यद्यापि वर्त्तन्ते। परन्तु दुःखकारणमेतद् यद् दुर्गमारण्येन बहूनि स्थानानि समावृतानि सन्ति। कामाख्यामन्दिरं विहाय अष्टमहाविद्यानां तथा कामेश्वरादीनाञ्च बहूनि मन्दिरानि सौभाग्यकुण्ड-प्रभृतीनि कुण्डानि सरोवराणि च विद्यन्ते। तन्मध्ये भुवनेश्वरी-मन्दिर-स्थानमतीव मनोहरम्।



नील-पर्व्वतस्य ईशान-दिशि ब्रह्मपुत्रनदमध्यस्थले क्षुद्रद्वीपे भस्माचल-शिखरे भैरव-मन्दिरं विराजते। तस्य चतुष्पार्श्वे खरस्रोतसा प्रवहमानो लौहित्य-नदो विद्यते। प्रस्तर-निर्मितञ्च मन्दिरं चतुष्पार्श्वेषु प्राचीर-परिवेष्टितम्। तस्य नाटमन्दिरमध्ये अष्ट-धातु-निर्म्मित-पञ्चमुण्ड-विशिष्टातीव मनोहरा शिवस्य चलन्तीमूर्त्तिर्विद्यते।

भस्माचलाददूरे पश्चिमदिशि लौहत्योत्तरवर्त्यश्वाचलब्रह्मपुत्र-नद-धौत-पादोऽश्वक्रान्तस्तीर्थराजो वर्त्तते। शैलशिखरे मन्दिराभ्यन्तरे वेदिकोपरि अनन्त-शय्यायां कृष्णप्रस्तरमयी विष्णुमूर्त्तिर्विराजते। तत्-पर्व्वत-सानूदेशे लौहित्यस्पर्शि-शिलायां विष्णुपदचिह्नं विराजते। यात्रिजनास्तस्मिन् विष्णुपदे पतृपुरुषानां श्राद्धपिण्डदानं कुर्व्वन्ति। तद्दक्षिणेन कुर्म्मपीठं तन्निम्ने ब्रह्मपुत्रनद-

प्लावितं ब्रह्मकुण्डं तथा ऋणमोचन-कुण्ड-प्रभृतीनि बहूनि कुण्डानि जलमग्नानि वर्त्तन्ते। तस्य पर्व्वतस्य निम्नदेशे मालाकारेण बहवस्तीर्थसेविनो जनाः पूजक-ब्राह्मणाश्च गृहं निर्म्माय निवसन्ति।

एका किम्बदन्ती अस्ति यत् पुरा शोणितपुराधिपतेर्वाणराजस्य कन्या कुमारी ऊषा अनिरुद्धरूपेण मुग्धा सती, मन्त्रीकन्यया चित्रलेखया द्वारकातः श्रीकृष्णनप्तारमनिरुद्धं मन्त्रबलेन भ्रमर-रूपं दत्तवत्या अलक्षितं शोणितपुरम-हरयत्। तज्ज्ञात्वा श्रीकृष्णःससैन्यः युद्धार्थं शोणितपुरयात्रां कृतवान्। पथिश्रमेण सर्व्वे सैन्याः क्लान्ताः सन्तः पर्व्वतेस्मिन् विश्राममकुर्वन्त। लौहित्य-जलपानार्थं पर्वतादवतरतामश्वानां पदचिह्नानि पर्व्वतशिलोपरि अद्यापि वर्त्तन्ते। तेनायं पर्व्वतोऽश्वक्रान्त इति च कथ्यते।

अश्वाचलादुत्तरे क्रोशद्वयमध्ये दीर्वेश्वरी-पर्व्वतोपरि मन्दिराभ्यन्तरे दुर्गापीठं दीर्वेश्वरी-पीठं वा विराजते। तत् पीठमुर्वीपीठमपि कथ्यते। पुरात्र असमराजस्य बड़फुक्कनः स्वयं देवीमुपास्य ब्रह्मपुत्रनदोपरि प्रवल-मोगल-नौवाहिनीं पराजित्य विजयी बभूव। शारदीयपूजायामत्र बहुयात्रिणां समागमो भवति। भस्माचलस्य समीपे ईशाने ब्रह्मपुत्रनदोत्तर-तीर-संलग्नमणिकर्णनाम्नि क्षुद्रपर्व्वते मणिकर्णेश्वरमन्दिरं विद्यते। मन्दिराभ्यन्तरे मणिकर्णेश्वर-शिव-लिङ्गं विराजते। शिवरात्रियोगे तत्र बहवो यात्रिजनाः समायान्ति।

हिन्दुतन्त्रे बौद्धतन्त्रे च भारतवर्ष-मध्ये कामरूपपीठं मुख्यपीठत्वेन वर्णितम्। बौद्ध "हे वज्र" तन्त्रे (६९३-खृष्ट पूर्व्वाब्दे) निम्नोक्त चतुष्पी-ठानामुल्लेखोऽस्ति। यथा--

ज्वालान्धरः, उड्डियानः, पूर्णगिरिः, कामरूपश्चेति। वज्रयानमतस्य बौद्धग्रन्थ-"साधनमालायां" उड्डियानः पूर्णगिरिः कामाख्या श्रीहट्टश्चेति। पुराणे तन्त्रे च कामरूपं महापीठत्वेन पुनः पुनर्व्वर्णितम्। उक्तञ्च **गरुड़पुराणे**—"कामरूपं महातीर्थं कामाख्या तत्र तिष्ठति।" (८९।१६)

**योगिनीतन्त्रे च--**

देवीक्षेत्रं कामरूपं विद्यतेऽन्यन्न तत्समम्।
अन्यत्र विरला देवी कामरूपे गृहे गृहे॥

कामरूपं देवीक्षेत्रं, मे तत्तुल्यं स्थानं न कुत्रापि विद्यते। अन्यत्र देव्या दर्शनलाभः सुकठिनः। किन्तु कामरूपे गृहे गृहे देवी विराजमाना आस्ते।

**राधातन्त्रे** विंशपटले—

"कामरूपं महेशानि ब्रह्मणो मुखमुच्यते।"

**कालिकापुराण**मतेन महादेवस्य क्रोधानलेन भस्मीभूतः कामदेवोऽत्र कामरूपे महादेव-कृपया पुनः स्वरूपं प्राप्तवान्। तस्मादेतत्स्थानं "कामरूप"-मिति प्रसिद्धम्।

शम्भोर्नेत्राग्नि-निर्दग्धः कामः शम्भोरनुग्रहात्।
तत्र रूपं यतः प्राप कामरूपं ततोऽभवत्। (५१।६७)

**कालिकापुराणे**—

नाभि-मण्डल-पूर्व्वस्यां भस्मकूटस्य दक्षिणे।
पूर्व्वस्यां कर्पटो नाम पर्व्वतो यमरूपधृक्॥
पूर्व्वस्यां कर्पटाख्यन्तु शैलाच्चित्र इति स्मृतः।
यः पूर्व्वभागप्रान्तेऽभूद्दिश्याग्नेय्यामवस्थितः।
पीठन्तु ब्रह्मग्रीवात्तु स प्राक्-पर्व्वत उच्यते।
तस्मिन् वसन्ति सततं ग्रहा नव यथेच्छया॥



नाभिमण्डलस्य क्रोशमध्ये पूर्व्वदिशि भस्माचलाद्दक्षिणेन यमरूपधारी कर्पटो नाम पर्व्वतः, स एव चित्राचलश्चेति कथ्यते। तत्-पर्व्वतस्य पूर्व्वभागे अग्निकोणे ग्रीवा-पीठम्। तस्मिन् मण्डलाकारेण नवकशिवलिङ्गमूर्त्तिभिर्नवग्रहा विराजन्ते। सर्व्वदैव यात्रिजनास्तत्र गच्छन्ति। प्रतिवर्षं तत्रस्थाः पूजका माघसंक्रान्तितो दिनत्रयं यावन्महासमारोहेण ग्रहयज्ञं कुर्व्वन्ति। तत्काले बहवो यात्रिजनाः समगता भवन्ति।

ग्रीवापीठस्योत्तर-भागे चित्राचलपृष्ठ-मन्दिराभ्यन्तरे अष्टधातुनिर्म्मित-मङ्गलचण्डिकामूर्त्तिर्विराजते। प्रतिमङ्गलवासरं यात्रिजनास्तत्र गच्छन्ति। प्रतिवर्षं वैशाखमासस्यान्तिम-मङ्गल-वासरादारभ्य दिनत्रयं व्याप्य महा-समारोहेण मङ्गलचण्डीयागानुष्ठानं भवति।

"प्राग्ज्योतिषपुरम्" पुरा ब्रह्माऽत्र कामरूपे स्थित्वा, प्रथमं नक्षत्रसृष्टि-मकरोत्तेनेदं शक्रपुरीसमं प्रागज्योतिषपुरमित्यभिधीयते।

अत्रैवावस्थितो ब्रह्मा प्राङ् नक्षत्रं ससर्ज ह।
ततः प्रागज्योतिषाख्येयं पुरी शक्रपुरी समा॥ (३८।११६)॥

योगिनी-तन्त्रे-प्राग्ज्योतिषपुरमाख्यातं कामाख्या-योनिमण्डलम्। कामरूप-सीमा—करतोयां समारभ्य यावद्दिक्करवासिनीम्। (१।१२)

उत्तरस्यां कञ्जगिरिः करतोया तु पश्चिमे॥
तीर्थश्रेष्ठा दिक्षुनदी पूर्व्वस्यां गिरिकन्यके।
दक्षिणे ब्रह्मपुत्रस्य लाक्षायाः सङ्गमावधि॥
कामरूप इति ख्यातः सर्व्वशास्त्रेषु निश्चितः।
भारतस्य पूर्व्वैशान्यां कामरूपं विजानीहि॥

पश्चिमे करतोया-नदीतो दिक्करवासिनी-पीठपर्य्यन्तं विस्तीर्णम्। उत्तरे च कञ्जगिरिः हिमालयः, पूर्व्वसीमा तीर्थश्रेष्ठा दिक्षुनदी, तथा दक्षिणे ब्रह्मपुत्र-नद-लाक्षा-नद्योः सङ्गम-स्थलम्। सर्व्वशास्त्रानुमोदितैषा सीमा कामरूपस्य कथिता।

त्रिंशद्-योजन-विस्तीर्णं दीर्घेण शत-योजनम्।
कामरूपं विजानीहि त्रिकोणकारमुत्तमम्॥
ईशाने चैव केदारो वायव्यां गजशासनः।
त्रिकोणमेव जानीहि सुरासुरनमस्कृतम्॥



सुरासुरपूजितोऽयं कामरूपः त्रिकोणाकारः। अस्य दैर्घमेकशत-योजनानि एवं प्रस्थेन त्रिशंद् योजनानि कामरूपस्य ईशानकोणे कैलास-पर्व्वतः वायुकोणे गजशासनः हिमालयप्रान्तः। दक्षिणे च लाक्षा-ब्रह्मपुत्र-सङ्गमस्थलम्।

आमणि मणिपर्य्यन्तमाचित्राद् गन्धमादनम्।
पञ्चक्रोशमितं देवि कामाख्या-योनि-मण्डलम्॥

हे देवि! मणिगिरितो मणिकर्णाचल-पर्य्यन्तं तथा गन्धमादनाच्चित्राचल-पर्य्यन्तं चतुःसीमा-मध्यवर्त्ति-पञ्चक्रोश-परिमितस्थानं कामाख्या-योनि-मण्डलं देवानामपि दुर्ल्लभम्।

**कालिकापुराणे—**

वर्गशाया दक्षिणस्यां लौहित्यो नाम सागरः।
मणिकूटः स्थितः पूर्व्वे हयग्रीवो हरिर्यतः॥
स हयग्रीवरूपेण विष्णुर्हत्वा जरासुरम्।
निहत्य च हयग्रीवं क्रीड़ार्थं यत्र संस्थितः॥

वर्णाशागिरिराधुनिक–वंशरो बड़बाड़ी-पर्व्वतो वा कथ्यते। तद्दक्षिणेन लौहित्य-सागरो ब्रह्मपुत्रः। तत् पूर्व्वोत्तरे सार्द्धक्रोशदूरे मणिगिरि-शेखरे हरिर्जरासुरं हयग्रीवासुरञ्च हत्वा, हयग्रीवमाधवरूपेण विराजते। तत् पूर्व्व-पार्श्वे मन्दिरत्रये गणेश-विग्रहः कामेश्वर-कमलेश्वरौ नाम लिङ्गद्वयं किञ्चित् पूर्व्वे मदन-गिरौ केदारलिङ्गमन्दिरं पार्श्वे जय-दुर्गा-मन्दिरं पुनर्भवकुण्डं सरोवरञ्च विराजते। क्षेत्रमिदं देवपुरीति च कथ्यते। पुरात्र देवपुरे सती कन्या बेउला देवसभायां नृत्यन्ती सती देववरान्मृतपतिं लखिन्दारं पुनर्जीवित-मकरोत्। कविनारायणदेवेन पद्यच्छन्दसा कृते **पद्मपुराणे** आख्यानमिदं सविस्तारं वर्णितम्।

पुण्यतोय-नदनदी-परिवेष्टिते, नानारूपशैलमालया विराजिते कामरूप-पीठे, परशुरामकुण्डं, बहुतरस्नान-कुण्डानि, सरोवराणि, बहुशत-शक्ति-शिव-विष्णुमन्दिराणि, सत्रानि, आश्रमाश्च परिशोभन्ते। विशेषविवरणानि च यामल-तन्त्रयोगिनीतन्त्रकामाख्यातन्त्र-कामाख्यामाहात्म्य-प्रभृतिषु तन्त्रेषु कालि-कादिपुराणेषु च द्रष्टव्यानि।




**कालिकापुराणे**—

कामरूपं महापीठं गुह्याद् गुह्यतरं परम्।
सदा सन्निहितस्तत्र पार्व्वत्या सह शङ्करः।।
न चिरात् पूजितो देवस्तस्मिन् पीठे प्रसीदति।
पार्व्वती चानुगृह्णाति भर्गभक्तवन्तु तत्र वै।
ददाति न चिरात् कामं भक्ताय परमेश्वरः।।

कामरूपं गुह्यतरश्चाति-गुह्यतरं श्रेष्ठं महापीठम्। अत्र च पार्व्वत्या सह शङ्करः सर्व्वदा तिष्ठति। महादेवोऽत्र पीठे पूजितश्चेत् शीघ्रमेव प्रसन्नो भवेत्। पार्व्वत्यपि शिवभक्तमत्रानुगृह्णति। परमेश्वरोऽविलम्बेन भक्ताभीष्टं पूरयति च।

**योगिनीतन्त्रे**—

कामरूपपीठे देवि चतुष्पीठं विभागतः।
रत्नपीठं कामपीठं स्वर्णं सौमार-नामकम्।।

(१) यत्र जलेश्वर-शिवो विराजते, तत्क्षेत्रं करतोयात् पूर्व्वं स्वर्ण-कोषनद-पर्य्यन्तं रत्नपीठम् (तच्च वगुड़ातो गोवालपाड़ा-पर्य्यन्तम्)

(२) यत्र कामाख्यादेवी विराजते, तत्क्षेत्रं स्वर्णकोषनदतः पूर्व्वं रूपिका नदीं वा (रूपही नदीं) यावत् कामपीठम्। रूपही च नागाओंप्रान्तपश्चिम-सीमायां वर्त्तते।

(३) यत्र चम्पावती नदी (नागाओंप्रान्तस्य पूर्व्वाञ्चले प्रवहन्ती चापानालानदी) गिरिशेखरे मन्दिरं च विराजते तत् क्षेत्रं स्वर्णपीठं भद्रपीठं वा। तच्च रूपही-नदीतः शोणितपुरात् पूर्व्वदिशि प्रवहमानभैरवीनदीपर्य्यन्तम्। आधुनिके काले भैरवी नदी भरलुनाम्ना ख्याता।

(४) यत्र दिक्करवासिनी-पीठं विराजते,तत् क्षेत्रं सौमारपीठम्। तच्च भैरवी-नदीतः पूर्व्वस्यां दिक्रं नदी पर्य्यन्तम्। दिक्रं-नदी सदियातः कियद्दूरे वर्त्तते। सौमार-पीठे असमराजस्य राजधानी कारेंगृहं तलातल-गुप्त-गृहं, सुबृहद्गौरी-सागर-सरोवरं, जयसागरसरोवरं, शिवसागर-सरोवरञ्च विद्यन्ते। शिवसागर-सरोवरस्य दक्षिणतीरे "शिवदौलं", "दैवी-दौलं", "विष्णुदौल"ञ्च विराजते। तत्र सर्व्वदा विशेषतः पर्वावसरे बहवो यत्रिजनाः समायान्ति।

कामरूप-पीठ-मध्याद्दक्षिणोत्तर-भागतः।
ब्रह्मपुत्र-प्रवाहेण पूर्व्वतश्च पृथक्कृतम्॥
मणिकूटस्याथ गिरेर्गन्धमादनकस्य च।
मध्ये स्रवति लौहित्यो ब्रह्मणोऽग्निरुपस्थितः॥

पुरा परशुना परशुरामो ब्रह्मकुण्डं भित्वा पूर्व्वतः पश्चिमं पर्य्यन्तं कामरूप पीठमुत्तर-दक्षिणभागतो द्विधा विभज्य, उत्तरे मणिकूटो दक्षिणे गन्धमादनस्तयोर्मध्ये लौहित्यनदं प्रवहति स्म। अत्र महामहोपाध्याय-धीरेश्वराचार्य्योक्तिः—

यत्रास्ते नील-शैले हरिहरविधिभिर्ध्यायमाणा सुरेशैः।
कामाख्या यत्र साक्षान्मणिगिरिशिखरे माधवो वाजिवक्त्रः॥
केदारो यत्र लिङ्गं मदन-गिरिवरे नित्यमावर्द्धमानः।
विप्रा वेदान्त-वेदागम-निपुणतमा धार्म्मिका यत्र सन्ति॥१॥
लौहित्यः पुण्यतोयो वहति विधिसुतो दर्पितश्चानुजेन।
भूपाला धर्म्मपालास्त्रिभुवनजयिनो यत्र प्राग्ज्योतिषाख्यौ॥
सा अस्माकं जन्मभूमिः सकल वसुमती मण्डली सारभूता।
कस्तूरी-स्वर्ण-कालागुरु-गजतुरगह्याकरः कामरूपः॥२॥

### कामाख्या-नाम-निरुक्तिः

**कालिकापुराणे** भगवानुवाच—

कामार्थमागता यस्मान्मया सार्द्धं महागिरौ।
कामाख्या प्रोच्यते देवी नीलकूटे रहोगता॥
कामदा कामिनी कामा कान्ता कामाङ्गदायिनी।
कामाङ्गनाशिनी यस्मात् कामाख्या तेन चोच्यते॥
(६२।१।२)

भगवान् शिवोऽवदत्—

एषा महादेवी स्वाभिलासपूरणार्थं मया सह नीलकूटमागतवती। तेन सा "कामाख्या" नाम्ना प्रसिद्धाऽभूत्। यतः सा कामदा, कामिनी, कामा, कान्ता, कामाङ्गनाशिनी तथा कामाङ्गदायिनी अत एव सा कामाख्याभिहिता।

### योनि-पीठ-रहस्यम्

"योनि-पीठम्"—विष्णुचक्रेण विच्छिन्नात् छाया-सतीदेहात् नीलपर्व्वतोपरि योनिमण्डलं यत्र न्यपतत्, तत् स्थानं कुब्जिकापीठमिति नाम्नापि प्रसिद्धमभवत्। योनिमण्डलं प्रस्तरमयं जातम्। अस्मिन् प्रस्तरमय-महायोनि-मण्डले भगवती कामाख्या नित्यावस्थिता। कामाख्या-मन्दिराभ्यन्तरे प्रधानपीठरूपेण प्रस्तरमयी योनिमुद्रा विराजते। तत्र हस्तमात्र-परिमित-छिद्रतः प्रस्रवणाकारेणाविरतं जलधारा निःसृत्य प्रवहति। एषैव योनि-मुद्रा पूजिता भवति। कालिकापुराणे महामुद्रायाः स्वरूपं माहात्म्यञ्च वर्णितं।

एवं पुण्यतमे पीठे कुब्जिका-पीठ-संज्ञके।
नीलकूटे मया सार्द्धं देवी रहसि संस्थिता॥
सत्यास्तु पतितं तत्र विशीर्णं योनि-मण्डलम्।
शिलात्वमगमच्छैले कामाख्या तत्र संस्थिता॥
(६२।७६।७७)

कुब्जिका-पीठनाम्ना प्रसिद्धे पुण्यतमे महापीठे नील-पर्व्वतशिखरे महामाया मया सार्द्धं सर्व्वदा निर्ज्जने निवसति। सत्या योनिमण्डलं नीलाचलोपरि पतित्वा प्रस्तरत्वमवाप। तत्र प्रस्तरमयीं योनिमुद्रां कामाख्या देवी नित्यमधितिष्ठति।

संपृश्य तां शिलां मर्त्यो ह्यमरत्वमवाप्नुयात् ।
अमर्त्यो ब्रह्मसदनं. ततस्थो मोक्षमवाप्नुयात् ॥
तस्याः शिलाया माहात्म्यं यत्र कामेश्वरी स्थिता ।
अद्भुतं यस्य गुह्ये तु लौहं भस्म भवेद् गतम् ॥

यो मनुष्यस्तां शिलां स्पृशति सोऽमरत्वं प्राप्य ब्रह्मलोके स्थित्वा परिणामे मोक्षं प्राप्नोति। यां शिलां भगवती कामेश्वरी अधितिष्ठति, तस्या माहात्म्यमत्यद्भुतं, तस्य गुहाभ्यन्तरे प्रविष्टं लौहमपि भस्मसाद् भवेत् ।

योनिस्तस्यां शिलायान्तु शिलारूपा मनोहरा ।
वितस्ति-मात्र-विस्तीर्णा एकविंशांगुलियुता ॥
क्रम-सूक्ष्मविनम्रा सा भस्मशैलानुगामिनी ।
सिन्दुर-कुंकुमारक्ता सर्व्वकाम-प्रदायिनी ॥ (६२।९०-९१)

कामगुहाभ्यन्तर-शिलाधिष्ठिता शिलारूपिणी मनोहरा महायोनिः प्रथिम्ना द्वादशांगुलिप्रमाणा दैर्घ्येण एकविंशत्यंगुलिपरिमिता, क्रमशः सूक्ष्मातिसूक्ष्मा विनम्रा तथा ऐशान्यां भस्माचलानुगामिनी। अपि च सिन्दुर-कुंकुमवद् रक्तवर्णा साधकानां सर्व्वकामफलप्रदा ।

### कामाख्यायाः पञ्चमूर्त्तिरहस्म्

तस्यां योनौ पञ्चरूपा नित्यं क्रीड़ति कामिनी ।
महामाया जगद्धात्री मूलभूता सनातनी ॥ (६२।९२)
कामाख्या त्रिपुरा चैव तथा कामेश्वरी शिवा ।
शारदाथमहोत्साहा कामरूपगुणैर्युता (८५)

तत्र योनिमण्डले मूलभूता सनातनी जगद्धात्री महामाया नित्यं पञ्चकामिनी-मूर्त्तिरूपा कीड़ति। पञ्चकामिन्यो यथा––(१) कामाख्या, (२) त्रिपुरा, (३) कामेश्वरी, (४) शारदा, (५) महोत्साहा च एताः सर्व्वाः कामरूप-गुणैः चालंकृताः ।

सा चापि प्रत्यहं तत्र पञ्चमूर्त्तिधराऽभवत् ।
मोहार्थं सर्वलोकानां ममापि प्रीतये शिवा ॥
अहं पञ्चमुखेनाशु पञ्चभागे व्यवस्थितः ।
ईशानः पूर्व्वभागस्थः कामेश्वर्य्याः प्रधानतः ॥
ऐशान्यां वै तत् पुरुषो ह्यघोरस्तस्य सन्निधौ ।
सद्योजातोऽथ वायव्यां वामदेवस्तु संगतः ॥ (६२।८०-८२)

महादेव उवाच-सा मङ्गलमयी कामाख्या देवी तत्र सर्व्वेषां लोकानां मोहार्थं मम प्रीत्यर्थञ्च प्रत्यहं पञ्चमूर्त्तीर्धारयति। अहमपि पञ्चवक्त्रः पञ्चभागश्च कामेश्वर्य्याः समीपे अवस्थानं करोमि। पूर्वस्यां (१) प्रधानेन-ईशानरूपेण, (२) ऐशान्यां तत् पुरुषरूपेण (३) तस्याः समीपे अघोररूपेण, (४) वायुकोणे सद्योजातरूपेण (५) सर्वदा वाम-देव-रूपेण अवतिष्ठे कामाख्यायाः पञ्चमूर्त्तीनां पृथक् मन्त्र-तन्त्र-रूप-यन्त्र कल्पाश्च कालिका-पुराणे द्रष्टव्याः (६२-६५)

**कामाख्या-तन्त्रस्य** प्रथम पटले—

योनिरूपा महाविद्या कामाख्या वरदायिनी।
वरदानन्ददा नित्या महाविभववर्द्धिनी॥
सर्वेषां जननी सापि सर्वेषां तारिणी मता।
रमणी चव सर्वेषां स्थूला सूक्ष्मा सदा शुभा॥

कामाख्या योनि-रूपिणी महाविद्या, सा वरदायिनी-आनन्दप्रदा नित्या तथा महासम्पद्वृद्धिकारिणी। सैव सर्वेषां जननी सर्वेषां परित्राणकारिणी इति शास्त्रैरभिहितम्। एवं सा सर्वेषां रमणीरूपेण विराजमाना, स्थूल-सूक्ष्मा, मङ्गलमयी च। कामाख्यायाः ध्यानस्वरूपमुक्तं कामाख्यातन्त्रस्य तृतीयपटले—

ध्यानं शृणु महादेव्या धन-धान्य-सुतप्रदम्।
दारिद्रयाहननं देवी क्षणेनैव न चान्यथा॥
अतिसुललितवेशां हास्यवक्त्रां त्रिनेत्रांम्।
जितजलद-सुकान्ति पट्टवस्त्रप्रकाशाम्॥
अभय-वर-कराढ्यां रत्नभूषातिभव्यां।
सुरतरुतलपीठे रत्नसिंहासनस्थाम्॥
हरि-हर-विधिवन्द्यां बुद्धि-बृद्धि-स्वरूपाम्।
मदन-शर-समाक्तां कामिनीं कामदात्रीम्॥
निखिलजनविलासोल्लासरूपां भवानीम्।
कलि-कलुष-निहन्त्रीं योनिरूपां भजामि॥

महादेवीकामाख्यायाः ध्यानं श्रूयताम्। एतत् श्रवणेन तत्क्षणादेव दारिद्रयं नश्यति, नान्यथा भवेत्। देवी अति सुललितवेशधारिणी हास्यवदना, त्रिनयनी अङ्गकान्त्या सा सजलजलदमपि पराजयते, सा पट्टवस्त्र-परिधानेन प्रकाशिता। सा वराभय-मुद्राहस्ता, नानारत्नालङ्कारैश्च प्रशोभिता, देवी सुरतरुतले रत्न-

सिंहासने उपविष्टा। ब्रह्म-विष्णु-महेश्वराणाञ्च पूजनीया। सा बुद्धिश्री-वृद्धि-दायिनी, अपि च मदन-वाण-प्रपीड़िता, कामिनी, कामदात्री, तथा निखिल-जनानां विलासस्य उल्लासरूपिणी। कलि-कलूषनाशिनी योनिरूपिणीं भव-गेहिनीं कामाख्यादेवीं भजामि।

त्रिपुरा-नाम-निरुक्तिः **कालिका-पुराणे** (६३।५१।५२)

त्रिकोणमण्डलञ्चास्यास्त्रिपुरन्तु त्रिरेखकम्।
मन्त्रस्तु त्र्यक्षरो ज्ञेयः तथा रूपत्रयं पुनः॥
त्रिविधा कुण्डलीशक्तिर्देवानाञ्च सृष्टये।
सर्वं त्रयं त्रयं यस्मात् त्रिपुरा तेन सा स्मृता॥

अस्यास्त्रिकोण-मण्डलं रेखात्रयेण निर्मितं, तेन त्रिपुरम्। मन्त्रोस्या-स्त्र्यक्षरः। रूपञ्च त्रिप्रकारं, त्रिदेव-सृष्टयर्थं कुण्डलिनी शक्तिरपि त्रिविधा। सर्वं त्रिविधमिति हेतोः सा त्रिपुरेति कथ्यते।

## (१) कामाख्या-मूर्त्ति-भेद ध्यान-स्वरूपम्



कामेश्वरी ध्यानस्वरूपं **कालिकापुराणे**—

रूपन्तु चिन्तयेद् देव्याः कामेश्वर्य्या मनोहरम्।
प्रभिन्नाञ्जनसङ्काशां नीलस्निग्धशिरोरूहाम्॥
षड्वक्त्रां द्वादशभुजामष्टादशविलोचनाम्।
प्रत्येकं षट्सु शीर्षेषु चन्द्रार्द्ध-कृतशेखराम्॥
मणि-माणिक्यमुक्तादि-कृतमालामुरःस्थले।
कण्ठे च बिभ्रतीं नित्यं सर्वालङ्कारमण्डिताम्॥

कामेश्वरीदेव्या मनोहररूपं चिन्तयेत् यथा-देवी दलिताञ्जनसदृशकृष्णवर्णा, स्निग्ध-नील-केशसमूहविशिष्टा सा षड्वक्त्रा द्वादशभुजा अष्टादशनयना षन्मस्तकेषु प्रत्येकमर्द्धचन्द्रशेखरशोभिता। तस्य वक्षःस्थलं मणिमाणिक्य-मुक्तादिरचितमालया समलंकृतम्। तस्या अन्यान्यावयवा अपि सर्व्वालङ्कार-भूषिताः।

पुस्तकं सिद्धसूत्रञ्च पञ्चवाणं तु तं तथा।
खड्गं शक्तिञ्च शूलञ्च बिभ्रतीं दक्षिणैः करैः॥
अक्षमालां महापद्मं कोदण्डाञ्चाभयं तथा।
चर्म्म पश्चात् पिनाकञ्च बिभ्रतीं वामपाणिभिः॥

देवी दक्षिणषड्हस्तैः सृष्टिरक्षार्थं क्रमेण पुस्तकं सिद्धसूत्रं पञ्चवाणान् खड्गं शक्ति शूलञ्च धारयति। वामषड्हस्तैः अक्षमालां कोदण्डम् अभय-मुद्रां महापद्मं पिनाकञ्च धारयति।

शुक्लं रक्तञ्च पीतञ्च हरितं कृष्णमेव च।
विचित्रां क्रमतः शीर्षमैशान्यां पूर्व्वमेव च।।
दक्षिणं पश्चिमञ्चैव तथैवोत्तरशीर्षकम्।
मध्यञ्चेति महाभाग क्रमाच्छीर्षाणि वर्णतः।।

कामेश्वरी-देव्या, ईशान-पूर्व-दक्षिण-पश्चिमोत्तर-मध्यस्थितानि षन्मस्त-कानि च, यथाक्रमं शुक्ल-रक्त-पीत-हरित-कृष्णादिविचित्रवर्ण-विशिष्टानि।

शुक्लं माहेश्वरीवक्त्रं कामाख्या रक्तमुच्यते।
त्रिपुरा पीत-संङ्काशा शारदा हरिता तथा।।
कृष्णकामेश्वरीवक्त्रं चण्डायाश्चित्रमिष्यते।
धम्मिल्लसंयुतकचं प्रतीशीर्षं प्रकीर्त्तितम्।।

शुक्लवदना माहेश्वरी, रक्तवदना कामाख्या, पीतवदना त्रिपुरा, हरिद्वदना शारदा, कृष्णवदना कामेश्वरी, विचित्रवदना चण्डा। प्रतिमस्तकं वेणिबद्धकेशपाशसुशोभितं च।



सिंहोपरि सितप्रेतं तस्मिन् लोहितपङ्कजम्।
कामेश्वरी स्थिता तत्र ईषत्प्रहासितानना।।
विचित्रांशुकसंवीतां व्याघ्रचर्म्माम्बरं तथा।।
एवं कामेश्वरीं ध्यायेद् धर्मकामार्थसिद्धये।।(६४।१७।२७)

सिंहोपरि श्वेतवर्णप्रेतस्तदुपरि रक्तपद्मं, तत्र कामेश्वरी देवी ईषद्धास्य-मुखी उपविष्टा, तस्याः शरीरं विचित्रसूक्ष्मपट्टवस्त्रेणावृत्तं, व्याघ्रचर्म्म-परिधाना धर्म्म-कामार्थ-सिद्धयर्थं तां ध्यायेत्।

## (२) सिद्ध-कामेश्वरी-स्वरूपम्

रवि-शशि-युत-कर्णा कुंकुमा पीतवर्णा।
मणिकनक-विचित्रा लोल-कर्णा त्रिनेत्रा।।
अभय-वरद-हस्ता साक्ष-सूत्र-प्रशस्ता।
प्रणत-सुर-नरेशा सिद्धकामेश्वरी सा।।

देवी सूर्य्य-चन्द्रशोभितकर्णा, ईषत्-पीताभरक्तवर्णा, मणि-सुवर्ण-निर्म्मित-कर्ण-भूषणैरान्दोलितकर्णा त्रिनेत्रशोभिता अभयवरदान-निरत-हस्तद्वययुक्ता, अक्ष-सूत्र-शोभितापरहस्तद्वयान्विता; प्रणत-सुर-नरानामीश्वरी। सा देवी सिद्ध कामेश्वरीति प्रख्याता।

### (३) सर्व्व-कामेश्वरी-ध्यान-स्वरूपम्

अरुण-कमल-संस्था रक्तपद्मासनस्था।
नव-तरुण-शरीरा मुक्तकेशी सुहारा॥
शवहृदि-पृथुतुङ्गस्तन्ययुग्मा मनोज्ञा।
शिशुरवि-सम-वक्त्रा सर्व्वकामेश्वरी सा॥(६२।१४४)

देवी अरुणकमलोपरि पद्मासनेनोपविष्टा, देवी नवयौवना, मुक्तकेशी, सुन्दरहारविभूषणा, शवहृदयेअधिष्ठिता, पीनोन्नतस्तन-भार-नम्रा, मनोहरा बालसूर्य्यवद् रक्तवर्णमुखमण्डलशोभिता सा सर्व्वकामेश्वरी इति नाम्नाऽभिहिता।

### (४) शारदा

भगवती शारदा कामाख्यायाश्चतुर्थमूर्त्तिः।
शरत्काले पुरा यस्मान्नवम्यां बोधिता सुरैः।
शारदा सा समाख्याता पीठे लोके च मानवः।

यतः पुरा शरत्काले कृष्णाष्टम्यामाविर्भूता एवं नवम्यां तिथौ देवास्तां बोधितवन्तस्तस्मादेषा पीठस्थाने लोके च शारदा इति नाम्ना उभिहिता। एवं भद्रकालीति प्रसिद्धा तस्या ध्यानमुक्तमष्टपरिच्छेदे।

### (५) महोत्साहामहामायाकामाख्यायाः पञ्चमूर्त्तयः

महोत्साहा तु या देवी महामाया तु सा स्मृता।
वैष्णवतन्त्रमन्त्रेण सा पूज्या योनिमण्डले॥
तदेव मण्डलञ्चास्या ह्यङ्गन्यासस्तथैव च।
सा एव पूज्या पर्य्याये तद्ध्यानं सैव देवता॥
तन्त्रं तदेवमुक्तन्तु तस्मान्नान्यत्तु किञ्चन॥(६३।४५-४६)

महोत्साहा देवी महामायापि कीर्त्तिता। योनिमण्डले वैष्णव-तन्त्र-मन्त्रैः महोत्साहा पूजितव्या, तदेव तस्या मण्डलम्। तस्या अङ्गन्यासः पूजाक्रमः ध्यान-मन्त्रश्च समाना एव, न कोऽपि प्रभेदोऽस्ति। वैष्णव-तन्त्र-सम्बन्धे कालिका-पुराणे ५२-५३ अध्यायौ द्रष्टव्यौ।

महामाया-ध्यान-स्वरूपं यथा-प्रथमं योगपीठं ध्यात्वा तत्रस्थितां महामायां ध्यायेत्। योगपीठध्यानञ्च मत्प्रणीतशक्तितत्वग्रन्थे द्रष्टव्यम्—तत्र व्याख्यातं भवति।

योगपीठम्—ओं शुद्धस्फटिकशङ्काशं चतुष्कोणं चतुर्वृतिम्।
आधारशक्त्या विहितं पीठं सूर्य्येन्दुसन्निभम्॥
आग्नेयादिषु कोणेषु चतुर्षु क्रमतः स्थितम्।
धर्म्मं ज्ञानं तथैश्वर्य्यं वैराग्यं क्रमतः सदा॥
पूर्व्वादिदिक्षु चैतानि स्थितानि क्रमतस्तथा।
अधर्म्मश्च तथा ज्ञानमनैश्वर्यन्ततः परम्॥
अवैराग्यन्ततः पश्चाद्धारणात् संव्यवस्थितम्।
तस्योपरि जलौघस्तु तस्मिन् ब्रह्माण्डमास्थितम्॥
ब्रह्माण्डाभ्यन्तरे तोयं कूर्म्मस्तस्योपरि स्थितिः।
कूर्म्मोपरि तथानन्तः पृथ्वी तस्योपरि स्थिता॥
अनन्तगात्रसंयुक्तं नालं पातालगोचरम्।
पृथ्वीमध्ये स्थितं पद्मं दिक्पत्रं गिरिकेशरम्॥
तस्याष्टदिक्षु दिक्पालाः स्वर्गमध्ये व्यवस्थिताः।
कर्णिकायां ब्रह्मलोकस्तपोलोकादयो ह्यधः॥
स्वर्गे ज्योतींषि देवाश्च चतुर्वेदास्तदन्तरे।
सत्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः।
सदा स्थिताः पद्ममध्ये परन्तत्त्वं तथैव च॥
आत्मतत्त्वं तत्रसंस्थमूर्द्धच्छदनमूर्द्धतः।
अधोधश्छदनन्तत्र केशराग्रे व्यवस्थितम्॥
सूर्य्याग्नि-चन्द्र-मरुतां मण्डलानि क्रमात्ततः।
सारासनं योगपीठं सुखासनमतः परम्॥
आराध्यासनमस्माच्च ततश्च विमलासनम्।
मध्ये विचिन्तयेत्तत्र जगद्वै सचराचरम्॥
ब्रह्म-विष्णु-शिवाश्चैव भागत्रयविनिश्चितान्।
आत्मानञ्चिन्तयेत्तत्र पूजने समुपस्थितम्॥
मण्डलं योगपीठञ्च पद्मं पद्मोपरिस्थितम्।
साराद्यासनमानीय चत्वार्यपि च चिन्तयेत्॥
तत्र स्थितां महामायां ध्यायेदेकाग्रमानसः।
शोणपद्मप्रतिकाशां मुक्तामूर्द्धजलम्बिनीम्॥

चलत्काञ्चनसम्बद्ध-कुण्डलोज्ज्वलशालिनाम् ।
सुवर्णरत्नसम्बद्ध-किरीटत्रय-धारिणीम् ॥
शुक्ल-कृष्णारुणैर्नेत्रैस्त्रिभिश्चारु विभूषिताम् ।
सन्ध्याचन्द्रसमप्रख्यकपोलां लोल-लोचनाम् ॥

योग-पीठस्थस्वर्णकमलेऽवस्थितां महामायामेकाग्रचित्तेन ध्यायेत्। देवी स्वर्ण-पद्म-सदृश-प्रभाविशिष्टा, तस्या केशराशिः पर्याकुलः पृष्ठे दोदुल्यते। कर्णद्वयं चञ्चलस्वर्णकुण्डलाभ्यां शोभते। स मस्तके रत्नखचितसुवर्णकिरीटित्रयं धारयति। देवी शुक्लः कृष्णो रक्त इति वर्णत्रयेणातिमनोज्ञा, तस्या कपोलं सन्ध्याकालीन-शशधर-सदृशं चञ्चललोचनत्रयविशिष्टम्।

विपक्वदाड़िमीबीज-दन्तां सुभ्रूयुगोज्ज्वलाम् ।
बन्धुक-रक्तवसनां शिरीष-प्रभ-नासिकाम् ॥
कम्बुग्रीवां विशालाक्षीं सूर्यकोटिसमप्रभाम् ।
चतुर्भुजां सुवसनां पीनोन्नत-पयोधराम् ॥
दक्षिणोर्द्धेण निस्त्रिशं परेण सिद्धसूत्रकम् ।
बिभ्रतीं वामहस्ताभ्यामभीति-वरदायिनीम् ॥

देव्या दन्तपंक्तिः परिपक्वदाड़िमीबीजसदृशी, सा समुज्ज्वलभ्रूयुगलविशिष्टा, वस्त्रञ्च बन्धुक-कुसुमवत् रक्तवर्णं, नासिका शिरीषकुसुममिव मनोहरा। सा देवी शङ्खग्रीवा, विशालनयना, कोटिसूर्य्यसदृशाङ्गकान्तिविशिष्टा, चतुर्भुजा, उत्तमवसनपरिधाना, पीनोन्नतस्तनी च। तस्या दक्षिणोर्द्धहस्ते खड्गं निम्नहस्ते सिद्धसूत्रं वामहस्तयोरभयवरदमुद्रे विराजेते।

निम्ननाभिं क्रमायात-क्षीणमध्यां मनोहराम् ।
आनम्र-नाग-नासोरुं गुप्तगुल्फां सुपार्ष्णिकाम् ॥
बद्धपर्य्यङ्कसङ्कल्प-निविड़ासन-राजिताम् ।
गात्रेण रत्नस्तम्भञ्च सम्यगालम्ब्य संस्थिताम् ॥
किमिच्चसीति वचनं व्याहरन्तीं मुहुर्मुहुः ।
पञ्चाननं पुरः संस्थं निरीक्षन्तीं स्ववाहनम् ॥

तस्या नाभिमण्डलं सुगभीरं, क्रमशः क्षीणो मध्यदेशः, सा सुमनोहरा। करिकरसमारुद्वयविशिष्टा, सुगुप्तगुल्फद्वयशोभिता, सुनासिका सुन्दरगुल्फपार्ष्णिका च। देवी निविड़बद्धपर्य्याङ्कासने उपविष्टा तथा गात्रेण रत्नमयस्तम्भे सम्यगालम्ब्य संस्थिता। देवी सम्मुखस्थितं पञ्चाननं पृच्छति,

कोऽभिलाषः तवेति पुनः पुनर्जिज्ञासमाना तथा स्ववाहनं शिवं निरीक्षमाणा च वर्त्तते।

**कालिका-पुराणे**—

मुक्तावली-स्वर्णरत्न-केयूर-कङ्कनादिभिः।
सर्वैरलङ्कारगणैरुज्ज्वलां सुस्मिताननाम्॥
सूर्य्य-कोटि-प्रतिकाशां सर्वलक्षण-संयुताम्।
नव-यौवन-सम्पन्नां तथा सर्व्वाङ्गसुन्दरीम्॥
ईदृशीमम्बिकां ध्यात्वा नमः फडिति मस्तके।
स्वकीये सुमनो दद्यात् साहमेव विचिन्तयन्।
(४३।२५-३६)

देवी मुक्तामाला-रत्नखचितस्वर्णकेयूर-कङ्कनादिभिरलङ्कारैः समुज्ज्वला हास्यमुखी च। कोटि-सूर्यप्रभावत्तस्या अङ्गप्रभा। सा सर्वलक्षणसंयुता, नव-यौवनसम्पन्ना सर्वाङ्गसुन्दरी च। अम्बिकामेवं ध्यात्वा नमः फडिति मन्त्रेण स्वशिरसि पुष्पं दत्वा साहमिति देव्या सहाभिन्नत्वं चिन्तयेत्।

**कालिका-पुराणे**—

एकैव तु महामाया कार्य्यार्थं भिन्नतां गता।
कामाख्या तु महामाया मूलमूर्त्तिः प्रगीयते॥
पीठे भिन्नाह्वया सा तु महामाया प्रगीयते।
एक एव यथा विष्णुर्नित्यत्वाद्धि सनातनः॥
जनानामर्द्दनात् सोऽपि जनार्द्दन इति श्रुतः।
तथैव सा महामाया कामार्थं सङ्गता गिरौ।
कामाख्येति सदा देवैर्गद्यते सततं नरैः।
(५८।५२-५४)

एकैव हि महामाया विभिन्नकार्य्यार्थं विभिन्ना मूर्त्तीर्धारयति। कामाख्या एव महामाया या मूलमूर्त्तिरुक्ता। एका महामाया एव भिन्न-भिन्न-पीठेषु विभिन्ननामभिरभिहिता भवति। एको विष्णुर्यथा नित्यत्वेन सनातननाम्ना तथा जनानां पीड़नात् जनार्द्दननाम्ना चाभिहितो भवति, तद्वदेषा महामाया कामपूरणार्थं नीलपर्व्वते सङ्गततया कृतवसतिर्देवैः मनुष्यैश्च सततं "कामाख्या" इत्यभिहिता भवति।

यथाहि पुरुषः कोऽपि छत्री छत्रग्रहाद् भवेत्।
स्नातकः स्नानकाले वै कामाख्यापि तथाह्वया॥

महामाया-शरीरन्तु कामार्थं समुपस्थितम्।
लोहितैः कुंकुमैः पीतं कामार्थमुपयोजितैः॥
खड्गं त्यक्त्वा कामकाले सा गृह्णाति स्रजं स्वयम्।
यदा तु त्यक्तकामा सा तदा स्यादसिधारिणी। (५६-५७)

यथा कोऽपि पुरुषो हस्तेन छत्रग्रहणात् लोकैः छत्रीति कथ्यते, एवं स एव स्नानकाले "स्नातक" इत्युच्यते। कामाख्या नाम्नश्चापि तद्वद् ज्ञेयम्। कामपूरणार्थं महामाया कामाख्यानाम्नावतीर्णा, अत एव कामपूरणकाले देवी काम-सामग्रीभूतं लोहित-कुंकुमाभपीतमाल्यं स्वयं गृह्णाति, यदा त्यक्तकामा सा पुनः खड्गं धारयति।

## कामेश्वर्याःकामाख्याया वाहनरहस्यम्

कामकाले शिवप्रेते न्यस्तलोहितपङ्कजे।
रमते त्यक्तकामा तु सितप्रेतोपरिस्थिता॥
तथैवेतस्ततोगत्या सिंहस्था कामदा भवेत्॥
कदाचित् सा सितप्रेते कदाचिद् रक्तपङ्कजे॥
कदाचित् केशरीपृष्ठे रमते कामरूपिणी॥५९॥



देवी कामकाले शिवप्रेते विन्यस्त-रक्त-पद्मा रमते। कामं त्यक्त्वा, श्वेत-प्रेतरूपे शिवोपरि विराजते। एवं प्रकारेण सा सिंहस्थिता सती इतस्ततो विचरणेन कामं प्रददाति। सा कामरूपिणी देवी कदाचित् श्वेत-प्रेते, कदाचिद्वा रक्तपद्मे, एवं कदाचित् सिंह-पृष्ठे विचरत।

## वाहनत्रयस्य मूर्त्ति-भेद-रहस्यम्

एका समस्तजगतां प्रकृतिः सा यतस्ततः।
ब्रह्म-विष्णुशिवैर्देवैर्ध्रियते सा जगन्मयी॥
सितप्रेतो महादेवो ब्रह्मा लोहित-पङ्कजः।
हरिर्हरिस्तु विज्ञेयो वाहनानि महौजसः॥
स्वमूर्त्या वाहनत्वन्तु तेषां यस्मान्नयुज्यते।
तस्मान्मूर्त्यन्तरं कृत्वा वाहनत्वं गतास्त्रयः॥
यस्मिन् यस्मिन् महामाया प्रीणाति सततं शिवा।
तेन तेनैव रूपेण आसनान्यभवंस्त्रयः॥
सिंहोपरि स्थितं पद्मं रक्तं तस्योर्द्धगः शवः।
तस्योपरि महामाया वरदाभयदायिनी॥(६४-६८)

यतः सा देवी एका सर्वजगतां प्रकृतिरुत्पत्तिहेतुस्ततः सा महामाया ब्रह्म-विष्णु-शिवैर्धार्य्यते। महादेवः श्वेतवर्णप्रेतः, ब्रह्मा रक्तपद्मं, विष्णुः सिंह एते महातेजोमयदेव्या वाहनानि तेषां स्व-स्वमूर्त्या वाहनत्वस्यायोग्यताहेतोः प्रोक्तमूर्त्तित्रयेण वाहनतां प्राप्ताः। सिंहोपरि रक्तपद्मं, तदुपरि शवः तदुपरिस्थिता देवी वराभये प्रददाति।

एवंरूपेण यो ध्यात्वा पूजयेत् सततं शिवाम्।
ब्रह्म-विष्णु-शिवास्तेन पूजिताः स्युरसंशयम्॥
एवं सदा महामाया कामाख्या चैकरूपिणी।
ध्यानतो रूपतो भिन्ना तस्मात्तां तत्र पूजयेत्॥(६९-७०)

यः साधक एवंरूपेण ध्यात्वा सततं पूजयति, तेन ब्रह्म-विष्णु-महेश्वराश्च पूजिता भवेयुरिति न सन्देहः। महामाया कामाख्या सततमेकरूपापि ध्यानतो रूपतो विभिन्ना। एतन्निमित्तं कामरूपे शक्तिपूजा प्रशस्ता।

(१८) भूतधात्री क्षीरग्रामे भैरवः क्षीरखण्डकः।
युग्माद्या सा महामाया दक्षांगुष्ठः पदो मम॥

क्षीरग्रामो बर्द्धमानष्टेशनतो दशक्रोशमध्ये कटोयारसमीपे अवस्थितः। अत्र स्थाने देव्या दक्षिणपदांगुष्ठो न्यपतत्। पीठाधिष्ठात्री-देवी युगाद्या योगाद्या वा भैरवः क्षीरखण्डको क्षीरकण्ठो वा।

(१९) नकुलीशः कालीपीठे दक्षपदांगुल्यश्च मे।
सर्व्वसिद्धिकरी देवी कालिका तत्र देवता॥

कालीपीठे अर्थात् कालीघाटे सतीदेव्या दक्षिणपदस्य चतुरंगुल्यो न्यपतत्। पीठाधिष्ठात्री देवी कालिका भैरवो नकुलेश्वरो नकुलेशो वा। बृहन्नीलतन्त्रे शिवार्च्चन-तन्त्रे च पीठमिदं कालीघट्टनाम्ना प्रसिद्धम्।

निगम-कालस्य पीठमालायां कालीघाटस्य सीमा निर्दिश्यते।

दक्षिणेश्वरमारभ्य यावच्च बहुला पुरी।
धनुराकारक्षेत्रञ्च योजनद्वयसंज्ञकम्॥
तन्मध्ये त्रिकोणाकारं क्रोशमात्रं व्यवस्थितम्।
त्रिकोणे त्रिकोणाकारं ब्रह्म-विष्णु-शिवात्मकम्॥

मध्ये च कालिकादेवी महाकाली प्रकीर्त्तिता।
नकुलेशो भैरवो यत्र तत्र गङ्गा विराजिता॥
काशीक्षेत्रं कालीक्षेत्रमभेदोऽस्ति महेश्वरः॥

दक्षिणेश्वरतो बहुला (वर्त्तमाने बेहाला) पर्य्यन्तं क्रोशद्वय-परिमितं धनुराकार-स्थानं कालीक्षेत्रम्। अस्य मध्ये क्रोशमेकं व्याप्य त्रिकोणाकार-स्थाने त्रिगुणात्मकब्रह्म-विष्णु-महेश्वरा, मध्यस्थले च महाकाली विराजन्ते। भैरवो यत्र नकुलेशोऽवस्थितस्तत्र गङ्गादेवी विराजते। हे महेश्वर! काली-क्षेत्र-काशीक्षेत्रयोर्न प्रभेदोऽस्ति इति।

(२०) "अंगुलीवृन्दं हस्तस्य प्रयागे ललिताभवः"। (**तन्त्र-चूड़ामणौ**)

प्रयागे (आधुनिके-इलाहाबादे) भगवत्या सतीदेव्या अवशिष्ट-हस्तांगुली-समूहान्यपतन् तत्र पीठाधिष्ठात्री देवी "ललिता", भैरवो भवः शिवचरितमतेन देवी कमला, भैरवो वेणीमाधवः। त्रिवेणीघट्टस्योत्तरेण पूर्व्वदिशि क्रोशैक-दूरे देव्या ललिताया मन्दिरमस्ति; ललिताया स्थानीयं नाम "आलोपी" देवी। मन्दिरे मूर्त्तिर्नास्ति। सुप्रशस्तमन्दिराभ्यन्तरे प्रस्तर-निर्म्मितोच्चवेदी, तन्मध्ये चतुर्हस्तपरिमितगह्वरमध्ये देव्याः पीठम्। "प्रयागधाम" हिन्दुनामन्यतमं श्रेष्ठतीर्थम्। अतएव तीर्थराज प्रयाग इत्युच्यते। शास्त्रे उक्तं प्रजापतिर्ब्रह्मा वेदलाभार्थमत्र "अश्वमेध" यज्ञमकरोत्। तेनेदं स्थानं "प्रयागम्"।

"एतत् प्रजापतिक्षेत्रं त्रिषु लोकेषु विश्रुतम्।"

इदं प्रयागक्षेत्रं त्रिलोकेषु प्रजापतेः क्षेत्रमित्युक्तं विख्यातञ्च। गङ्गा सर्वत्रैव पतित-पावनी, परन्तु अत्र सा कलुषहारिणी सुर-धुनी पुन्यदायिन्या यमुनया तथा सरस्वत्या च मिलित्वा, त्रिवेणी सृष्टिमकरोत्। अत्र सङ्गम-स्थले सैकते प्रतिवर्षं माघमेला, तथा प्रतिद्वादशवर्षं "कुम्भयोगो" भवति।

## कुम्भयोग-रहस्यम्

प्रसङ्गादत्रोच्यते—पुराणे वर्णितम् 'अमृत'लाभार्थं देवासुरैर्मिलित्वा समुद्रमन्थनमक्रियत। मन्थनदण्डो मन्दर-पर्व्वतोऽभवत्, रज्जुर्वासुकिनागः, स्वयं विष्णुश्च कुर्म्मरूपेण मन्दरं पृष्ठेऽधारयत्। समुद्रमन्थनात् क्रमेण पुष्पकरथः, ऐरावतहस्ती पारिजातं पुष्पं कौस्तुभमणिर्लक्ष्मीः सुरभिर्नाम धेनुः परिशेषे अमृतकुम्भेन सह धन्वन्तरिश्च समुत्थितोऽभवत्। धन्वन्तरिरमृतकुम्भमिन्द्र-

हस्ते समर्पयत्। इन्द्रश्च स्वपुत्रं जयन्तमदात्। अमृतकुम्भमादाय जयन्ते स्वर्गाभिमुखं पलायितुमुद्यते सति, दैत्यगुरुः शुक्राचार्य्यो बलपूर्वकं तदमृतकुम्भापहरणाय दैत्यानादिदेश। ततो द्वादशदिनंव्यापिदेवासुरसंग्रामे देवानां पराजयोऽभवत्। तत्काले देवाश्चतुर्षु स्थानेषु तदमृतकुम्भं सुगुप्तमकुर्वन्। तदवधि तेषु चतुःस्थानेषु "कुम्भयोगो"ऽनुष्ठितो भवति। देवानां द्वादशदिनानि मनुष्यलोके द्वादशवर्षतुल्यानि। तस्मात् प्रतिद्वादशवर्षान्ते कुम्भस्नानोपलक्षे महोत्सवो भवति। उक्तञ्च—

गङ्गाद्वारे प्रयागे च धारा गोदावरी तटे।
कलसाख्यो हि योगोऽयं प्रोच्यते शङ्करादिभिः॥

(१) गङ्गाद्वारे (हरिद्वारे) (२) प्रयागे (३) धारायां (उज्जयिन्यां) (४) गोदावर्य्यां (नासिके) च क्रमशो वर्षत्रयात् परं परमुक्तस्थानचतुष्टये कुम्भयोगः संघटते। समष्टितः प्रतिस्थानं द्वादशवर्षानन्तरं कुम्भयोगो भवति।

(१) पद्मिनी-नायके मेषे कुम्भराशि गते गुरौ।
गङ्गाद्वारे भवेद् योगः कुम्भनामा तदोत्तमः॥



बृहस्पतौ कुम्भराशौ तथा सूर्य्यदेवे मेषराशौ अवस्थिते सति, हरिद्वारे अमृतकुम्भयोगो भवति।

(२) मेषराशिं गते जीवे मकरे चन्द्रभास्करौ।
अमावस्यां तदा योगः कुम्भाख्यस्तीर्थनायके॥

बृहस्पतौ मेषराशौ तथा चन्द्रसूर्य्ययोः मकरराशौ अवस्थितयोः सत्योः तीर्थराज-प्रयागे कुम्भयोगः समुपस्थितो भवेत्।

(३) सिंह-राशि गते सूर्य्ये सिंहराश्यां बृहस्पतौ।
गोदावर्य्यां भवेत् कुम्भो जायते खलु मुक्तिदः॥

बृहस्पतौ सूर्य्ये च उभयोः सिंहराशिं गतयोः गोदावर्य्यां मुक्तिप्रदः कुम्भयोगः संघटते।

(४) मेषराशि गते सूर्य्ये सिंहराश्यां बृहस्पतौ।
उज्जयिन्यां भवेत् कुम्भः सर्व्वसौख्यविवर्द्धनः॥

सूर्य्ये मेषराशौ बृहस्पतौ च सिंहराशौ अवस्थिते उज्जयिन्यां सर्वसुखदायकः कुम्भयोगः संघटते। उक्तञ्च—बौद्धधर्म्मस्याधःपतनानन्तरं श्रीमच्छङ्कराचार्य्यो वैदिकधर्म्मस्य पुनरुत्थानकामो भारतवर्षस्य पूर्व्व-दक्षिण-पश्चिमोत्तर-चतुःप्रान्तेषु मठचतुष्टय-स्थापन-पूर्व्वकं सन्न्यासिसंघसंस्थापनमकरोत्। वैदिक धर्म्मप्रचारणार्थं तथा संरक्षणार्थाञ्च कुम्भयोगे चतुःस्थानेषु सन्न्यासिनां सम्मेलनमादिदेश। तदवधि वर्त्तमानकालपर्य्यन्तं कुम्भमेला प्रचलिता आस्ते। कालक्रमेण सर्व्वसम्प्रदाय-साधुसमागमेन एतत्साधु-सम्मेलनं परिपुष्टया महामहिमान्वितं यत् क्रमशो सुमहदाकारं प्राप्नोति।

## श्रीश्रीललितावतार-रहस्यम्

पराशक्तिः कथं ललितारूपेण (त्रिपुरारूपेण) अवतीर्णा तद्विवरणं ब्रह्माण्ड-पुराणस्य उत्तरखण्डे तथा त्रिपुरा-रहस्य-माहात्म्यखण्डे सविस्तरं प्रदत्तम्। तत्सारांशस्त्वेष एव यथा-पुरा भण्डासुरः शिवमाराध्य अभयवरं लब्ध्वाऽतिगर्व्वान्वितोऽभवत् स देवान् स्वर्गाद् बहिष्कृत्य स्वयं यज्ञभागभोगमकरोत्। इन्द्राणी चासुरभयात् गौरीमाश्रयत्। भण्डासुरः क्रमशः त्रैलोक्यं पराजित्य विशुक्रासुरं पृथिव्याम् तथा विषङ्गमासुरं पाताल-राज्ये च सर्व्वाधिपत्यं प्रादात्। इन्द्राणीं गौरीसमीपस्थितां ज्ञात्वा, स कैलाशं गत्वा गणेशसमीपे शचीं प्रार्थयत्। तत्काले गणेशोऽतिक्रुद्धः सन् प्रमथ-सेना-गणैः सह दैत्यसैन्यमभ्यधावत्। तद्दृष्ट्वा गौरी कुपिता सति भण्डासुरं पाशेन बद्ध्वा यदा निधनोद्यताऽभवत् तदा ब्रह्मा गौरीसमीपमागत्य शङ्करवरदानवार्त्तामकथयत्। तदा देवी भण्डासुरं पाशबन्धनान्मुमोच।

अनन्तरं भण्डासुरस्य देवानामुपरि निग्रहलाञ्छना क्रमशो ववृधे। तदा सुरगुरुर्बृहस्पतिर्देवान् तन्त्रानुसारेण परशक्तिमुद्दिश्य महायागानुष्ठानकरणायादिदेश। तच्छ्रुत्वा देवाः स्वशरीरमांसेन जगन्मातरमुद्दिश्य यज्ञाग्नौ जुहुवुः।

हुतेषु सर्व्वमांसेषु पादेषु च करेषु च।
होतुमिच्छत्सु देवेषु कलेवरमशेषतः॥
प्रादुर्बभूव परमं तेजःपुञ्जमनुपमम्।
कोटि-सूर्य्यप्रतिकाशं चन्द्रकोटिसुशीतलम्।
(ललितोपाख्यानम् ७।७१।७२)

देवानां हस्तपदादीनां समस्तमांसानामाहुतिदानान्तरं यदा देवा निःशेषेण सर्व्वशरीराहुति दाने उद्यता जातास्तदा सहसा कोटि-सूर्य्यप्रभाविशिष्टं तथा चन्द्रकोटिसुशीतलमनुपमं परमतेजःपुञ्जं प्रादुरभूत्।

तन्मध्यमे समुदभूच्चक्राकारमनुत्तरम्।
तन्मध्ये महादेवीमुदयार्कसमप्रभाम्॥
जगदुज्जीवनाकारां ब्रह्म-विष्णु-शिवात्मिकाम्।
सौन्दर्य्य-सार-सीमान्ताम् आनन्द-रस-सागराम्॥
जवा-कुसुम-सङ्काशां दाड़िमी-कुसुमाम्बराम्।
सर्व्वाभरण-संयुक्तां शङ्गारैक-रसालयाम्॥
कृपातरङ्गितापाङ्ग-नयनालोक-कौमुदीम्।
पाशांकुशेक्षुकोडदण-पञ्चवाण-लसत्कराम्॥
तां विलोक्य महादेवीं देवाः सर्व्वे सवासवाः।
प्रणेमुर्मुदितात्मानो भूयो भूयोऽखिलात्मिकाम्॥

तत्तेजः पुञ्जमध्यदेशतश्चक्राकारेण अनुत्तम-तेजोमण्डलं प्रकाशितमभूत्। देवा दृष्टवन्तो यत् चक्राकारतेजोमण्डलमध्यत उदय-कालीन-सूर्य्यवत् प्रभा-विशिष्टा, महादेवी ललिता (त्रिपुरासुन्दरी वा) आविर्भूता। तस्या स्तन्मूर्त्ति-र्जगदुज्जीवनकारिणी, सा ब्रह्म-विष्णु-शिवस्वरूपिणी। सा सर्व्वश्रेष्ठसौन्दर्य्य-पराकाष्ठा, आनन्द-रस सागरस्वरूपा च। महादेवी जवाकुसुमतुल्यप्रभाविशिष्टा। दाड़िमी-पुष्पवद्-रक्तवर्ण-वस्त्र-परिधाना, सर्व्वाभरणभूषिता, तथा शृङ्गार-रस-सागर-स्वरूपिणी।एषा कृपातरङ्गित-कटाक्षपातरूप-चन्द्रिकावर्षणकारिणी। तस्याः चतुर्भुजे पाशांकुशेक्षुकोदण्डं पञ्चवाणाश्च शोभन्ते। इन्द्रादिदेवा ईदृशीं महादेवीं दृष्ट्वा आनन्दितचित्ताः पुनः पुनस्तां प्रणम्य, भक्तिगद्‌गदचित्तेन तुष्टुवुः। स्तवे तुष्टा भगवती ललिता देवी महेन्द्रप्रमुखदेवेभ्यो वरदानमकरोत्।

अहमेव विनिर्जित्य भण्डं दैत्यकुलेश्वरम्।
अचिरात्तव दास्यामि त्रैलोक्यं सचराचरम्॥
निर्भया मुदिताः सन्तु सर्व्वे देवगणास्तथा।

हे इन्द्र! अहमचिरेणैव दैत्यराजं भण्डासुरं पराभूय तुभ्यं सचराचरं त्रैलोक्याधिपत्यं प्रदास्यामि, हे देवाः! यूयमानन्दचित्ता निर्भयाश्च भवतः।

अनन्तरं महादेवी श्रीचक्रात्मकरथमारुह्य भण्डासुरवधाय यात्रामकरोत्। भगवत्या ललिता-देव्याः शक्तिभिः, बालम्बा-मन्त्रिणी-दण्डिनी-बराहीप्रभृतिभि-

दैत्यसैन्यसमूहः युद्धे विनाश्यते। ततो ललिता-देव्या सह भण्डासुरस्य घोरतरं युद्धमभूत्। अनन्तरं महाकामेश्वर-नामकदिव्यास्त्र-प्रयोगेण ललितादेवी भण्डासुरं न्यवधीत्।

ललितानामनिरुक्तिः—

श्रीमच्छङ्कराचार्य्येणोक्तम्—"ललितं त्रिषु सुन्दरम्" अनुपम सौन्दर्य्यवतीत्यर्थः।

(२१) जयन्त्यां वामजङ्घा च जयन्ती क्रमदीश्वरः। (तन्त्रचूड़ामणौ) जयन्त्यामर्थाद् जयन्ती-राज्ये सती-देव्या वामजङ्घा न्यपतत्। पीठाधिष्ठात्री देवी जयन्ती, कामेश्वरो भैरवः। महापीठमिदं श्रीहट्टराज्यस्य ऊनविंशति-क्रोशमध्ये पर्व्वत-पाददेशे अवस्थितम्। एष प्रान्तो "जयन्तीया" नाम्ना तथा तदुत्तरस्थितपर्व्वत-श्रेणी जयन्तीया-पर्व्वत-नाम्ना प्रख्याते। प्राचीनकाले एषा भूमिः क्षुद्रराज्यत्वेन परिगतासीत्। तत्र हिन्दुनृपतिगणा राजत्वमकुर्व्वन्त। एतत्-पीठ-माहात्म्यमुक्तं बृहन्नीलतन्त्रे पञ्चम पटले—"जयन्तं विजयंतञ्च सर्व्वकल्याणदं प्रिये।" तन्त्रसारेऽपि कैलाशो दशलक्षेण जयन्त्यां पञ्चलक्षतः। कैलाशे दश-लक्ष-मन्त्र जपे सिद्धिः, जयन्ती-पीठे पञ्चलक्षमन्त्रजपे सिद्धिर्भवेत्।

"जयन्ती-पीठस्य प्रकाशः" कोचराजविश्वसिंहेन यदा कामाख्या महापीठमाविष्कृतम् (षोड़शशताब्द्यां) तत्समकालमेव जयन्ती-महापीठं जयन्ती-राजबरगोहाञ्ञिकर्त्तृकमलौकिक-घटना-दर्शणेनाविष्कृतमभूत्। एकदा पर्व्वत-पाद-देशीयारण्य-मध्ये गोपाल बालकाः प्रस्तरखण्डसमीपे नाना-रूप-खेलया क्रीड़न्ति स्म। क्रीड़तां तेषां मध्ये एको बालकः पूजकब्राह्मणोऽभूत् प्रस्तर-खण्डञ्च कालीं कृत्वा सर्वे बालकास्तां पूजयन्ति। अरण्यमध्यतो नाना फल-मूलादीनि संगृह्य हृष्टचित्ता अभवन्। एको बालको घातको भूत्वा, सुदीर्घविरणपत्रमेकं खड्गरूपेणाकल्पयत्। ततो ब्राह्मणरूपी बालको भक्ति-भरेण तत्प्रस्तरखण्डं कालीत्वेन विभाव्य, फलपुष्पनैवेद्यादिभिः सम्पूज्य, छागरूपिबालकस्य बलिदानार्थमानयनायादिदेश।

अनन्तरं तं बालकं छागबलित्वेन उत्सर्गीकृत्य, कृत्रिमकाष्ठखण्डोपरि तं पातयित्वा, घातकबालक आगत्य यदा विरणपत्रखड्गेन तं मारयति, तदा तन्मस्तकं छिन्नमभवत्। एवं रक्तस्रोतसा तत्स्थानं प्लावितमभूत्। तदद्भुतं दृष्ट्वा सर्व्वे बालका ग्रामं गत्वा, ग्राम्यजनेभ्यः सर्व्वं निवेदितवन्तः। तज्ज्ञापन-

मात्रेणैत्र सर्व्वे ग्राम्यजना आगत्य तत्स्थानं जनताकीर्णं कृतवन्तः। अयं संवादः दैवात् जयन्तीराज "बरगोहाञ्जि" देवस्य श्रुतिगोचरोऽभवत्। तदाकर्ण्य नितान्त-कौतुकाविष्टः स्वीय-गुरुदेवेन सह तत्रागत्य विस्मयान्वितोऽभवत्। जयन्तीराजस्य गुरुदेवो महातान्त्रिकः सिद्ध-पुरुष आसीत्। स च ध्यानयोगेन ज्ञातवान् या सतीदेव्या वामजङ्घा सा एत्रात्र पतित्वा प्रस्तरतां गता। अस्य प्रस्तरमयमहापीठस्याधिष्ठात्री जयन्ती देवीति। स च गुरोराज्ञया तत्र मन्दिरादिकं निर्म्माय देव्या पूजा-सेवाया विधानमकरोत्। तदवधि वामजङ्घापीठं स्वयं प्रकाशितमभूत्।

(२२) भुवनेशी सिद्धिरूपा किरीटस्था किरीटतः।
देवता विमला नाम्नी सम्वर्त्तो भैरवस्तथा॥

किरीटदेशे (मुर्शिदाबाद-प्रदेशान्तर्गत किरीटकोनाग्रामे) देव्य मस्तकस्थितं मुकुटं न्यपतत्। सिद्धिरूपिणी भुवनेश्वरी तत्र "विमला" नाम्ना पीठाधिष्ठात्री देवी, भैरवः सम्वर्त्तकः।

(२३) वाराणस्यां विशालाक्षी देवता काल-भैरवः।
मणिकर्णीति विख्याता कुण्डलञ्च मम च्युतम्॥



वाराणस्यां देव्याः कर्णतो मणिमय-कुण्डल-पतनात् पीठस्थानं मणिकर्णी मणिकर्णिका वा कथ्यते। तत्र देवी विशालाक्षी भैरवः काल भैरवः। सर्व्वतीर्थमय-वाराणसीधामनि मणिकर्णिका श्रेष्ठतीर्थं, सर्व्वसम्प्रदाय-मिलनकेन्द्रम्।

### विशालाक्षीदेव्या ध्यान-स्वरूप-रहस्यम्

**तन्त्रसारे**— ध्यायेद्देवीं विशालाक्षीं तप्तजाम्बुनदप्रभाम्।
द्विभुजामम्बिकां चण्डीं खड्गखेटक-धारिणीम्॥
नानालङ्कार-सुभगां रक्ताम्बर-धरां शुभाम्।
सदा षोड़शवर्षीयां प्रसन्नास्यां त्रिलोचनाम्॥
मुण्डमालावलीरम्यां पीनोन्नतपयोधराम्।
शिवोपरि महादेवीं जटामुकुटमण्डिताम्॥
शत्रुभयक्षयकरीं देवीं साधकाभीष्टदायिनीम्।
सर्व्व-सौभाग्यजननीं महासम्पत्प्रदां स्मरेत्॥

विशालाक्षी देवी तप्तकाञ्चनवत् प्रभाविशिष्टा, सा जगज्जननी चण्डी, विशालाक्षी देवी भुजद्वये खड्ग-खेटकौ धारयति। देवी नानालङ्कारैर्विभूषिता, रक्त-वस्त्र परिधाना, सर्व्वदा षोड़षवर्षीया युवतीवत्, सुरम्या, प्रसन्नवदना, त्रिनयना च। गलदेशे मुण्डमालाधारिणी, पीनोन्नतस्तनी, महादेवी शवरूप-शिवोपरि अवस्थिता, जटा-मुकुटमण्डिता। देवी साधकस्य साधना-प्रतिबन्धक-शत्रून् विनाश्याभीष्टवरं ददाति, सा सर्व्वसौभाग्य-जननी तथा महासम्पत्-प्रदायिनीत्येवं देवीं ध्यायेत्। ओँ ह्रीं विशालाक्ष्यै नम इत्यष्टाक्षर-मन्त्रेण सा पूजितव्या। "कालभैरवः"-मणिकर्णिका महापीठस्य अधिष्ठातृभैरवस्य नाम कालभैरवः। विश्वेश्वर-मन्दिरस्य उत्तरेण न्यूनाधिकं अर्द्ध-क्रोशदूरे काल-भैरवस्य मन्दिरमवस्थितम्। वर्त्तमान कालभैरवस्य मूर्त्तिः प्रस्तरनिर्म्मित-कृष्णाभ-घोरनीलवर्णाचक्षुर्द्वयं रौप्यमयं, तस्य पार्श्वे वाहनभूता कुक्कुरमूर्त्ति-रवस्थिता। एषो देवो वाराणस्याः रक्षक-स्वरूपः, काशीवासिनां रक्षणावेक्षणे तेषां पाप-पुण्य-विचारञ्च करोति। यात्रिजनाः विघ्नविनाशार्थं कालभैरवं पूजयन्ति।

मणिकर्णिका-माहात्म्यं सौर-पुराणे—

नास्ति गङ्गासमं तीर्थं वाराणस्यां विशेषतः।
तत्र मणिकर्णिकाख्यं तीर्थं विश्वेश्वरप्रियम्॥(४।८)

गङ्गा सर्वत्रैव श्रेष्ठं तीर्थम्, विशेषतो वाराणस्यां गङ्गासमं तीर्थं नास्ति, तत्रापि च मणिकर्णिकानामकं तीर्थमेव विश्वेश्वरस्यातिप्रियम्। उक्तञ्च-श्रीमता शङ्कराचार्येण मणिकर्णिका-स्तवे—

गङ्गातीरमनुत्तमं हि सकलं तत्रापि काश्युत्तमा।
तस्यां सा मणिकर्णिकोत्तमतमा यत्रेश्वरो मुक्तिदः॥
देवानामपि दुर्ल्लभं स्थलमिदं पापौघनाशक्षमं
पूर्व्वोपार्ज्जित-पुण्यपुञ्जगमकं पुण्यैर्ज्जनैः प्राप्यते।

गङ्गातीरं सर्व्वोपरि उत्तमं स्थानं, तदपेक्षयापि काशीक्षेत्रमुत्तमतरं तत्रापि च मणिकर्णिका उत्तमोत्तमा, यतस्तत्र प्राणत्यागात् स्वयमीश्वरस्तं जीवं मुक्ति ददाति। देवदुर्ल्लभं स्थानमिदं, सर्व्वपापविनाशक्षमं पूर्व्व-पूर्व्व-जन्मार्ज्जितपुण्यबलेनैव जीवस्तत्रगमने समर्थो भवेत्। यस्तावदतिपुण्यात्मा स एव तल्लभते।

विशालाक्षी मणिकर्णिका महापीठाधिष्ठात्री देवी। काशीखण्डे सप्ततितमाध्याये विशालाक्षीदेव्या विवरणं पूजाविधिश्च वर्त्तते। स्कन्दोऽगस्त्यमुनिरप्यवदत्, वाराणसीक्षेत्रस्य परमेष्टदात्री विशलाक्षीदेवी, गङ्गायां विशालतीर्थं निर्म्मायावतिष्ठते। तद्विशालतीर्थे स्नात्वा, विशालाक्षीं प्रणय, इहपरकालसुखप्रदं विपुलमैश्वर्य्यं लभते। हे मुने! विशालाक्षीमहापीठे, दान-जप-होम-स्तवादियत्किञ्चित् क्रियते तस्य फलं मोक्षरूपेण परिगण्यते, नात्र कोऽपि सन्देहः। विशालाक्षीदेव्या निकटवर्त्तिनी गङ्गैव, विशाल-गङ्गा, विशालतीर्थम्।

(२४) कन्याश्रमे च पृष्ठं मे निमिषो भैरवस्तथा।
सर्व्वाणी देवता तत्र (तन्त्र-चूड़ामणौ)

कन्याश्रमे छाया-सती-देव्याः पृष्ठदेशो न्यपतत्। तत्र भैरवो निमिषः सर्व्वाणी देवी। रत्नमाला-ग्रन्थागारधृतः पाठो यथा—

कन्याश्रमे च पृष्ठं मे पतितञ्च महेश्वर।
निमिषो भैरवस्तत्र सर्व्वाणी देवता तथा।।

कन्याश्रम-महापीठस्यावस्थिति-स्थान-निर्णयो न· प्राप्यते। महाभारतस्य वन-पर्व्वणि ८३ अध्याये कन्याश्रमतीर्थोल्लेखो दृश्यते यथा—

ततः कन्याश्रमं गच्छेन्नियतो ब्रह्मचर्य्यवान्।
त्रिरात्रोपोषितो राजन्नुपवासपरायणः।।
लभेत् कन्याशतं दिव्यं स्वर्गलोकञ्च गच्छति।।(८३।१८६)

हे राजन! तत्परतो नियमपूर्व्वकं ब्रह्मचर्य्यावलम्बनेन कन्याश्रमं गच्छेत्। तत्र त्रिरात्र-व्रतोपवासेन शत-संख्यक-दिव्यकन्याः स्वर्गलोकञ्च प्राप्स्यसि। एतत् कन्याश्रम-तीर्थस्थानं कुरुक्षेत्रान्तर्भुक्तमिति।

महामहोपाध्याय-श्रीमत्कृष्णानन्द-भट्टाचार्य-आगमवागीशकृततन्त्रसारे येषु स्थानेषु तान्त्रिक-दीक्षा निषिद्धा तेषामालोचनाप्रसङ्गे उक्तम्—

गङ्गायां भास्करक्षेत्रे विरजे चन्द्रपर्व्वते।
चट्टले च मतङ्गे च तथा कन्याश्रमेषु च।।
न गृह्णीयात्ततो दीक्षां तीर्थेष्वेतेषु पार्व्वति।।

गङ्गायां भास्करक्षेत्रे (कोणार्के) बिरजाक्षेत्रे, चन्द्रशेखरपर्व्वते, चट्टग्रामे, मतङ्गदेशे तथा कन्याश्रमे, हे पार्व्वति! एतेषु तीर्थेषु दीक्षां न गृह्णीयात्।

तीर्थसमूहानां परिचय-ज्ञापकटिप्पन्यां भास्करक्षेत्रं दक्षिणदेशे कोणार्क इति नाम्ना प्रसिद्धम्। बिरजे बिरजाक्षेत्रे चन्द्रपर्व्वते, चन्द्रशेखर-पर्व्वते, चट्टले चाटगाँ इति ख्याते, मतङ्गे मतङ्गदेशे, कन्याश्रमश्चन्द्रशेखरगिरि-समीप-वर्त्ति-कुमार्य्याश्रमत्वेन कामरूपे प्रसिद्धः। अत्र च कन्याश्रमस्य तत् स्थानं निर्द्दिशितं ततश्चन्द्रशेखर-पर्व्वत-समीपवर्त्ति "कुमारी कुण्ड" मेवानुमीयते। "कुमारीकुण्डम्"—सीताकुण्डतः सार्द्धचतुःक्रोश-दक्षिणेन कुमिरा-"रेलष्टेशन"-समीपे पर्व्वत-सानुदेशे निर्ज्जन-कानन-मध्ये कुमारीकुण्डमवस्थितम्। वाराही तन्त्रे सप्तम-पटले चन्द्रनाथ-दर्शनप्रकरणे उक्तम्—

पञ्चक्रोशाद् बहिर्ज्ञेयं कुमारी कुण्डमुत्तमम्।
ततो दक्षपदा गच्छेत् संपश्येत् कर्क्करीं नदीम्॥
यस्य पार्श्वे स्थितः सर्व्वे भैरवः शिवरूपिणः।
क्षेत्रपालः क्षेत्रहन्ता शार्द्दूलो वनजन्तवः॥
भैरवाणां प्रभावेण तीर्थानामभयं भवेत्।
नोभयं न च दौर्भाग्यं न व्याधिर्नैव सङ्कटम्॥
पञ्चक्रोशस्थितान् देवान् संस्पृशेन्निरुपद्रवम्॥
(७।३५।३८)

चन्द्रनाथतीर्थस्य पञ्चक्रोशेभ्यो बहिरुत्तमं कुमारीकुण्डमवस्थितम्। तस्मात् कियद्दक्षिणे "कर्क्करी" नदी प्रवाहिता। कुमारी-कुण्डस्य चतुःपार्श्वेषु भैरवगणा अवतिष्ठन्ते। क्षेत्रपाल-क्षेत्रहन्तृ-शार्द्दूल-प्रभृतिजन्तवश्च विद्यन्ते। वटुको मतिदक्षः क्षेत्रनायको, नन्दीश्वराश्च तत्र विराजन्ते। तत्र गत्वा यथा-शक्ति विस्तरव्ययेन तेषां पूजा कर्त्तव्या। यतस्तेषां भैरवादीनां प्रभाववशतो जनानां तीर्थभ्रमणं सफलं भवेत्। तेषां कृपया कस्यापि कदापि भीतिप्राप्ति-दौर्भाग्य-प्राप्तिः पीड़ा तथान्या च विपद् न भवति। तस्मिन् पञ्चक्रोश-व्यापि-स्थानावस्थितोपद्रवनाशकान् देवान् पूजयेत्।

यद्यपि बाराही-तन्त्रोक्तवर्णनातः कुमारीकुण्डं सतीदेहाङ्ग-पात-जनित-विशेष-देवी-पीठं तथा भैरवाधिष्ठितमहापीठमिति प्रमाणं न लभ्यते, तथापि

कुमारीकुण्डस्य महापीठत्वसम्बन्धे निश्चितप्रमाणं नास्ति। एतदेकं प्राचीनं प्रसिद्धतीर्थस्थानमित्यत्र न सन्देहः।

इति कामरूपान्तर्व्वर्त्ति-श्रीमदुग्रतारा-महापीठाध्यक्ष-
श्रीचक्रेश्वरभट्टाचार्य-सङ्कलिते शाक्त-दर्शने
नवमः परिच्छेदः।

---



# दशमः परिच्छेदः

## कुरुक्षेत्रपीठरहस्यम

(२४) कुरुक्षेत्रे च गुल्फाः।
स्थाणु नाम्नी च सावित्री अश्वनाथस्तु भैरवः।।
(तन्त्रचूड़ामणौ)

अपरञ्च— गुल्फं मे च कुरुक्षेत्रे सावित्रीदेवता तथा।
अश्वनाथो भैरवञ्च तत्र सिद्धिर्न संशयः।।

कुरुक्षेत्र—ष्टेशनतः क्रोशैक-पश्चिमेन द्वैपायनह्रदतीरे पीठस्थानम्। कुरुक्षेत्रमिति प्राचीनतमतीर्थस्थानम्। वेदस्य ब्राह्मणभागे कुरुक्षेत्रतीर्थस्य नाम दृश्यते। शतपथब्राह्मणमतेनात्र देवा यज्ञम् अकुर्व्वन्त।

"कुरुक्षेत्रेऽमी देवा यज्ञं तन्वते" (४।१।५।२३)।

जावालोपनिषदि—

"अविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्व्वेषां भूतानां ब्रह्मसदनम्"।

महाभारते उक्तं—

कुरुनाम राजर्षिः पुरा क्षेत्रमिदमकर्षयत्। तेनास्य नाम कुरुक्षेत्रम्।

पुरा च राजर्षिवरेण धीमता
वहूनि वर्षाण्यमितेन तेजसा।
प्रकृष्टमेतत् कुरुणा महात्मना
ततः कुरुक्षेत्रमिति च पप्रथे।। (शैलपव ५३।२)

महाभारतस्य नानास्थानेषु कुरुक्षेत्रमाहात्म्यं कीर्त्यते।

वनयात्रा प्रकरणे उक्तम्—

ततो गच्छेत राजेन्द्र कुरुक्षेत्रमभिष्टुतम् ।
पापेभ्यो यत्र मुच्यन्ते दर्शनात् सवजन्तवः ।।
कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ।
य एवं सततं ब्रूयात् सोऽपि पापैर्विमुच्यते ।।
पांशवोऽपि कुरुक्षेत्रे वायुना समुदीरिताः ।
अपि दुष्कृतकर्माणं नयन्ति परमां गतिम् ।।
दक्षिणेन सरस्वत्या दृषद्वत्युत्तरेण च ।
ये वसन्ति कुरुक्षेत्रे ते वसन्ति त्रिविष्टपे ।।
(वनपर्व ५३।१।४)

हे राजश्रेष्ठ! ततः सर्वभावेन प्रशंसितं कुरुक्षेत्रं गच्छेत्, यद्दर्शनमात्रेणैव सर्वप्राणिनः पापान्मुच्यते। अहं कुरुक्षेत्रं गमिष्यामि, कुरुक्षेत्रे वसामीत्येवं सर्वदा ये वदन्ति, तेऽपि सर्वपापान्मुच्यन्ते। वायुसंचालितैः कुरुक्षेत्रपांशुभिरपि संपृक्तगात्रा पापिनोऽप्युत्तमां गतिं लभन्ते। सरस्वतीनद्या दक्षिणेन दृषद्वतीनद्या उत्तरेण कुरुक्षेत्रनामकस्थाने ये वसन्ति ते खलु स्वर्गे एव निवसन्ति।

कुरुक्षेत्रपरिमाणं—द्वादशयोजनम.



"धर्मक्षेत्रं कुरुक्षेत्रं द्वादशयोजनावधि" (हेमचन्द्रः ४।१६)

माधवाचार्यविरचित'कुरुक्षेत्रमाहात्म्य'मनेन त्रिंशत्-पञ्च-षष्टिसंख्यकानि तीर्थानि वर्त्तन्ते। महाभारतस्य वनपर्वणि त्र्यशीतितमे अध्याये, तथा शैलपर्वणः त्रिचत्वारिंशे अध्याये कुरुक्षेत्रस्य वहुतीर्थनामानि सन्ति।

द्वैपायनह्रदस्य पश्चिमतीरे पीठेश्वर्याः सावित्रीदेव्याः सुबृहन्मन्दिरमस्ति, एवमुत्तरतीरे अश्वनाथभैरवस्य मन्दिरं विराजते। द्वैपायनह्रदस्य मध्यस्थले एकस्य द्वीपस्यावस्थितित्वेनायं द्वैपायनह्रदः कथ्यते। द्वैपायनह्रदस्य पश्चिमांशे चन्द्रकूपनामकं परम-पवित्रमेकं कुण्डमस्ति, चन्द्रग्रहणकाले कुण्डजल-स्पर्शनार्थं वहवो यात्रिजनाः समागच्छन्ति। एका किम्वदन्त्यत्रास्ति पुरशुरामः पृथिवी-मेकविंशतिवारैर्निःक्षत्रियां कृत्वा ह्रदसलिले पितृगणानां तर्पणमकरोत्। तेनायं "रामह्रद" इति कथ्यते।

पुरा विरिञ्चिरत्र ह्रदे स्थित्वा तपस्यामकरोत् तस्मादयं "ब्रह्मसर" इति नाम्ना प्रसिद्धः।

कैश्चिददं दधीचितीर्थमिति उच्यते। दधीचिमुनिरत्र देवानां हितार्थं स्वदेहमदात्। तदस्थ्ना वज्रं निर्माय इन्द्रो वृत्रासुरमवधीत्।

## सावित्रीनामनिरुक्तिः

कुरुक्षेत्रमहापीठाधिष्ठात्री देवी सावित्री। शास्त्रे सावित्रीनाम-निरुक्ति-र्वर्णिता। **देवीपुराणे**—(३०।३०)

त्रिदशैरर्चिता देवी देवयज्ञेषु पूजिता।
भाव-शुद्धस्वरूपा तु सावित्री तेन सा स्मृता।।

निखिलामरगणैर्यज्ञे सा भावशुद्धा देवी पूजिता, तेन सा "सावित्री"ति कीर्त्यते।

तथा **अग्निपुराणे**—(२२६।२)

गायञ्छिशिष्यान् यतस्त्रायेद् भार्य्यां प्राणांस्तथैव च।
ततः स्मृतेयं गायत्री सावित्रीयं ततो यतः।
प्रकाशनात् सा सवितुर्व्वाग्रूपत्वात् सरस्वती।।

गायत्रीं गायन् गुरुर्यतः शिष्यं भार्य्यां प्राणांञ्च, सर्वान् परित्रायते तेन सा नाम्ना 'गायत्री' एवं सा यतः सवितरं प्रकाशयति, तेन सा "सावित्री", यतः सा वागरूपिणी तेन तस्या अपरं नाम सरस्वतीति। स्कन्दपुराणस्य आवन्ते रेवाखण्डे (२००।३)

"सावित्र-तेजः सदृशो सावित्री तेन चोच्यते"।

अस्यास्तेजः सावित्रमर्थात् सूर्यसदृशं, तेनेयं 'सावित्री'ति कथ्यते।

**अग्निपुराणे** ब्राह्मण-प्रशंसाध्याये—

सर्वलोकप्रसवनात् सविता स तु कीर्त्यते।
यतस्तद्देवता देवी सावित्रीत्युच्यते ततः।
वेद-प्रसवनात् सापि सावित्री प्रोच्यते बुधैः।।

योहि सर्वलोकान् प्रसूते, स सविता, अर्थाद् यतः सर्वलोकाः जायन्ते, स सविता—तस्य सवितुरधिदेवीत्येवं सा सावित्री। अथवा यया

निखिलवेदाः प्रसूयन्ते सा सवित्रीति सुधीभिरभिहिता भवेत्। देवी-भागवते (६-३२)

सवितुश्चाधिदेवी या मन्त्राधिष्ठात्री देवता।
सावित्री ह्यपि देवानां सावित्री तेन कीर्त्तिता।।

या खलु सूर्यमण्डलात्मक-सवितुरधिदेवी या गायत्री मन्त्रस्याधिष्ठात्री देवता, तथा च या वेदसमूहप्रसवित्री सा सावित्रीति कीर्त्तिता भवेत्।

"सविता सावित्री" सामवेदान्तर्गतसावित्र्युपनिषदि शिव-शक्ति-पुरुष-प्रकृतिस्वरूपं वर्णितम्। टीकाकारः श्री उपनिषद् ब्रह्मयोगी उक्तवान्— "सविता प्राणिनः सूते" सोऽयं सविता "परमेश्वरः परमात्मा। यया विद्यया सविता प्रकाश्यते सेयं सावित्री"। सवितृ-सावित्रीस्वरूपमेवंरूपेण विश्लेषितम्।

(१) कः सविता का सावित्री? अग्निरेव सविता, पृथिवी सावित्री, स यत्राग्निस्तत् पृथिवी, यत्र वा पृथिवी तत्राग्निस्ते द्वे योनिस्तदेकं मिथुनम्।

(२) कः सविता, का सावित्री? वरुण एव सविता आपः सावित्री, स यत्र वरुणस्तदापो यत्र वा आपस्तद् वरुणस्ते द्वे योनिस्तदेकं मिथुनम्।



(३) कः सविता, का सावित्री? वायुरेव सविताकाशः सावित्री, स यत्र वायु स्तदाकाशो यत्र वा आकाशस्तद् वायुस्ते द्वे योनिस्तदेकं मिथुन।म्

(४) कः सविता का सावित्री? यज्ञ एव सविता छन्दांसि सावित्री, स यत्र यज्ञस्तच्छन्दांसि, यत्र वा छन्दांसि स यज्ञस्ते द्वे योनिस्तदेकं मिथुनम्।

(५) कः सविता, का सावित्री? स्तनयित्नुरेव सविता विद्युत् सावित्री स यत्र स्तनयित्नुस्तद् विद्युत्, यत्र वा विद्युत् तत्र स्तनयित्नुस्ते द्वे योनिस्तदेकं मिथुनम्।

(६) कः सविता, का सावित्री? आदित्य एव सविता द्यौः सावित्री, स यत्रादित्यस्तद् द्यौः यत्र वा द्यौस्तदातित्यस्ते द्वे योनिस्तदेकं मिथुनम्।

(७) कः सविता, का सावित्री,? चन्द्र एव नक्षत्राणि सावित्री, स यत्र चन्द्र स्तन्नक्षत्राणि, यत्र नक्षत्राणि स चन्द्रमास्ते द्वे योनिस्तदेकं मिथुनम्।

(८) कः सविता, का सावित्री? मन एव सविता वाक् सावित्री, स यत्र मनस्तद् वाक् यत्र वा वाक् तन्मनस्ते द्वे योनिस्तदेकं मिथुनम्।

(९) कः सविता, का सावित्री? पुरुष एव सविता स्त्री सावित्री स यत्र पुरुषः तत् स्त्री, यत्र वा स्त्री तत् पुरुषस्ते द्वे योनिस्तदेकं मिथुनम्।

पूर्व्वोक्त-नवविध-दृष्टान्तैः सवित्र्योरर्थात् शिव-शक्त्योः पुरुषप्रकृत्योरुभयोरेव सम्मेलनेन विश्वप्रपञ्चसृष्टिरिति परिव्यक्तो भवति।

"सावित्री-पादत्रयम्" गायत्री-मन्त्रस्वरुपिणी सावित्री पादत्रयविशिष्टा। **गोपथब्राह्मणे** उक्तम्—

"तत् सवितुर्वरेण्यम्" इति सावित्र्याः प्रथमः पादः।
"भर्गो देवस्य धीमहि" इति सावित्र्याः द्वितीयपादः।
"धियो योनः प्रचोदयात्" इति सावित्र्याः तृतीयपादः।

देवीभागवत टीकाकारशैवनीलकण्ठेनोक्तम्—(टीका ६।२६।२)

"अनया च श्रुत्या सावित्री पादत्रयाद् वेदत्रयलोकत्रयाग्न्यादितेजस्त्रयपूर्वकं सर्वब्रह्माण्डसृष्टिः सावित्रीत एवोक्ता"। तथा सर्व्ववेदेषु पुराणेषु च सावित्र्युपनिषदि च एतद् रुपेण वर्णितम्—

(१०) तस्या एव प्रथमपादो भूः "स्तत् सवितुर्वरेण्यम्" इति अग्निर्वै वरेण्यम्, आपो वरेण्यं, चन्द्रमा वरेण्यम्।

(११) तस्या एव द्वितीयः पादो "भर्गमयभुवो भर्गोदेवस्य धीमहि" इत्यग्निर्वै भर्ग, आदित्यः भर्गश्चन्द्रमा वै भर्गः।

(१२) तस्या एष तृतीयः पादः "स्वर्धियो यो नः प्रचोदयात्" इति स्त्री चव पुरुश्च प्रजनयतः। एतत् सावित्री-मन्त्रविज्ञान-फलमुक्तम्-सावित्र्युपनिषदि

(१३) यो वा एतां सावित्रीमेवंरूपेण अर्थात् प्रोक्तद्वादशभावेन जानीते, स पुनर्मृत्युं जयति, मुक्ति लभते।

## सावित्रीमूर्त्तिरहस्यम्

**देवीभागवते**-- गणेशजननी दुर्गा राधालक्ष्मीः सरस्वती।
सावित्री च सृष्टि-विधौ प्रकृतिः पञ्चधास्मृता॥(९।१।१)

पराप्रकृतिः सृष्टि-समये-दुर्गा, लक्ष्मीः, सरस्वती, सावित्री, राधा चेति पञ्चमूर्त्तिभिराविर्भूता भवति।

सावित्री-स्वरूपमुक्तम्—

माता चतुर्णां वर्णानां वेदांगानाञ्च छन्दसाम्।
सन्ध्या वन्दनमन्त्राणां तन्त्राणाञ्च विचक्षणा।।
द्विजाति-जातिरूपा च जपरूपा तपस्विनी।
ब्रह्मण्यतेजोरूपा च सर्व्वसंस्काररूपिणी।।
पवित्ररूपा सावित्री गायत्री ब्रह्मणः प्रिया।
तीर्थानि यस्याः संस्पर्शं वाञ्चन्ति ह्यात्मशुद्धये।।
(९।१।३८-४०)

सावित्री देवी चतुर्वेद-वेदांग-छन्दः समूहानाञ्च मातृस्वरूपा। सा विचक्षणा देवी सन्ध्यावन्दनादि क्रियाणां तथा तन्त्रादीनाञ्च मातृरूपिणी। सा ब्राह्मणादीनां ब्राह्मणत्व-जाति-रूपिणी। जपरूपा तपस्विनी, सा ब्रह्मण्यतेजः, सर्वप्रकार-संस्कारस्वरूपा च। सा ब्रह्मणः प्रिया पवित्ररूपा सावित्री गायत्री च। तीर्थसमूहा अपि स्वात्मशुद्धयर्थं तस्याः स्पर्शमिच्छन्ति।



शुद्धस्फटिक-संकाशा शुद्धसत्त्वस्वरूपिणी।
परमानन्दरूपा च परमा च सनातनी।।
परब्रह्मस्वरूपा च गिर्वाणपददायिनी।
ब्रह्मतेजोमयी शक्तिस्तदधिष्ठात्री देवता।।
यत् पादरजसा पूतं जगत् सर्व्वं च नारद।
देवी चतुर्थी कथिता पञ्चमीं वर्णयामि ते।।(४१।४३)

सा शुद्धस्फटिकमणितुल्या शुद्धसत्त्वगुणस्वरूपिणी परमानन्दरूपिणी सर्व्वश्रेष्ठा सनातनी। सा परब्रह्मस्वरूपिणी मुक्तिपदप्रदायिनी सा ब्रह्मणस्तेजोमयी शक्तिर्ब्रह्मतेजोऽधिष्ठात्री देवता। नारायणोऽवदत्, हे नारद यस्याः पदरजस्पर्शेण जगत् सर्व्वं पवित्रमभूत, तस्याञ्चतुर्थ्याः सावित्रीदेव्याः माहात्म्यं वर्णितमधुना पञ्चमीप्रकृतिराधायाः स्वरूपं कथयिष्यामि।

सावित्र्युपासकसम्प्रदायाः—

देवीभागवते— ब्रह्मणा वेदजननी प्रथमे पूजिता मुने।
द्वितीये च देवगणैस्तत् पश्चाद् विदुषां गणैः।।

तदा चाश्वपतिर्भूपः पूजयामास भारते।
तत् पश्चात् पूजयामासुर्वर्णाश्चत्वार एव च।।
(९।२६।३-४)

नारायणोऽवदत् हे नारद! सा वेदमाता सावित्री देवी प्रथमं ब्रह्मणा पूजिता ततो देवगणैस्ततो जातिभिः सा पूजिताऽभवत्। अनन्तरं भारतवर्षे, महाराजोऽश्वपतिस्तामपूजयत्, ततो ब्राह्मणक्षत्रिय-वैश्य-शूद्राश्च चतुर्वर्णा तां पूजितवन्तः।

पुरा मद्रदेशे अश्वपतिर्महाराजो राजत्वमकरोत्

तस्य महिषी मालतीदेवी बन्ध्यासीत्। ततो वशिष्ठमुनेरादेशेन राज्ञी सावित्री देवीमाराधयामास। किन्तु सुदीर्घकालं यावद्देव्या दर्शनं कमपि प्रत्यादेशं वा अलब्ध्वा क्षुण्णहृदया प्रतिनिवृत्ताभवत्। ततो महाराजो महाराज्ञीं सान्त्वयित्वा स्वयं सावित्र्याराधनतत्परः पुष्करतीर्थ-मगात्। तत्र स्थित्वा संयतचित्तः शतवर्षाणि यावत् तपस्यामकरोत्तथापि तस्य राज्ञः सावित्रीदर्शनं नाभवत्, किन्तुप्रत्यादेशभूतामाकाशवाणीमश्रौषीत् "दशलक्षगायत्रीजपः क्रियतामि"ति। तत्काले महर्षिः पराशर आगत्य महाराजाश्वपतये गायत्रीजपविधिं सावित्रीव्रतविधिं सावित्रीध्यानं स्तवादि च कथयित्वा स्वीयाश्रममगात्। अस्य विस्मृतविवरणं देवीभागवतस्य नवमे स्कन्धे षड्विंशाध्याये उक्तम्। अनन्तरं नरपतिः सम्यग्विधानेनाराध्य देव्या दर्शनं लब्धवान्, देवीवरात् सावित्री सदृशीं कन्यां च प्राप्य, तस्या नाम सावित्रीमकरोत्। सतीशिरोमणिः सावित्री देवी केवलं पतिव्रात्यबलेन मृतस्वामिनं सत्यवन्तं यमहस्तादुद्धृत्य यमवरात् पितृकुलं भर्त्तृकुलञ्च उद्दधार, तत् सर्व्वं सर्व्वजनविदितमस्ति।

**वेदमातृसावित्रीस्वरूम्**

**देवीभागवते—**

तप्तकाञ्चनवर्णाभां ज्वलन्तीं ब्रह्मतेजसा।
ग्रीष्म-मध्याह्न-मार्त्तण्ड-सहस्रसंमितप्रभाम्।।
ईशद्धास्य-प्रसन्नास्यां रत्नभूषणभूषिताम्।
वह्नि-शुद्धांशुकाधानां भक्तानुग्रहविग्रहाम्।।

सुखदां मुक्तिदां शान्तां कान्ताञ्च जगतः विधेः।
सर्व्वसम्पत्स्वरूपाञ्च प्रदात्रीं सर्वसम्पदाम् ॥
वेदाधिष्ठातृदेवीञ्च वेदशास्त्रस्वरूपिणीम्।
वेद-बीजस्वरूपाञ्च भजे तां वेदमातरम् ॥
(९।२६।४९-५२)

मन्त्रः "श्रीँ ह्रीँ सावित्र्यै स्वाहा"।

सावित्रीदेवी तप्तकाञ्चनवर्णा, ब्रह्मतेजःप्रज्वलिता, तस्याः प्रभा ग्रीष्म-कालस्य मध्याह्नकालीन-सहस्र सूर्यसदृशी, मृदुमन्दहास्यवदना, सुप्रसन्ना रत्न-भूषण-भूषिता, वह्निशुद्धपट्ट वस्त्र-परिधाना भक्तानाम्. अनुग्रहाय विग्रहधारिणी, सुखमोक्षदायिनी, शान्तस्वरूपा, जगद्विधातुर्ब्रह्मणो भार्या, सर्वसम्पत्-स्वरूपिणी सर्वसम्पत्-प्रदायिनी च। सा वेदाधिष्ठात्री देवी, वेदशास्त्रस्वरूपिणी, वेदबीजप्रणवरूपिणी च। तां वेदमातरं सावित्रीं भजामहे।

देवी-भागवते उक्तं,—पुरा गोलोके स्वयं श्रीकृष्णो ब्रह्मणे सावित्रीमदात्। किन्तु सावित्री ब्रह्मणा सह ब्रह्मलोकं नागतवती। तदा ब्रह्मा श्रीकृष्णाय भक्तिपूर्वकं निम्नोक्तप्रकारेण वेदमातरमस्तौत्। महाराजाश्वपतिरपि, एतेन स्तवराजेण सावित्रीं स्तुत्वा तस्या दर्शनमिष्टसिद्धिञ्च अलभत।

ब्रह्मोवाच— सच्चिदानन्दरूपे त्वं मूलप्रकृतिरूपिणी।
हिरण्यगर्भरूपे त्वं प्रसन्ना भव सुन्दरि॥
तेजःस्वरूपे परमपरमानन्दरूपिणी।
द्विजातीनां जातिरूपा प्रसन्ना भव सुन्दरि॥
नित्ये नित्यप्रिये देवि नित्यानन्दस्वरूपिणी।
सर्वमंगलरूपे च प्रसन्ना भव सुन्दरि॥

ब्रह्माऽवदत्—हे सच्चिदानन्दरूपिणी त्वं मूलप्रकृतिस्वरूपा तथा हिरण्य-गर्भरूपिणी। हे सुन्दरि त्वं प्रसन्ना भव। त्वं तेजःस्वरूपा, सर्वेषामुत्कृष्टा त्वं परमानन्ददायिनी द्विजातीनां जातिस्वरूपा, हे सुन्दरि त्वं प्रसन्ना भव हे देवि त्वं नित्या नित्यप्रिया नित्यानन्दस्वरूपिणी, तथा सर्वमङ्गलरूपा हे सुन्दरि त्वं प्रसन्ना भव।

सर्वस्वरूपे विप्राणां मन्त्रसारे परात्परे।
सुखदे मोक्षदे देवि प्रसन्ना भव सुन्दरि॥

विप्रपापेन्धदाहाय ज्वलदग्निशिखोपमे।
ब्रह्मतेजःप्रदे देवि प्रसन्ना भव सुन्दरि॥
कायेन मनसा वाचा यत् पापं कुरुते नरः।
तत्तत्-स्मरणमात्रेण भस्मीभूतं भविष्यति॥
(६।२६।७९-८४)

देवि त्वं सर्वस्वरूपा विप्राणां मन्त्रस्वरूपिणी, त्वं हि सर्वश्रेष्ठा, त्वं सुखदायिनी, मोक्षदायिनी हे सुन्दरि प्रसन्ना भव हे देवि त्वं ब्राह्मणानां पापस्वरूपेन्धनदाहार्थं साक्षात् प्रज्ज्वलिताग्निशिखास्वरूपा; त्वं ब्रह्मतेजः-प्रदायिनी, हे सुन्दरि त्वं प्रसन्ना भव। जनः कायेन मनसा वाक्येन च यत् यत् पापं करुते तत् सर्वं तव स्मरणमात्रेणैव भस्मसाद् भवति।

स्तवराजमिदं पुण्यं सन्ध्यां कृत्वा तु यः पठेत्।
पाठे चतुर्णां वेदानां यत् फलं लभते च तत्॥(२७)

यः सन्ध्योपासनानन्तरं परमपवित्रस्तवराजमिदं पठति स चतुर्वेदपाठफलं लभते।

(२६) मणिबन्धे च गायत्री सर्वानन्दस्तु भैरवः (तन्त्रचूड़ामणौ)

मणिबन्धे देव्या मणेः पतनात् तत् गायत्रीमहापीठं पीठाधिष्ठात्री गायत्री देवी, सर्वानन्दो भैरवः। गायत्री महापीठं पुष्करतीर्थे वर्त्तते।

पुष्करतीर्थम्, आजमीरात् क्रोशत्रयमध्येऽवस्थितम्। तत्र परमपवित्र-सावित्रीगिरेरुच्चशिखरे सावित्री-मन्दिरं विराजते। देवी-भागवते उक्तं-महाराजोऽश्वपतिः पुष्करतीर्थे शतवर्षाणि यावत् 'गायत्री'-मन्त्रमुपास्य कन्यारत्नमलभत। ब्रह्मणः यज्ञभूमौ अन्तस्थानात् तन्मन्दिरमेव सर्वप्रधानम् अन्यानि देव-देवीमन्दिराणि च विराजन्ते। महाभारते उक्तं, मनसा पुष्करतीर्थ-स्नान-कामिनामपि पापानि दूरं यान्ति।

पुष्करह्लदस्य परिधिः क्रोश-परिमितः। तिसृषु दिक्षु तत् पर्वतमालया परिवेष्टितम्। पुष्करतीर्थस्य प्राकृतिकसौन्दार्यमतीव मनोहरम्। पुष्करतीर्थो गायत्रीसाधनायाः सर्वोत्कृष्टस्थानम्। पद्मपुराणे स्वयं वेदमाता गायत्र्ययवदत्।

विशेषे पुष्करे स्नात्वा जपेन्मां वेदमातरम्।
अष्टाक्षरा स्थिता चाहं जगद्व्याप्तं मयान्विदम्॥

विशेषतः पुष्करतीर्थे स्नात्वा, वेदमातरं मां गायत्रीमन्त्ररूपिणीं जपेत्। त्रिपादविशिष्टस्य गायत्रीमन्त्रस्य प्रतिपादमहमष्टाक्षररूपा स्थिता मयेदं जगद्व्याप्तम्।

### गायत्री-नाम-निरुक्तिः

शास्त्रे गायत्री-नाम्नः विभिन्नप्रकारा निरुक्तिर्दृश्यते। बृहदारण्यकोपनिषदि—या 'गयम्' अर्थात् प्राणादिकं त्रायते सा गायत्री। (गय स्वार्थेऽञ गाय—गायत्रै धातु, स्त्रीलिङ्गे ङीप्)।

(१) "सा हैषा गायंस्तत्रे, प्राणा वै गयास्तत् प्राणंस्तत्रे, तद् यत् गायंस्तत्रे तस्माद् गायत्री नाम, सा यामेवामू सावित्री मन्वा है सैव सा स यस्मा अन्वाहतस्य प्राणांस्त्रायते।"

"गयान् प्राणान् वागादीनि च इन्द्रियाणि त्रायते नित्यं सत्याभिमुखीकृत्य ज्ञानदीप्तान् करोतीति"। अर्थात् प्राणानेवं वागादि इन्द्रियसमूहं नित्यं सत्याभिमुखीकृत्य ज्ञानालोकेनोद्भासितानि करोतीत्यऽस्या नाम गायत्री"ति।



(२) छान्दोग्योपनिषदि—गै धातु (गानं) त्रै धातु (त्राणं) ततः गायत्री इति निष्पन्नम्।

"गायत्री वा इदं सर्वं भूतं यदिदं किञ्च वाग् वै गायत्री वाग् वा इदं सर्वं भूतं गायति च त्रायते च"। (३।१२।१)

सर्वमिदं भूतं-यत् किञ्चिद् विद्यते, तत् सर्वमेव गायत्री पदवाच्यम्। वाक् गायत्री, यतो वाक्येनैव सर्वं भूतजातं वर्ण्यते त्रायते च। गायत्र्या कारणभूतया वाक्शक्त्या समस्तभूतजातमभिहितं प्रकाशितश्च। तथैवाभयवाणीरूपया सर्वं परित्रायते च। अतएव निखिलभुवनमध्ये वाक्शक्तिरेव प्रधानेति प्रसिद्धम्।

(३) उक्तञ्च भरद्वाजस्मृतौ—

"गायत्रं त्रायते यस्माद् गायत्री तेन कथ्यते।"

य इमां गायति जपति, तमुद्धरतीति तेनेयं गायत्रीनाम्नाभिहिता। तदुक्तं गायत्र्यावाहने—

ॐ आयाहि वरदे देवि जपे मे सन्निधौ भव।
गायत्रं त्रायते यस्माद् गायत्री त्वं ततः स्मृता ॥

हे वरदायिनी देवि! त्वमागत्यास्माकं जपकर्मणि संस्थिता भव। यतस्त्वन्मन्त्रगानकारिणं जपकारिणं रक्षसि, तेन त्वं गायत्री नाम्नाभिहिता भवेः।

शाम्बपुराणे अस्या हेतुवादो दृश्यते-यथा--

गायत्र्या वर्णमेकैकं साक्षाद् देवस्वरूपकम्।
तस्मादुच्चारणात्तस्य त्राणमेव भविष्यति ॥

गायत्र्या एकैको वर्ण एव साक्षाद् एकैकदेवस्वरूपम्। तस्मात् तदुच्चारणेन गायकमुद्धरति।

(४) देवीपुराणे--"गायनाद् गमनाद् वापि गायत्री त्रिदशार्च्चिता" देवानामाराध्यां परमेश्वरीं गायत्रीं सर्वे गायन्ति, (३७।५४) अथवा सा सर्वत्र गमणशीला, तेनेयं "गायत्री" कथ्यते।

(५) शास्त्रान्तरे च--"गा" चेति सर्वगा शक्ति "र्यत्री" तत्र नियमिका "गा" शब्देन सर्वगामिनी, तथा "यत्री" शब्देन सर्वेषां नियमकारिणी। परमेश्वरस्य या सर्वव्यापिनी शक्तिः सर्वनियन्त्री च सा "गायत्री" नाम्नाभिहिता।

(६) तन्त्रशास्त्रे गायत्री-नाम्नोविवृति-प्रसङ्गादस्यास्त्राणकर्त्तृत्वं विज्ञापितम्।

मूलादि ब्रह्मरन्ध्रान्तं गीयते मननाद् यतः।
मननात् त्राति षट् चक्रं गायत्री तेन कीर्त्तिता ॥

मूलाधारतो ब्रह्मरन्ध्रपर्यन्तं, या मननेन गीता भवेत्, अर्थात् चतुर्द्दलतः सहस्रदलपद्मरूपि चक्रपर्यन्तं या अस्फुट-मधुमत्तभ्रमर-कूजन-निनादिनी भूत्वा, पञ्चाशद्-वर्ण-मातृकारूपेण नित्यं विहरति, एतदर्थज्ञापकत्वेन 'गायत्' तथा मननेन तच्चतुर्द्दलतः सहस्रदलपर्यन्तं षट्चक्रकोषं विदीर्य जीवानां परित्राणकरणात् "त्री" एतदुभयपदयोगेन "गायत्री"ति प्रसिद्धा।

गायत्री मन्त्रः--

"तत् सवित्तुर्वरेण्यं, भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्" ॥

यो अस्माकं बुद्धि-वृत्ति-समूहं प्रेरयति, वयं सवितुर्देवस्य तद् वरणीयं तेजः ध्यायामः।

ऋग्वेदे तृतीयमण्डलस्य द्विषष्टितमसूक्तय दशम ऋङ् मन्त्रो गायत्री नाम्ना सुप्रसिद्धः। अस्य मन्त्रस्य ऋषिर्विश्वामित्रः, देवता सविता, छन्दः गायत्री। सवितृदेवतात्वेनास्य सावित्री ऋक्, तथा गायत्री छन्दसाच्छादितत्वेन एषा गायत्रीत्यभिहिता। सामवेदस्य उत्तरार्च्चिके (६।३।१०।११) तथा यजुर्वेदेऽपि (३६।३) गायत्रीमन्त्रो लभ्यते। सर्ववेदानां सर्वशाखासु,—गोभिलाश्वलायनयाज्ञवल्क्यादिसंहितासु पद्धतिषु च गायत्री-मन्त्रोऽसकृत् सन्निविष्टो भवति।

गायत्रीछन्दस्त्रिपादविशिष्टं, प्रतिपादमष्टाक्षराणि। गायत्रीमन्त्रस्य प्रथमपादः—"तत् सवितुर्वरेण्यं" इत्यत्र सप्ताक्षरमात्रमस्ति। "तत्"-शब्दो एकाक्षरः स्वरसंख्येयमक्षरमिति हेतोर्व्यञ्जनस्य नात्र ग्रहणं भवेत्। छन्दःपातदोषनिवारणार्थं "वरेण्यं" स्थाने वरेणियमुच्चार्याक्षरन्यूनता पूरयितव्या। यत्र गायत्र्यादौ छन्दसि पादस्य अक्षरसंख्या न पूर्यते, तत्र "इयादिभिः पूरयितव्या" इति हलायुधः।



प्रोक्तसावित्रीमन्त्रः प्रणवेण व्याहृतित्रयेण च सार्द्धमेव जपे विनियोक्तव्य इति योगियाज्ञवल्क्योक्तिः।

ॐङ्कारं पूर्वमुच्चार्य भूर्भुवः स्वरनन्तरम्।
गायत्री प्रणवश्चान्ते जपे ह्येवमुदाहृतम्॥

श्रीमच्छङ्कराचार्येणोक्तं गायत्रीभाष्ये—

"सप्रणव-व्याहृतित्रयोपेता प्रणवान्ता गायत्री जपादिभिरुपस्या"। अर्थात् ॐ। भूर्भुवः स्वः। तत् सवितुर्वरेण्यं, भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयात् ॐ। एतन्मन्त्रो जपादिना उपास्यः।

भगवान् मनुरवदत्—(२।८१)

ॐ पूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः।
त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखम्॥

ॐङ्कारः, तिस्रो महाव्याहृतयः त्रिपादविशिष्टा सावित्री च, इत्येतत्-त्रितयसहयोगेन ग्रथिता गायत्री-महामन्त्रो जपकार्ये प्रयुक्तो ब्रह्मप्राप्तिद्वार-स्वरूपः भवेत् ।

शास्त्रान्तरे—— प्रणवव्याहृतिभ्याञ्च गायत्री पठिता यदि ।
सर्वासु ब्रह्मविद्यासु भवेदाशु शुभप्रदा ।।

गायत्री यदि सप्रणव-व्याहृतित्रया पठिता भवेत्, तदा सर्वब्रह्मविद्यासु मङ्गलदायिनी शीघ्रफलप्रदा च भवेत् ।

गायत्रीमहिमा——गीतायां श्रीभगवानुवाच——"गायत्री छन्दसामहम्" (१०।३५) अस्य टीकायां श्रीधरस्वामिपादोऽवदत् "छन्दोविशिष्टानां मन्त्राणां मध्ये गायत्रीमन्त्रोऽहम्"।

मनुरवदत्——"सावित्र्यास्तु परं नास्ति।" (२।८३)

वेद-पुराण-स्मृति-तन्त्रप्रभृतिसमस्तार्यशास्त्रेषु, गायत्रीमन्त्रस्य स्वरूपं माहात्म्यं च बहुधा वर्ण्यते ।



प्राचीनवैदिकयुगादारभ्य अर्वाचीनकालपर्यन्तं गायत्री मन्त्रसाधना निरवच्छिन्ना प्रचलिता। आबहमानकालतो भारतवर्षस्य वैदिकसमाजे सत्स्वपि नानाधर्मसम्प्रदायेषु गायत्र्याः श्रेष्ठत्वमुपयोगितां च प्रति सर्वसम्प्र-दायसाधकानामैकमत्यम् । यथार्थत्वमुक्तं देवीभागवते——

यथा भवेन्महादेव्या गायत्र्याः श्रुतिचोदिता ।
सर्ववेदसारभूता गायत्र्यास्तु समार्च्चना ।।
ब्रह्मादयोऽपि संध्यायां तां ध्यायन्ति जपन्ति च ।
वेदा जपन्ति तां नित्यं वेदोपास्या ततः स्मृता ।।
तस्मात् सर्वे द्विजाः शाक्ता न शैवा न च वैष्णवाः ।
आदिशक्तिमुपासन्ते गायत्रीं वेदमातरम् ।।(११।१५।१०)

गायत्रीमन्त्रो निखिलवेदस्य सारभूतः, सर्वेषु वेदशास्त्रेषु सर्ववेदसार-भूताया गायत्रीपूजाया जपस्य च प्राधान्यमुक्तम् । ब्रह्मादिदेवा अपि त्रिसंध्यासु गायत्रीं ध्यात्वा जपन्ति । सर्वे वेदा नित्यं गायत्रीं जपन्ति, तेन सा वेदोपास्या कथ्यते। सर्वे द्विजा (उपनीतिब्राह्मण-क्षत्रिय-वैश्याः) आदिशक्तिवेदमात-

गायत्रीमन्त्रोपासकास्तेन सर्वे ते शाक्तपदवाच्याः। वस्तुतो द्विजानां मध्ये शैवा वा वैष्णवा वा न विद्यन्ते।

"गायत्री वेदमाता" चत्वारो वेदाः सांगाः सोपनिषदः सेतिहासाः सर्वे ते गायत्र्याः प्रवर्तन्ते। गायत्रीभाष्यरूपोऽसौ भागवतग्रन्थो वेदार्थपरिबृंहितः। (गरुड़पुराणम्)। समग्रश्रीमद्भागवतं गायत्रीभाष्यरूपम्।

भगवान् मनुर्गायत्रीजपमाहात्म्यमुक्तवान्--

एतदक्षरमेताश्च जपन् व्याहृति-पूर्विकाम्।
सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते।।
मनुसंहिता (२।७२)

ॐङ्कारव्याहृतित्रयसंयुक्तं गायत्री-मन्त्रमुभयसन्ध्ययोर्यो जपेत्, स वेदविद्विप्रः, सर्ववेदपाठ-फलं पूण्यं च लभते।

संहिताकार उशना अवदत्--

गायत्रीञ्चैव वेदांश्च तूलयाऽतुलयत् प्रभुः।
एकतश्चतुरो वेदान् गायत्रीञ्च तथैकतः।।

प्रभुर्ब्रह्मा गायत्र्या सह चतुर्वेदान् तुलायन्त्रेण परिमाय अपश्यत् एका गायत्री चतुर्वेदसमतुल्याभवत्।

गायत्री तेजोभूयिष्टोऽग्निगर्भो महामन्त्रः। युगे युगे साधको गायत्री-महामन्त्रमाराध्य पापमुक्तः सन् ब्रह्मतेजो ब्रह्मज्ञानञ्च लब्ध्वा धन्यो भवेत्। यथा स्पर्शमणिना स्पर्शात्ताम्रं स्वर्णत्वं प्राप्नोति तद्वद् गायत्रीमन्त्रसाधनया साधको द्वितीयजन्म दिव्यजीवनं लब्ध्वा द्विजनाम्ना परिचितो भवेत्।

यथा स्पर्शमणिस्पर्शात् ताम्रोऽपि काञ्चनं सदा।
गायत्री सहितश्चात्मा द्विजात्मा तेन ईरितः।।
(गायत्रीतन्त्रम् १।७४)

पुराणे कथितमस्ति--गाधिराजपुत्रो विश्वामित्रः क्षत्रियकुले जन्म लब्ध्वा गायत्रीसाधनयामितप्रभावः सन् क्षत्रियस्वभावमतिक्रम्य ब्रह्मर्षिपदप्राप्तो द्वितीयस्वर्गसृष्टिमकरोत। गायत्र्या यजुर्वेदीयावाहनमन्त्रे महापावनत्वमुक्तम्।

ॐ तेजोऽसि शुक्रमस्यमृतमसि धाम नामासि।
प्रियं देवानामनाधृष्टं देव-यजनमसि॥

हे मातः गायत्रि त्वं ब्रह्मतेजः स्वरूपा, त्वं शुभज्योतिर्मयी (शुक्रमसि) त्वम् अमृतस्वरूपा, त्वं विश्वाधारभूता (धाम) त्वं ब्रह्मवाचकशब्दरूपा त्वं देवानामिष्टप्रदा (प्रियं देवानाम्) अव्यर्थ-याग साधनामन्त्रस्वरूपा (अनाधृष्टं देवयजनम् असि)।

तथा च नारायणोपणिषदि—(३५)
ॐ तेजोऽसि सहोऽसि बलमसि भ्राजोऽसि,
देवानां धाम नामासि विश्वमसि।
विश्वायुः सर्वमसि सर्वायुरभिभूरोम्॥

हे मातः गायत्रि त्वं बलपुष्टिकारक—"ओजः" नामकसूक्ष्मधातुस्वरूपा (ओजोऽसि) त्वं शत्रुपराभवकारिणी "सह" नामक शक्तिस्वरूपा (सहोऽसि) त्वं "बलं" दैहिकसामर्थ्यस्वरूपा, त्वं दीप्तिहेतुस्वरूपा (भ्राजोऽसि)। त्वं देवानां तेजःस्वरूपा (देवानां धाम) तेषां नमस्या (नामासि), त्वं सर्वजगद्-रूपिणी (विश्वमसि) त्वं विश्वस्य स्थितिकालरूपा (विश्वायुः) त्वं सर्वस्वरूपा (सर्वमसि) सर्वेषामायुः स्वरूपा (सर्वायुः) त्वं सर्वपापानां पराभवकारिणी (अभिभूः) तथा च त्वम् ॐकाररूपिणी।

## गायत्री-माहात्म्यम्

गायत्रीतन्त्रे—

चतुर्विंशाक्षरिविद्या परतत्त्वविनिर्मिता।
"त"कारात् "यात्"-कारपर्यन्तं शब्दब्रह्मस्वरूपिणी॥
परस्य ब्रह्मणो माता गायत्री परदेवता।
प्रसुप्तभुजगाकारा विसतन्तु-समाकृतिः॥
पञ्चाशद्वर्णसंयुक्तं गायत्र्या निर्मितं वपुः।
आधार-पद्ममध्यस्था विद्युत्-पञ्चप्रदीपिका॥
महापद्मवनमयी महापाप-विमोचनी।
महापुण्यमयी नित्या सच्चिदानन्दरूपिणी॥
(१।३१-३४)

एषा चतुर्विंशाक्षरी परतत्त्वविनिर्मिता साक्षाद् विद्यारूपिणी गायत्री तकारतः यात्-कारपर्यन्तं (तत् सवितुः....प्रचोदयात्) शब्दब्रह्मस्वरूपिणी

स्वयं परब्रह्मजननी, साक्षाद् परदेवता च। अस्याः आकृतिः प्रसुप्तभुजंगवद् मृणालतन्तुसदृशी च। कुण्डलिनी-शक्तिरूपिण्या गायत्रीदेव्याः कलेवरं पञ्चाशद्वर्णनिर्मितम्। एषा विद्युत्पुञ्जवन्निरतिशयं देदीप्यमाना मूलाधारपद्मे विराजिता। एषा महापद्मवनमध्ये (षट्चक्रेषु) विचरणशीला, एषा साधकस्य जपकारिणो महापापानि विनाशयति। एषा महापुण्यमयी, क्षररहिता सत्‌चित्-आनन्दस्वरूपिणी च।

या नित्या ब्रह्मगायत्री सर्ववेदेषु सम्मता।
स्मृतिशास्त्रे संहितायां पुराणेषु प्रतिष्ठिता।
अतः सर्वं परित्यज्य जपेत् तन्त्रमतं कलौ।।
(४।७३-७४)

यतो गायत्री नित्या सर्ववेद-प्रतिपादिता, स्मृतिशास्त्र-संहिता-पुराण-समूहेषु च प्रतिष्ठिता, अतएव सर्वमन्यत् परित्यज्य कलौ तन्त्रसम्मतो गायत्री-मन्त्रजप एवावश्यं कर्त्तव्यः। उक्तञ्च महानिर्वाणतन्त्रे।

तन्त्रान्तरे च—
इयन्तु ब्रह्म सावित्री यथा भवति वैदिकी।
तथैव तान्त्रिकी ज्ञेया प्रशस्तोभय कर्मणि।।(८।८५)।
मूलमेवमिति प्राहुर्गायत्रीं सर्वमन्त्रणे।
आदावेव यतो विद्या गायत्री परमाक्षरी।।
प्रादुर्भूता ततो लोके मन्त्राणामादिरेव सा।।

एषा परमाक्षरी विद्यारूपिणी गायत्री प्रथममेवाविर्भूता। तस्माल्लोके सैव मन्त्राणामादिभूतेति कीर्त्यते।

सा विद्या परमा चैव मन्त्राणां सिद्धिकारिणी।
अज्ञानान्विष्टमन्त्राणां तत्‌सान्निध्यात्तु साधनम्।।

एषा गायत्रीरूपा परमा विद्या सर्वमन्त्राणां सिद्धिकारिणी।
एवमिष्टमन्त्रज्ञानाभावेऽपि केवलं गायत्रीमन्त्रजपेनैव सिद्धिर्भवेत।।
संसारे सिन्धवो यद्वत् धावन्त्यविरतं ध्रुवम्।
सर्वे मन्त्रास्तथा तस्यामन्तर्भूता हि सर्वथा।।

संसारे सर्वनद्यः यथाविरामं समुद्राभिमुखं धावन्ति, तद्वद् अन्यान्यमन्त्राः सर्वतोभावेन गायत्री-मन्त्रेऽन्तर्निविष्टा भवन्ति। "ततो हि जपनात् तस्याः सर्वसिद्धिर्भविष्यतीति"।

## प्रणव-तत्त्वम्

प्रणवोपनिषदि—

ॐमित्येकाक्षरं ब्रह्म यदुक्तं ब्रह्मवादिभिः।
शरीरं तस्य वक्ष्यामि स्थानं कालत्रयं तथा।।
तत्र देवास्त्रयः प्रोक्ता लोका वेदास्त्रयोऽग्नयः।
तिस्रो मात्रार्द्धमात्रा च प्रत्यक्षस्य शिवस्य तत्।।

तथाहि-ब्रह्मवादिनो यद् ॐङ्कारम् एकाक्षरब्रह्म इति वदन्ति, तस्य शरीरं स्थानं तथा कालत्रयं च कथयामि। तस्य प्रत्यक्षशिवस्य ब्रह्मणो वा प्रतीकस्वरूपस्य ॐङ्कारस्य मात्रात्रयस्य अधिष्ठातारस्त्रयो देवा, स्त्रयो लोकास्त्रयोवेदास्तथा त्रयोऽग्नयः शास्त्रे उक्ताः। तिस्रो मात्राश्च—अ-उ-म, तदुपरि अर्द्धमात्रा ँ नादविन्दुर्विराजते।

(१) "अकारतत्त्वम्"—ॐकारस्य प्रथममात्रा "अकारः" जाग्रदवस्थाधिष्ठातृविश्वरूपात्मा अथवा वैश्वानरस्वरूपः रजोगुणः। "अकारो वै सर्ववाक्"। अकारो विराट्वत् सर्वाणि वाक्यानि व्याप्य विराजते। यथायम् अकारः प्रणवस्य प्रथमवर्णः, विश्वस्रष्टा विराट् ब्रह्मापि तथा सृष्टयाद्यवस्थात्रयस्य प्रथमदेवता।

प्रणवोपणिषदि—

ऋग्वेदो गार्हपत्यं च पृथिवी ब्रह्मा एव च।
अकारस्य शरीरं तु व्याख्यानं ब्रह्मवादिभिः।।

ऋग्वेदो गार्हपत्याग्निः, पृथिवी ब्रह्मा च अकारस्य शरीरमिति ब्रह्मवादिनो वदन्ति।

(२) उकारतत्त्वम्:—ॐङ्कारस्य द्वितीयमात्रा "उकारः"। स्वप्नावस्थाधिष्ठातृतैजस-आत्मा सत्त्वगुणः। स्वप्नावस्था यथा जाग्रदवस्थापेक्षया उपाधेर्न्यूनता, किन्तु स्वप्नाधिष्ठातृतैजस आत्मा तथा वैश्वानरापेक्षया ऊर्द्धस्थो उत्कृष्टो वा तद्वद् अकारापेक्षया उकारतत्त्वज्ञानं समधिकं श्रेयः। अकारतत्त्वज्ञानेन सर्वकामनासिद्धिर्जायते, परन्तु उकारतत्त्वज्ञानेन ज्ञानसमष्टेरुत्कर्षसाधनं भवति। उकारो यथा अकार-मकारयोर्मध्यवर्त्ती, तथा तैजसात्मापि विश्व-प्राज्ञयोर्मध्यस्थितः, उभयोर्मध्यवर्त्तित्वधर्मतुल्यः।

**प्रणवोपनिषदि—**

यजुर्वेदोऽन्तरीक्षं च दक्षिणाग्निस्तथैव च।
विष्णुश्च भगवान् देव उकारः परिकीर्त्तितः ।।

ॐङ्कारस्य द्वितीयमात्रा उकारः भुवर्लोकः, यजुर्वेदः, अधिष्ठातदेवो विष्णुः, गणदेवता, एकादशरुद्रः त्रिष्टुभ् छन्दः दक्षिणाग्निश्चेति।

(३) "मकारतत्त्वम्"—सुषुप्तिस्थानगतः प्राज्ञ आत्मा ॐङ्कारस्य तृतीयमात्रा मकारस्वरूपः तमोगुणः। यथा जाग्रदवस्था स्वप्नावस्था च प्रकृतिवशेन सुषुप्तौ लीयेते, तद्वद् अकार उकारश्चमकारे लीयेते, सृष्टिस्तथा स्थितिश्च लये पर्यवसेते। यथा च सुषुप्तेरन्ते जाग्रदाद्यवस्थाया पुनराविर्भावो भवति, तद्वद् ॐङ्कारोच्चारणकाले लयस्थान्मकाराद् अ-उ इति मात्राद्वयं पुनर्निर्गतं भवति। तेनास्य ॐङ्कारस्य तृतीयमात्रा मकारः सुषुप्तेरधिष्ठातृ-प्राज्ञात्मस्वरूपः कथ्यते।




**प्रणवोपनिषदि—**

सामवेदस्तथा द्यौश्चाहवनीयस्तथैव च।
ईश्वरः परमो देवो मकारः परिकीर्त्तितः ।।

ॐङ्कारस्य तृतीयमात्रा मकारः सामवेदः, स्वर्गलोकः, अधिष्ठातृदेवः शिवः, आहवनीयाग्निश्च।

(४) अर्द्धमात्रा (नाद-विन्दुः)—ॐङ्कारस्य मध्ये अ-उ-म इति वर्णत्रयं विद्यते, वर्णत्रयं 'त्रिमात्रा' नाम्नाभिहितं भवति। तदतिरिक्ता अर्द्धमात्रा वर्त्तते। सा च नाद-विन्दु-स्वरूपा (ँ) प्रणवोपरि अवस्थिता च। तस्याः स्वरूपं माण्डूक्यश्रुतौ वर्णितम्।

"अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपरामः शिवोऽद्वैत एवमोङ्कार आत्मैव"।

तुरीय-ॐङ्कारः अकारादि-मात्रात्रयरहितो, वाङ्मनसोरगोचरत्वेन व्यवहारायोग्यः, स च जगत्-प्रपञ्चलयस्थानं मङ्गलमयाऽद्वैतात्मस्वरूपम्। तुरीयस्य उच्चारणं न भवेदित्यत एव "अर्द्धमात्रा" इत्युच्यते।

प्रणवस्य अ-उ-म-"ॐम्" शब्देन ब्रह्मविष्णुशिवानां परामर्शः "विन्दुना" च परं ब्रह्म बोध्यते, एवमर्द्धचन्द्राकृति"नाद"शब्देन शब्दब्रह्ममयी आद्या-शक्तिरिति सूच्यते। सा च ब्रह्मविष्णुशिवानां पृथग्भावं समावृत्य, शब्द-ब्रह्ममयी आद्याशक्तिरिति नादरूपार्द्धचन्द्राकृतिरेखया ज्ञाप्यते। एवञ्च तन्मध्ये केन्द्रे साक्षिस्वरूपेण विन्दुरूपेण "परं ब्रह्म" विराजते।

सर्वे मन्त्राः प्रणवसंयोगेन यथानिर्देषाः पूर्णत्वञ्च प्राप्तास्तथा अर्द्धमात्रया अर्थात् नादविन्दुसंयोगेन ॐङ्कारो मूलसंयोगात् पूर्णत्वं गच्छति। प्राचीन-लिपि-पद्धतौ पूर्णप्रणवस्य "ॐम्" इत्येवं रूपेण लेखनं दृश्यते।

"ॐङ्कार-साधना"—ॐङ्कारयोगेन ब्रह्मसाधना निर्देशिता।

**मूण्डकोपनिषदि—**

प्रणवो धनुः शरो हि आत्मा ब्रह्म तल्लक्ष्यमुच्यते।
अप्रमत्तेन बोद्धव्यं शरवत्तन्मयो भवेत्॥(२।२।४)॥

प्रणवो धनुः, शरो जीवात्मा, ब्रह्मा तल्लक्ष्यमुच्यते। साधक एकाग्रचित्तेन लक्ष्यं भिन्द्यात्। अर्थात् साधकः शरवत्तन्मयतया लक्ष्ये ब्रह्मणि स्वीयात्मान-मनुप्रवेशयेत्। ततः स्वीयात्मपरमात्मनोः सन्मेलनेन ब्रह्ममयो भवेत्।

**श्वेताश्वतरोपनिषदि च—**

स्वदेहमरणिं कृत्वा प्रणवञ्चोत्तरारणिम्।
ध्याननिर्म्मथनाभ्यासाद् देवं पश्येन्निगूढवत्॥ (१।१४)

साधकः स्वदेहमधस्तनारणिं कृत्वा, प्रणवञ्च ऊर्द्धतनारणिं विधाय ध्यानरूपघर्षणाभ्यासेन "काष्ठद्वयमध्ये यज्ञाग्निप्रकाशवत्" साधकः स्वदेहा-भ्यान्तरे प्रच्छन्नं ज्योतिर्मयमिष्टदेवं पश्येत्। सर्वोपनिषदां सारभूत-श्रीमद् भगवद्गीतायां देहान्तकाले यथा ॐङ्कारजपेन ध्यानेन च जीवः परमगतिं लभते, तदुक्तम्—

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च।
मूर्ध्न्याधायात्मनः प्राणानास्थितो योगधारणम्॥
ॐ मित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्।
यः प्रयाति त्यजन् देहं स याति परमां गतिम्॥ (८।१२।१३)

सर्वेन्द्रियाणां द्वाराणि संयम्य, मनः च हृदि निरुद्धय भ्रुवोंमध्ये स्वीय-प्राणवायुं संस्थाप्य, योगावलम्बनेन यः साधकः ॐ मिति एकाक्षरं ब्रह्मवीज जप्त्वा, ध्यात्वा च देहं त्यजति, स परमगतिं मोक्षं लभते। अर्थात् मृत्युकाले सर्वेन्द्रियाणि व्याकुलितानि भूत्वा निस्तेजांसि जायन्ते, तदा दीर्घमन्त्रोच्चारणं दुःसाध्यं भवति, तदा ॐमित्येकाक्षरजपः, परमपद-प्रापकः सुखसाध्यः इति कीर्त्तितम्।

महर्षि पतञ्जलिस्तस्य **योगसूत्रे** उक्तवान्

"तस्य वाचकः प्रणवः"। (१।२७)

प्रणवो ब्रह्मणो वाचकः शब्दः। ब्रह्म वाच्यं प्रणवो वाचकः। वाचकः शब्दप्रयोगेणैव ब्रह्म ज्ञेयं साध्यं वा भवति। ब्रह्मोपलब्धये साधनासामग्री प्रणवः। साधनानियमञ्च दर्शयति—

"तज्जपस्तदर्थ-भावनम्" (१।२८)

तदर्थचिन्तनेन प्रणवजपः कर्त्तव्यः। गीतायामपि 'व्याहरन् मामनुस्मर'-न्नित्युक्तम्। एवं प्रकारेणार्थभावनया सह प्रत्यहं प्रणवजपेन शारीरिकमान-सिकान् विघ्नसमूहान् निवार्य प्रशान्तचित्तेन आत्मसाक्षात्कारं लभते।

## हंसविद्यारहस्यम्

**नादविन्दूपनिषदि—**

"हंसरूपेण प्रणवः साधना"—अकारःउकारो मकारो नादो विन्दुश्चेति पञ्चाक्षरात्मकस्य प्रणवस्य हंसपक्षिरूपेण ध्यानस्य विधानमुक्तम्—

ॐ अकारो दक्षिणः पक्ष उकारस्तूत्तरः स्मृतः।
मकारस्तस्य पुच्छं वा अर्द्धमात्रा शिरस्तथा॥१॥
पादौ रजस्तमस्तस्य शरीरं सत्त्वमुच्यते।
धर्मश्च दक्षिणं चक्षुरधर्मश्चोत्तरं स्मृतम्॥२॥
भूर्लोकः पादयोस्तस्य भुवर्लोकस्तु जानुनी।
स्वर्लोकः कटिदेशे तु नाभिदेशे महाजगत्॥३॥
जनलोकस्तु हृदये कण्ठदेशे तपस्ततः।
भ्रुवोर्ललाटमध्ये तु सत्यलोको व्यवस्थितः॥४॥

सहस्रार्णमनीत्यत्र मन्त्र एषः प्रदर्शितः।
एवमेनं समारूढ़ो हंसयोगविचक्षणः।
न बध्यते कर्मचारी पापकोटिशतैरपि ।।५।।

हंसरूपेण प्रदर्शिता . प्रणवमन्त्रसाधना सहस्रसंख्यकानामन्यमन्त्राणां साधनफलमतिक्रम्य विशेषफलं प्रददाति। यो विचक्षणः साधको हंसमन्त्रजपेन प्रणवरूपिणं हंसमारोहति, स कर्मचारी साधकः कर्मजन्यकोटिशतपापैरपि बद्धो न भवेत्।

"प्रणवं हंसबीजञ्च"—प्रणवात्तन्त्रशास्त्रोक्तं सुप्रसिद्धं हंसबीजमुत्पद्यते। प्रणवेन सह पुरुषप्रकृतितत्त्वमेवं प्राणायामविज्ञानं मिलित्वा विचित्रोऽयं हंसशब्दः समुपजायते। शास्त्रे उक्तम्—

"हकारेण वहिर्याति सकारेण विशेत् पुनः"

अर्थात् श्वास-वायोः त्यागकाले "हम्" इति शब्द उच्चारितो भवेत्, तथा ग्रहणकाले "स" शब्द उच्चारितो भवेत्। जीवन-धारणकार्ये जीवोऽनवरतम् एतम् "अजपा" मन्त्रं जपति। एतत्प्राकृतिकमन्त्रयोगेनैव जीवो मूले ब्रह्मणि संयुक्तो भवति। तदुक्तं **हंसोपनिषदि**—

एकविंशतिसहस्र-षट्शताधिकमीश्वरि।
जपते प्रत्यहं प्राणी सान्द्रानन्दमयीं पराम् ।।
विना जपेन देवेशि जपो भवति मन्त्रिणः।
अजपेयं ततः प्रोक्ता भवपाशनिकृन्तनी ।।

जीवो प्रत्यहं दिवारात्रौ निश्वास-प्रश्वासक्रियया हंसनामकमजपामन्त्रं अहोरात्रयोरेकविंशतिसहस्राणि षट्शतानि जपति। तस्माद् "अजपा" मन्त्र इति कथ्यते।

ब्रह्म प्रकृतिपुरुषात्मकम्। देहसरोवरे आत्मा हंसरूपेण विचरति। अतएव हंसशब्द आत्मोपलब्धेर्द्वारस्वरूपम्। हंसबीजे उद्बुद्धे सति सूर्यमण्डले आत्मा प्रकाशितो भवेत्। जपकार्ये पुनः पुनरुच्चारणेन हं च सञ्चेति शब्दद्वयस्य क्रमवैपरीत्येन सोऽहम् इति बीजमुत्पद्यते, एवं सोऽहं बीजे सिद्धे सति क्रियांशः स-ह-वर्णद्वयात्मको लुप्तो भूत्वा, आदिनादविन्दुर्महामन्त्र "ॐ" मात्रमवशिष्यते। **रुद्रयामलतन्त्रे** विवृतमेतत्तत्त्वम्—

प्रणवाज्जायते हंसो हंसः सोऽहं परो भवेत्।
सोऽहं ज्ञानं महाज्ञानं योगिनामपि दुर्ल्लभम्॥
निरन्तरं भावयेद् यः स एव परमो भवेत्।
हं पुमान् सः स्वरूपेण चन्द्रेण प्रकृतिस्तु सः।
एतद्धंसं विजानीयात् सूर्यमण्डलभेदकम्॥
विपरीतक्रमे सैव सोऽहं-ज्ञानं यदा भवेत्।
तदैव सूर्यगः सिद्धो वासुदेव-प्रपूजितः॥
हकारार्णं सकारार्णं लोपयित्वा ततः परम्।
सन्धिं कुर्यात् ततः पश्चात् प्रणवोऽसौ महामनुः॥

शास्त्रे अजपामन्त्रसाधना प्रशस्यतरेति कथ्यते। साधको हृदयात् स्वत उत्थित-हंसमन्त्रध्वनिश्रवणेन परमानन्दमुपभुंक्ते। वैदिक-पौराणिक-तान्त्रिक-मतेन च अजपा-गायत्री, हंसविद्या, आत्ममन्त्रः, प्राणयज्ञ इति विविध-नामभिर्निर्देशिता। गीतायाः चतुर्थाध्याये (४।२६) श्लोकटिकायां श्रीधर-स्वामिपादेन अजपासाधनेति व्याख्याता।

यद्वा—"अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे" इत्यनेन पूरकरेचकयो-र्वर्त्तमानयोर्हंसः, सोऽहमित्यनुलोमतः प्रतिलोमतश्च अभिव्यज्यमानेन अजपा-मन्त्रेण तत्तत् पदार्थैक्यं च व्यतीहारेण भाव्यते इत्यर्थः।

स्कन्दपुराणे वैष्णवसंहितायां प्रणवकल्पे पञ्चाध्यायेषु प्रणवसाधना सविस्तरं विव्रियते। तत्र च प्रणवकवचं प्रणवहृदयं प्रणवपुरश्चर्याविधिः, प्रणवाष्टोत्तरशतनामानि प्रणवगायत्री प्रणवमालामन्त्रः प्रणवस्तवराजः, प्रणव-गीता, प्रणवसहस्रनामानि इत्यादिविषयाः सन्निवेशिता वर्त्तन्ते।

(२७) श्रीशैले च ममग्रीवा महालक्ष्मीस्तु देवता।
भैरवः सम्बरान्दो देशे देशे व्यवस्थितः॥
(तन्त्रचूड़ामणौ)

श्रीशैले श्रीहट्टे वा सत्या ग्रीवायाः पतनात् तत् ग्रीवापीठम् अभिहितम्। पीठाधिष्ठात्री देवी महालक्ष्मीः भैरवः सम्बरानन्दः सर्वानन्दो वा। तन्त्र-चूड़ामणिपीठमालायां श्रीपर्वतोऽपि सत्या दक्षिणगुल्फपातोऽभवदित्यपरं विवरणं दृश्यते। स च श्रीपर्वतो दक्षिणभारते अवस्थितः। श्रीहट्टश्च प्राचीनकालावधि शक्तिसाधनाया अन्यतमपीठस्थानत्वेन परिगण्यते। वज्रयानमतस्य तान्त्रिक-

बौद्धग्रन्थसाधनमालायां निम्नोक्तपीठचतुष्टयस्य नामानि दृश्यन्ते। यथा—(१) उड्डीयानः, (२) पूर्णगिरिः (३) कामाख्या, (४) श्रीहट्टश्चेति।

(२८) काञ्चीदेशे च कङ्कालो भैरवो रुरुनामकः।
देवता देवगर्भाख्या॥
काञ्चीदेशे सत्याः कङ्कालपातेन तत्र काञ्चीमहापीठम्।

रुरुनामा भैरवः। मतान्तरे पीठमिदं वीरभूमप्रदेशान्तर्गत-कपाइनद्यास्तीरेऽवस्थितम्।

काञ्चीपीठं वा काञ्चीभरम्, भारतवर्षस्य प्रसिद्धतीर्थस्थानमत्र कामाख्यादेवी भैरव एकाम्रनाथः। तच्च प्रसिद्धम् महापीठं मद्रप्रदेशान्तर्गतम्। सप्तमहातीर्थानि मोक्षप्रदत्वेन प्रसिद्धानीति शास्त्रवादः।

**स्कन्दपुराणे**— अयोध्या मथुरा माया काशी काञ्ची अवन्तिका।
पुरी द्वारावती चैव सप्तैता मोक्षदायिकाः॥

शिवशक्तिलीलास्थलरूपेण काञ्चीपीठं तन्त्रसारे सगौरवं वर्णितम्। बृहन्नीलतन्त्रमतेन काञ्चीनगरे कनककाञ्चीदेवी विराजिता आस्ते।

"काञ्च्यां कनककाञ्ची स्याद् अवन्त्यामतिपावनी"
(५म पटले)

तोड़लतन्त्रमतेन तीर्थमिदं विश्वरूपमहादेवस्य कटिदेशस्वरूपम्।

नाभिमूले महेशानि अयोध्यापुरी संस्थिता।
काञ्चीपीठं कटिदेशे श्रीहट्टं पृष्ठदेशके॥

(२९) भैरवञ्चासिताङ्गञ्च देवी काली सुसिद्धिदा।
दृष्ट्वा दृष्ट्वा नमस्कृत्य मन्त्रसिद्धिमवाप्नुयात्॥
कूजवारे भूततीर्थौ निशार्द्धे यस्तु साधकः।
नत्वा प्रदक्षिणी कुर्यान्मन्त्रसिद्धिमवाप्नुयात्॥

कालमाधवे सतीदेव्या वामनितम्बो न्यपतत्, तत्र भैरवोऽसिताङ्गः पीठाधिष्ठात्री देवी काली। तत्र देवीं पुनः पुनर्दृष्ट्वा प्रणम्य च साधकः सर्वसिद्धिं लभते। यः साधको मङ्गलवारे कार्त्तिककृष्णचतुर्द्दश्यां महानिशायां

देवीं प्रदक्षिणीकृत्य प्रणमेत्तस्य मन्त्रसिद्धिर्भवेत्। महापीठमिदं शोणनदस्य तीरे वर्त्तते।

(३०) "शोनाख्ये भद्रसेनस्तु नर्मदाख्ये नितम्बकः"।

नर्मदायां देव्या दक्षिणनितम्बो न्यपतत्, तत्र भैरवो भद्रसेनः देवी शोणा शोणाक्षी वा। नर्मदामहापीठं नर्मदानदीतटे कुत्र वर्त्तते इति तस्य निर्णयो न जातः। अभ्रभेदिविन्धपर्वतस्य विशालशैलश्रृङ्गमेकं नर्मदया परिवेष्टितं सदपूर्वशोभां धारयत् तिष्ठति। पुरा महाराजमान्धाता तत्र तपस्याचरणेन शङ्करं परितुष्टमकरोत्। तेनायं मान्धातृपर्वत इति कथ्यते। तस्य शिखरे ॐकारनाथसंज्ञकं ॐकारेश्वरसंज्ञकं वा शिवमन्दिरं विराजते। ॐकारेश्वरो द्वादशज्योतिर्लिङ्गानामन्यतमः। ॐकारेश्वरस्वयम्भूलिङ्गस्य समीपे जगन्मातृपार्वतीमूर्त्तिर्विराजते। ॐकारेश्वरस्य पूर्वेण सार्द्धक्रोशदूरे नर्मदातीरे, सप्तमातृकातीर्थम्। तत्र ब्राह्मी, माहेश्वरी, कौमारी, वैष्णवी, वाराही, नारसिंही ऐन्द्री चेति सप्तमातृकाः सन्ति।

"नर्मदा"—स्कन्दपुराणान्तर्गतरेवाखण्डे "नर्मदाविर्भाव-वृत्तान्तो वर्णितः। नर्मदाया वारत्रयं पृथिव्यामवतरणमभवत्। प्रथमं राजा पूरूरवा, द्वितीयं सोमवंशीयो राजा हिरण्यतेजा, एवं तृतीयवारमिक्षाकुवंशीयो राजा पुरुकुत्सो महादेवं तपस्यायां परितोष्य स्वर्गात् पृथिव्यां नर्मदाम् अवातारयत्। विन्ध्यगिरिरपि नर्मदाया असह्यवेगमधारयत्।

नर्मदा-शङ्कराचार्य्यः बालकः शङ्कराचार्यो नर्मदा-नदीस्थितमान्धातृ-द्वीपस्य ॐङ्कारनाथशैलश्रृङ्गे, गुहास्थित-महायोगिगोविन्दपाद-समीपे दीक्षां लब्ध्वे-गुरोराज्ञया साधनां कृत्वा सिद्धिम् अलभत। कदाचित् नर्मदा नदी उभयकूलं प्लावयित्वा प्रवलस्रोतसा प्रवाहिता। यत्र गुहायां गुरुगोविन्दपादः समाधिमग्न आसीत् तद् गुहाद्वारपर्यन्तं जलौघः संप्राप्तः। एका किम्बदन्ती विद्यते—तत्काले-शङ्कराचार्योऽसाधारण-योगशक्तिप्रभावेण गुहाद्वारे कुम्भक-स्थापनपूर्वकं तन्मध्ये जलस्तम्भनमकरोत्। ततो गोविन्दपादः समाधितो व्युत्थाय, तदद्भुतकर्मार्थं शङ्कराचार्यमाशिषं प्रादात्, वत्से! अहमाशीर्वादं करोमि, तवाक्षयकीर्त्तिर्भूयात्, सहस्रधारा नर्मदा यथा त्वया कुम्भमध्ये आबद्धा तद्वत् त्वं सहस्रधारधर्ममतसमूहं व्यास-देवस्य ब्रह्मसूत्रान्तर्गतं कृत्वा भाष्यं करिष्यसि, तद्भाष्यप्रचारेण जगति धर्मसंस्थापनं भविष्यतीति।

(३१) रामगिरौ स्तनान्यश्च शिवानी चण्डो भैरवः।

(तन्त्रचूड़ामणौ)

रामगिरौ सती-देव्या दक्षिणस्तनो न्यपतत्, तत्र रामगिरिपीठाधिष्ठात्री देवी शिवानी, चण्डो भैरवः। मध्यप्रदेशस्य नागपुरसन्निहितविलासपुरस्योत्तर-पश्चिमकोणे क्रोशत्रयाभ्यन्तरे पर्वतशिखरोपरि रामगिरिपीठंसंस्थितम्। मतान्तरेण च बुण्डेलखण्डान्तर्गतचित्रकुटपर्वतो रामगिरिः। महाकविः कालिदासो "मेघदूत"काव्ये "रामगिरे" र्नामोल्लेखमकरोत्। टीकाकार-मल्लिनाथमतेन, रामायणोक्तचित्रकूट-पर्वत एव रामगिरिरिति।

(३२) वृन्दावने केशजालमुमानाम्नी च देवता।
भूतेशो भैरवस्तत्र सर्वसिद्धिप्रदायकः॥

वृन्दावने सतीदेव्याः केशजालं न्यपतत्। तत्र पीठाधिष्ठात्री उमादेवी, भूतेशो भैरवः, तत्र सर्वसिद्धिर्भवेत्। वृन्दावने यत्र केशजालं निपतितमभवत्, तत् स्थानं केशजालम् इत्यभिहितम्। वृन्दावने देवीपीठं केशिघाट-समीप-वर्त्तिनि स्थाने यत्र नवनिर्मितं मन्दिरं विद्यते तत्रैव छायासत्याः केशजाल-मपतदिति तत्रत्य पूजकजना वदन्ति। भूतेश्वर-भैरवमन्दिरं मथुरायां वर्त्तते। तत्रापि पातालदेव्या दण्डायमाना अष्टभुजा पाषाणमूर्त्तिर्विराजते।

"योगमाया"—वृन्दावने 'गोविन्दजी' मन्दिरपार्श्वे योगमाया देवी विराजमाना। देवी योगमाया राधा-कृष्ण-लीलासंघटनकर्त्री। श्रीमद्भागवते उक्तं—श्रीकृष्णो योगमायामाश्रित्य गोपिभिः सह रासक्रीडामकरोत् (१०।२९।१)।

"महाविद्येश्वरी"—महाविद्येश्वर्या एकानंशादेव्या वा मन्दिरं 'मशानी-ष्टेशन'समीपे पर्वतशृङ्गोपरि विद्यते। शृङ्गमिदं लोकै'रम्बिकाटिले'ति च कथ्यते। मन्दिरमध्ये कृष्णप्रस्तरनिर्मितं दण्डायमानं मूर्त्तित्रयं विद्यते। मध्ये यशोदागर्भसम्भूता महाविद्येश्वरी एकानंशा नन्दा भगवती, उभयपार्श्वे दैवकी यशोदा च।

तथाहि **आदिवाराहे**—(१६६।३७)

एकानंशां ततो देवीं यशोदां दैवकीं तथा।
महाविद्येश्वरीं दृष्ट्वा मुच्यते ब्रह्महत्यया॥

(३३) 'संहाराख्य ऊर्द्धदन्ते देवी नारायणी शुचौ'।

शुचिनामकदेशे सतीदेव्या ऊर्द्धदन्तपंक्तिरपतत्। तत्र पीठाधिष्ठात्री देवी नारायणी, संहारो भैरवः। पीठस्यास्य विशेष-निर्णयो न प्राप्यते।

(३४) 'अवोदन्ते महारुद्रो वाराही पञ्चसागरे'।

पञ्चसागरे देव्या अधोदन्तपंक्तिरपतत्। तत्र पीठाधिष्ठात्री वाराही देवी, महारुद्रो भैरवः। अस्यापि पीठस्थानस्य निर्णयो न लभ्यते। केचिद् वदन्ति हरिद्वारसमीपस्थं पञ्चकुण्डमेव तत् पीठम्।

(३५) करतोयातटे तल्पं वामे वामनो भैरवः।
अर्पणा देवता तत्र ब्रह्मरूपा करोद्भवा॥

करतोयानद्या वामतटे सतीदेव्यास्तल्पं (शय्या) न्यपतत्, तत्र पीठाधिष्ठात्री देवी अपर्णा, वामनो भैरवः, शिवकरोद्भवा करतोया ब्रह्मरूपिणी। उत्तरबंगे बगुरान्तर्वर्त्ति-भवानीपुरे महापीठमवस्थितम्। साधक प्रवर'नाटोर'-महाराजरामकृष्णोऽष्टादशशताब्द्यामत्र महापीठस्थाने तपस्यामकरोत्, अद्यापि च तस्य तपस्यास्थलं होमकुण्डं पञ्चमुण्डी आसनादि च परिलक्षितानि भवन्ति। रामनवम्यां वैशाखे शनिमङ्गलवासरयो दीपान्वितायाञ्च बहुयात्रिजनसमागमो भवति।

"करतोया"—गौरी-विवाह-समये शङ्कर-करगलितसम्प्रदानतोयप्रभवत्वात् करस्य तोयं विद्यते इति "करतोया"। वर्षाकाले सर्वनदीजलमपवित्रं भवति किन्तु करतोयाजलं सर्वदा पवित्रं भवेत्। उक्तञ्च **महाभारते** वनपर्वणि—

करतोयां समासाद्य त्रिरात्रोपोषितो नरः।
अश्वमेधमवाप्नोति प्रजापतिकृतो विधिः॥ (८५अः)

(३६) श्रीपर्वते दक्षगुल्फस्तत्र श्रीसुन्दरी परा।
सर्वसिद्धीश्वरी सर्वा सुन्दरानन्दो भैरवः॥

श्रीपर्वते सतीदेव्या दक्षगुल्फो न्यपतत्, तत्र पीठाधिष्ठात्री देवी श्रीसुन्दरी, एषा परात्परा सर्वसिद्धीश्वरी सर्वरूपिणी। तत्र भैरवः सुन्दरानन्दः। श्रीपर्वतश्च 'माद्राज'—प्रदेशान्तर्गत कार्णुलानगरे कृष्णातुङ्गभद्रयोः सङ्गमसमीपे अवस्थितः। अतिप्राचीनतममिदं तीर्थम्। महाभारते, शिवपुराणे, पद्मपुराणे, भागवते (५।१९।१६) तथा स्कन्दपुराणस्य श्रीशैलखण्डे अस्य तीर्थराजस्य माहात्म्यमुक्तम्। द्वादशज्योतिर्लिङ्गानामन्यतमं श्रीमल्लिकार्ज्जुनः श्रीशैले विराजमानो वर्तते। शृङ्गोपरिस्थितमनादिलिङ्गस्यार्ज्जुनो दर्शनमकरोत्, प्रस्फुटितमल्लिका-

कुसुमराशिभिः देवादिदेवं सम्पूज्य सिद्धमनोरथोऽभवत्। तदवधि तत्रस्थो लिङ्गरूपी शिवो मल्लिकार्ज्जुन-शिव इति प्रसिद्धोऽभवत्। शिवलिङ्गसमीपे शक्तिदेवी "भ्रमराम्बा" विराजिता। श्रीशैलः हिन्दु-बौद्धोभयविध-तान्त्रिक-साधना-केन्द्रस्थानरूपेण प्रसिद्धः। शङ्कराचार्यो वेदान्त-प्रचारार्थं यदात्र आगतस्तदात्र कापालिकसम्प्रदायस्य विशेषः प्रभाव आसीत्। कापालिक उग्रभैरवः कथं शङ्कराचार्य्यं देव्या अग्रे बलिरूपेण प्रदातुमुद्यतोऽभवत् शङ्करशिष्यपद्मपादेन केनप्रकारेण कापालिकः निहतः सर्वं एष वृत्तान्तो माधवाचार्य्यकृत-शङ्करविजयस्य दशमाध्याये विशेषेण वर्णितोऽस्ति। तान्त्रिकबौद्धाचार्य-सिद्धनागार्ज्जुनश्च श्रीशैले बहुतपस्यां कृत्वा सिद्धिमलभत। श्रीचैतन्यदेवो दाक्षिणात्यभ्रमणकाले श्रीशैलं गत्वा मल्लिकार्ज्जुनशिवदर्शनमकरोत्। श्रीशैलस्य निम्नदेशे कृष्णानद्याः शाखापातालगङ्गा प्रवाहिता।

श्रीशैलशिखरं दृष्ट्वा पुनर्जन्म न विद्यते।
दुःखं हि दूरतो याति शुभमात्यन्तिकं लभेत्।
जननी गर्भसम्भूतं कष्टं नाप्नोति वै पुनः॥

(३७) कपालिनी भीमरूपा वामगुल्फो विभासके।
भैरवश्च महादेव! सर्वानन्दः शुभप्रदः॥



विभासके सती-देव्या वामगुल्फो न्यपतत्, तत्र देवी भीमरूपा कपालिनी विराजिता। हे महादेव! भैरवस्तत्र सर्वानन्दः।

मेदिनीपुरप्रदेशान्तर्गतताम्रलिप्तसमीपे (तमलुक इति आधुनिकं नाम) पीठस्थानमवस्थितम्। ताम्रलिप्तम् अति प्राचीननगरम्। महाभारतस्य स्थाने स्थाने ताम्रलिप्तमिति नाम वर्त्तते। बौद्धयुगे पूर्वदेशीयवणिजां वाणिज्यप्रधान-केन्द्रस्थानमासीत्। तमलुकस्य "वर्गभीमा" देवी सुप्रसिद्धा। बहुकालावधि एतत्-प्रान्ते सा एका जाग्रतीदेवीरूपेण पूजिताऽभवत्। **ताम्रलिप्त-माहात्म्ये** लिखितम्—

कपालमोचने स्नात्वा मुखं दृष्ट्वा जगत्पतेः।
वर्गभीमां समालोक्य पुनर्जन्म न विद्यते॥

(३८) उदरञ्च प्रभासे मे चन्द्रभागा यशस्विनी।

वक्रतुण्डो भैरवश्च। प्रभासे सतीदेव्या उदरदेशो न्यपतत्। तत्र पीठाधिष्ठात्री देवी यशस्विनी "चन्द्रभागा" वक्रतुण्डो भैरवः।

## प्रभास-तीर्थ-रहस्यम्

प्रभासतीर्थस्य वर्त्तमाननाम सोमनाथतीर्थम्। अयं तीर्थराजः पश्चिम-भारतस्य काठिवाड़ान्तर्गतजुनागड़मण्डलेऽवस्थितः। तीर्थमिदं सुप्राचीनं प्रसिद्धं च। महाभारते, शिवपुराणे, श्रीमद्भागवते स्कन्दपुराणस्य प्रभासखण्डे च तीर्थस्यास्य माहात्म्यं तथोत्पत्तिश्च वर्णिते।

शिवपुराणस्य १।४५ अध्याये उक्तं—दक्षप्रजापतिस्तस्य अश्विन्यादि-सप्तविंशति-नक्षत्र-कन्यकाश्चन्द्रमसे सम्प्रदानमकरोत्। तासां मध्ये चन्द्रमसो रोहिण्येवातिप्रियतमासीत्। रोहिणीं प्रत्यतिशयासक्तिहेतोरन्या उपेक्षिता-भवन्। तत्र व्यथिताः कन्याः पितुर्दक्षस्य समीपे तासां दुर्भाग्यविषयं निवेदित-वत्यः। ततो दक्षप्रजापतिश्चन्द्रमसं प्रति सर्वासां पत्नीनाम् उपरि समदृष्टि-रक्षणाय पुनः पुनरादिदेश। चन्द्रमास्तदादेशं नानुष्ठितवानिति ज्ञात्वा, दक्षप्रजापतिश्चन्द्रमसमभिशप्तवान्।

श्रूयतान्तु मया पूर्वं प्रार्थितो बहुधा तथा
न मानितं त्वया यस्मात् तस्मात्त्वञ्च क्षयी भव।।
(शिवपुराणम् १।४५।२५)



श्रूयतां, मया त्वं पूर्वं बहुवारमनुरुद्धः। किन्तु त्वं हेलया अवज्ञां करोसि, तस्मात् त्वं क्षयरोगाक्रान्तो भव। अनन्तरं चन्द्रे क्षयरोगाक्रान्ते सति क्रमशः क्षयत्वं प्राप्तवति जगति महती विपत् सञ्जाता। सुधाकरस्य सुधावर्षणे व्याहते, ओषधि-समूहो विनष्टप्रायोऽभवत्। ऋषीणां देवतानाञ्च प्रार्थनया ब्रह्मा तत्-प्रतिकारार्थमुक्तवान्, "चन्द्रमाः प्रभासतीर्थे सरस्वती नदीतीरे स्थित्वा मृत्युंजय-शिवाराधनां करोत्विति। सुप्रसन्ने शिवे चन्द्रस्य क्षयरोगोपशमनं भवेत्। तच्छ्रुं-त्वा चन्द्रमाः प्रभासं गत्वा, सरस्वतीनदीतीरे कुण्डमेकं निर्म्माय तत्र तीर्थ-समूहमावाह्य, यथाविधि पार्थिवलिङ्गे मृत्युञ्जयशिवपूजामकरोत्। चन्द्रमा निरन्तरं षण्मासान् व्याप्य तपस्यां कृत्वा, मृत्युञ्जयमन्त्रेण शिवं सम्पूज्य दशकोटि-मृत्युंजयमन्त्रजपमकरोत्। ततः प्रसन्नो महादेवस्तस्मैवरदानमकरोत्, हे चन्द्र! कृष्णपक्षे प्रत्यहं तव कलायाः क्षयो भवेत्; शुक्लपक्षे तस्याः कलायाः क्रमशो वृद्धिर्भवेत्। ततो वरदानान्तरं देवा ऋषयश्च तत्रागत्य प्रार्थनां कृतवन्तः—

शिवञ्चैव तु संप्रार्थ्य स्वामिन्त्वं हि स्थिरो भव।
उमया सहितः शम्भुश्चन्द्रेण संस्कृतः पुरा।।

निराकारश्च साकारः पुनश्चैवाभवत् पुरा।
प्रसन्नश्चैव देवानां क्षेत्रमप्यन्नहेतवे॥
चन्द्रस्य यशसे तत्र नाम्ना चन्द्रस्य वै स्वयम्।
सोमेश्वरश्च नाम्नासीद् विख्यातो भुवनत्रये॥
(शिवपुराणे १।४५।४२-४४)

हे स्वामिन्! त्वमुमया सहात्रावस्थानं कुरु। चन्द्रो मन्त्रेण शम्भुप्रतिष्ठामकरोत्। प्रभुः निराकारोऽपि साकारोऽभूत्। शिवः प्रसन्नो भूत्वा, तत्क्षेत्रमुत्तमं यज्ञीयस्थानं कर्त्तुं तथा चन्द्रस्य यशोनिमित्तं च चन्द्रस्य नामानुसारं "सोमेश्वर" नाम्ना त्रिभुवने विख्यातोऽभवत्।

प्रभास-नामतात्पर्यं, **महाभारते**--(शैलपर्वणि ३६।७६।८०)

अमावस्यां महाराज नित्यशः शशलाञ्छनः।
स्नात्वा ह्याप्यायते श्रीमान् प्रभासे तीर्थ उत्तमे॥
अतश्चैनं प्रजानन्ति प्रभासमिति भूमिप।
प्रभां हि परमां लेभे तस्मिन्नुन्मृज्य चन्द्रमाः॥

अस्मिन्नुत्तमतीर्थे शशाङ्कः प्रत्यमावस्यां स्नात्वा परिवर्द्धितो भवेत्। यतोऽत्र स्नात्वा चन्द्रः परमप्रभां प्राप्तवान् तेनेदं तीर्थं प्रभासनाम्ना लोके प्रसिद्धम्।

अत्र प्रभासतीर्थे यदुवंशीया द्वापरयुगावसाने, परस्परक्षयकारि-संग्रामं कृत्वा निधनं गताः। एवमत्रैव लीलाविग्रहधारी श्रीकृष्णः कलियुगारम्भ प्रथमदिने। नरदेहत्यागमकरोत्। तदुक्तं **भागवते** १२।२ अध्याये।

(३६) ऊर्द्ध्वौष्ठो भैरवपर्वते।

अवन्त्याञ्च महादेवी लम्बकर्णस्तु भैरवः॥

अवन्तीदेशे सिप्रानदीतीरे भैरवपर्वते सतीदेव्या उर्द्धोष्ठो अत्यपतत्, तत्र पीठाधिष्ठात्री देवी "महादेवी" लम्बकर्णो भैरवः। अवन्तीदेशस्य अधुनातनं नाम उज्जयिनी। मध्यभारत-स्थितगोवालियारान्तर्गता उज्जयिनी।

## अवन्ती-पीठरहस्यम्

**स्कान्दे**-- अयोध्या मथुरा माया काशी काञ्ची अवन्तिका।
पुरी द्वारावती चैव सप्तैता मोक्षदायिकाः॥

स्कन्दपुराणान्तर्गत "आवन्त्यखण्डे" अवन्ती-पीठमाहात्म्यं विशदरूपेण वर्णितम्। अवन्त्यां शङ्करेण सह शङ्करी सदा विराजते। "यत्रास्ते सततं देव उमया सहितः शिवः" (४३।२२)। शक्तिसङ्गमतन्त्रे अवन्तीमहापीठं कालिकाक्षेत्रमिति उल्लिखितम्

ताम्रपर्णीं समासाद्य शैलार्द्धशिखरोर्द्धतः।
अवन्ती संज्ञको देशः कालिका तत्र तिष्ठति॥

अवन्त्या राजधानी उज्जयिनी नगरी, महाराज विक्रमादित्यस्य राजधानीति प्रख्याता। नगरीयं पुरा श्रीसौन्दर्य्यविद्यादिविषयेषु विशेषप्रसिद्धिलाभमकरोत्। महाराजविक्रमादित्यसमये कालिदासादिनवकवयो 'नवरत्नानि' प्रथितयशस उज्जयिनीमलङ्कृतवन्तः। हिन्दु-बौद्ध-जैन-प्रभृतिविभिन्नसम्प्रदाया उज्जयिनीं स्वीयपूज्यतीर्थमिति मन्यन्ते। अवन्तीराजचण्डप्रद्योतश्च बुद्धदेवसमसामयिक आसीत्। जैनधर्मप्रवर्त्तको महावीरोऽत्र तपस्यामकरोत्। खृष्टपूर्वचतुर्थशताब्द्यां उज्जयिनी मगधशासनाधीनाभवत्। खृष्टीयसप्तमशतके चनिकपरिव्राजको हिउयेन्साङ् महाभाग उज्जयिनीदर्शनायागतः। तदात्र हीनयानमहायानयोरुभयोः सम्प्रदाययोर्बौद्धगणा वासमकुर्वन्त, हिन्दुराजः राजत्वमकरोत्। अद्यापि नगरोपकण्ठे अशोकराजनिर्मितस्तम्भो विराजते।

अवन्तीनामतात्पर्यमुक्तं **स्कन्दपुराणे**—

देवतीर्थौषधि-बीज-भूतानाञ्चैव पालनम्।
कल्पे कल्पे च यस्यां वै तेनावन्ती पुरी स्मृता॥

देवता-तीर्थ-ओषधि-बीज-भूतगणानाञ्च पालनमत्रैव कल्पे कल्पे भवेदित्यनेनेयं पुरी "अवन्ती" नाम्नाभिहिता। अवन्तीपुरी कथम् "उज्जयिनी" इति नाम प्राप एष वृत्तान्त उक्तस्तत्रैव ४३ तमाध्याये देवीभागवते च।

पुरा त्रिपुरासुरो ब्रह्मणो वरेण महापराक्रमशाली भूत्वा, देवान् भृशमुत्पीडयामास। तत्प्रतिकारप्रार्थिनो देवा ब्रह्मसमीपं गत्वा तस्मै दुःखवृत्तान्तं निवेदितवन्तः। तदा देवैः सह ब्रह्मा स्वयंमहाकालवनान्तर्गतावन्तीपुरीमध्ये यत्र शङ्कर्यासह शङ्करो विराजते, तत्र गत्वा देवादिदेवं महादेवं त्रिपुरचेष्टितं सर्वं न्यवेदयत्। तत् श्रुत्वा महादेवो देवगणैः सहावन्तीश्मशाननिलयं गत्वा त्रिपुरासुरपराभवार्थं भगवतीं चण्डिकां तुष्टाव। महादेवस्य स्तवे तुष्टा चण्डिकाविर्भूय महादेवमवदत्—

महादेवस्य पाशुपतास्त्रलाभः

म्रियतां भोः सुरश्रेष्ठ वरं मन्त्रोऽभिवाञ्छितम् ।
सर्वं त्वयोक्तं यच्छामि जगतामुपकारकम् ।।

हे सुरश्रेष्ठ महादेव त्वम्मामभिलषितं वरं प्रार्थयस्व जगतो हिताय तव प्रार्थितं सर्वं वस्तुजातं प्रयच्छामि। तदा शिवश्चण्डिकासमीपे वरप्रार्थनामकुर्वत।

यदि तुष्टासि वै देवि! देहि मे वरमुत्तमम्।
येन हन्मि महादैत्यं त्रिपुरं देवकण्टकम् ।।

हे देवि! यदि त्वं मयि प्रसन्नासि, तदा मह्यमुत्तमवरप्रदानं कुरु। यथा अहं देवकण्कं महादैत्यं त्रिपुरासुरं निहन्तुं शक्नोमीति। ततो भगवती चण्डिका महादेवाय पाशुपतास्त्रं दत्वावदत्, हे महादेव! मया तुभ्यमिदं दैत्यनाशकरं परमास्त्रं पाशुपतं प्रदत्तं, तेनास्त्रेण दुष्टदैत्यो हन्यतामिति। भगवति रुद्रे पाशुपतास्त्रप्रहारेण त्रिपुरासुरं निहत्य पुनरवन्तीपुरीं प्रत्यागते देव-महर्षि-सिद्ध-गन्धर्व-मानवानां समवेतकण्ठे जयध्वनिरुत्थितोऽभवत्।



उज्जितो दानवो यस्मात् त्रैलोक्ये स्थापितं यशः।
तस्मात् सर्वैः सुरश्रेष्ठै ऋषिभिः सनकादिभिः।
कृतं नाम अवन्त्याश्च उज्जयिनीति पावनी ।।(५३)।।

यतस्त्रिपुरासुरं जित्वा त्रैलोक्ये यशः संस्थापितमभवत् अतएव सुरश्रेष्ठगणाः सनकादय ऋषयः च अवन्ती नामान्तरमुज्जयिनीति कृतवन्तः। एषा पापनाशिनी चेति।

अवन्ती च पुरा प्रोक्ता सर्वकामवरप्रदा
अद्यावधि पुरी व्यास उज्जयिनी समाश्रिता (५४)

सनत्कुमारोऽवदत्, हे व्यास! सर्वकामवरप्रदा "अवन्ती पुरी" अधुनातः उज्जयिनीनाम्ना प्रसिद्धा भवेत्।

(४०) चिवुके भ्रामरी देवि विकृताक्षो जलस्थले।
भैरवः सर्वसिद्धिशः तत्र सिद्धिरनुत्तमा ।।

जलस्थले अर्थात् जलस्थाने सतीदेव्याः चिवुकस्य पतनात् पीठाधिस्थात्री देवी भ्रामरी, सर्वसिद्धिश्वरो विकृताक्षो भैरभः। अत्र महापीठे साधकः सर्वो-

त्तमसिद्धिं लभते। जनस्थानश्च रामायणोक्तदण्डकारण्यस्यांश विशेषः, पञ्चवटी (नासिको वा) जनस्थानान्तर्भुक्तासीत्। रामायणटीकाकार-रामानुजमतेन दण्डकारण्यस्य यत्रांशे रावण-नियोजितसैन्यवाहिन्यासीत्, स एव "जनस्थानं-जनस्थानं नाम दण्डकारण्ये रावणवलनिवेशनस्थानम्" अत्रैव रावणानुचर-खर-दूषणप्रभृतिसैन्यगणा अवस्थिताः। पञ्चवटीनामान्तरं नासिकम्।

अत्र नासिके लक्ष्मणः शूर्पनखायाः नासिकाच्छेदनमकरोत्। नासिकस्य "सप्तश्रृङ्गी" देवी-पीठं प्रसिद्धम्।

(४१) "गण्डो गोदावरीतीरे विश्वेशी विश्वमातृका दण्डपाणिर्भैरवस्तु।।

गोदावरीनदीतीरे यत्रस्थाने सतीदेव्या गण्डपातोऽभवत्, अत्र पीठाधिष्ठात्री विश्वेशी विश्वमातृका देवी, दण्डपाणिर्भैरवः। गोदावरी—गां स्वर्गं ददाति इति गोदा। गोदानां श्रेष्ठा इति गोदावरी। या "गां" स्वर्गं ददाति सा "गोदा"। स्वर्गदानकारिणीनां मध्ये या श्रेष्ठा (वरी) सा गोदावरी, दाक्षिणात्यस्य पूण्यतोयः नदीविशेषः। जलशुद्धिमन्त्रे द्विजातयः प्रत्यहं गोदावरीमावाह्य जलशुद्धिं कुर्वन्ति।

गङ्गे च यमुने चैव गोदावरि सरस्वति।
नर्मदे सिन्धो कावेरि जलेऽस्मिन् सन्निधिं कुरु।।

उत्तरभारते यथा गङ्गायाः स्थानं, दक्षिणभारते तथा गोदावर्याः स्थानम्। अस्या नामान्तरं "गौतमीगङ्गा"। पञ्चवटीतः (नासिकतः) नवक्रोशदूरे "त्र्यम्बकेश्वर"ज्योतिर्लिङ्गम्। अस्य समीपवर्तिब्रह्मगिरिनामक-पर्वतात् पुण्यसलिला गोदावरी समुत्पन्ना। यथा भगीरथस्य तपस्यया गङ्गा भूतलेऽवतीर्णा सती "भागीरथी"ति नाम्ना प्रसिद्धाभवत्। तद्वन्महर्षेर्गौतमस्य तपसा तुष्टस्य महादेवस्य जटाजालतो गङ्गा गोदावरीरूपेणावतीर्णा सती "गौतमीगङ्गा" नाम्ना सुप्रसिद्धाऽभूत्। शिवपुराणे ज्ञानसंहितायां (५२-५-४) अध्यायेषु ब्रह्माण्डपुराणे च एतद् विशेषेण वर्णितम्।

प्रकारान्तरम्—

वामगण्डे तु राकिणी
भैरवो वत्सनाभस्तु तत्र सिद्धिर्न संशयः।।

गोदावरीतीरे सती-देव्या वामगण्डो न्यपतत्, तत्र पीठाधिष्ठात्री देवी राकिणी, भैरवः वत्सनाभः। तत्र साधकस्य निःसंशयं सिद्धिलाभो भवेत्।

"राकिणी" तन्त्रोक्तषट्चक्राधिष्ठात्री देवी। षट्चक्रान्तर्गतशिवशक्ति-योगो यथा,—(१) मूलाधारपीठे चतुर्दले शिवस्य नाम स्वयम्भू-ब्रह्मशक्तिः डाकिनी। (२) स्वाधिष्ठानपीठे षड्दले द्वितीयशिवो विष्णुः शक्तिः शाकिणी। (३) मणिपुरपीठे दशदले तृतीयशिवो-रुद्रः, शक्तिः लाकिनी। (४) अनाहत-पीठे द्वादशदले चतुर्थशिवो ईशानः, शक्तिः काकिनी। (५) विशुद्धपीठे षोडशदले पञ्चमशिवः सदाशिवः शक्तिः शाकिनी। (६) आज्ञापीठे द्विदले षष्ठशिवः ॐङ्कारात्मकः परशिवः, शक्तिः हाकिनी।

स्वाधिष्ठाने चक्रे राकिणिशक्तिध्यानं **श्रीनिगमलतातन्त्रे**—

तत्रैव सततं भाति राकिणी मोहिनी शुभा।
दिव्याम्बरधरा मत्ता दिव्याभरणभूषिता॥
चतुर्भुजा महामाया विष्णुना रमते सदा।
विष्णुना सह सा देवी पालयतेऽखिलं जगत्॥(३१।६-७)

स्वाधिष्ठानचक्रे राकिनीदेवी सर्वदा प्रदीप्ता, मनोहारिणी, मङ्गलमयी, दिव्यवस्त्र-परिधाना, ब्रह्मामृत-पान-मत्ता दिव्यालङ्कारभूषिता चतुर्भुजा महामायास्वरूपिणी। एषा सर्वदा विष्णुना सह क्रीड़ति। एवमखिलजगद् विष्णुना सह पालयति च।



(४२) "रत्नावल्यां दक्षः गण्डः कुमारी भैरवः शिवः" (तन्त्रचूडामणिः) रत्नावली-प्रदेशे सतीदेव्या दक्षगण्डो न्यपतत्, तत्र पीठाधिष्ठात्री देवी कुमारी (मतान्तरे शिवा) भैरवः शिवः (मतान्तरे कुमारः)

रत्नावलीपीठस्थानावस्थितिः सम्यक् न ज्ञायते। हुगलिप्रदेशान्तर्गत-रत्नाकर (कानानदी)तीरस्थितखानाकूलकृष्णनगरे एतत् पीठस्थानमिति कैश्चिदनुमीयते। तत्र घण्टेश्वरशिवः प्रसिद्धः। केचिद्वदन्ति नेपालस्य वाग्मती-रत्नावलीनद्योः सङ्गमस्थाने प्रमोदतीर्थे पीठस्थानमिति। वाग्मतीनद्याः पश्चिमतीरे सुप्रसिद्धं पशुपतिनाथ-मन्दिरं विद्यते। कुमारीपीठं देवीभागवते नामावल्यां देवीमाया-पूर्य्यां कुमारीनाम्ना प्रसिद्धा "मायापूर्य्यां कुमारी स्यात्" (७।३०।६४)।

(४३) "मिथिलायामुमादेवी वामस्कन्धो महोदरः"

मिथिलायां सतीदेव्या वामस्कन्धो न्यपतत्, तत्र पीठाधिष्ठात्री देवी उमा, (मतान्तरे महादेवी) महोदरो भैरवः। मिथिला नेपालस्य 'तरायेजनकपुररोड'

ष्टेशनसन्निकटे स्थितं पीठस्थानम्। तत्र देवी प्रस्तरमयी, तत्समीपे गौतमाश्रमः। न्यायदर्शनप्रणेता गौतम ऋषी राजर्षिजनकस्य पुरोहित आसीत्। तस्य तपस्यास्थानमेव गौतमाश्रमः। स च 'भरोवा' मण्डलान्तर्गते ब्रह्मपुरे अवस्थितः। मिथिलाराज्यस्य नामान्तरं विदेहराज्यम्, तत् बिहारप्रदेशान्तर्गतम् अधुना तत् "त्रिहुतं" तीरभुक्तिर्वेति नाम्नाभिहितम्।

शक्तिसङ्गमतन्त्रे विदेहराज्यस्य (तीरभुक्तिराज्यस्य) सीमा निर्दिष्टा वर्त्तते।

गण्डकी तीरमारभ्य चम्पारण्यान्तकं शिवे।
विदेहभूः समाख्याता तैरभुक्ताभिधः स तु॥

विदेहदेशस्तीरभुक्तिदेशो वा गण्डकीतीरतश्चम्पारण्यपर्यन्तं विस्तृतः। जैनधर्मप्रचारको महावीरो विदेहवासी आसीत्। बौद्धसाम्राज्यसमये विदेहराज्यं मगधसाम्राज्यभुक्तोऽभवत्।

(४४) नलहाट्यां नलापातो योगीशो भैरवस्तथा।
तत्र सा कालिका देवी सर्वसिद्धिप्रदायिका॥

नलहाट्यां सतीदेव्या नलकपातात्तत्र पीठाधिष्ठात्री "देवी कालिका" सर्वसिद्धिप्रदायिनी, भैरवो योगीशः, बीरभूम-प्रदेशे 'नलहाटी' ग्रामे पीठस्थानमवस्थितम्। 'नलहाटीष्टेशनतः क्रोशान्तरे नैऋतकोणे उच्चशिखरोपरि देव्या मन्दिरं विराजते।

(४५) कालीघाटे मुण्डपातः क्रोधीशो भैरवस्तथा।
देवता जयदुर्गाख्या नानाभोगप्रदायिनी॥

कालीघाटे सतीदेव्या मुण्डो न्यपतत्, तत्र पीठाधिष्ठात्री देवी "जयदुर्गा" क्रोधीशो भैरवः। साधकाय नाना भोगं प्रयच्छति।

कालीघाटपीठस्थानं वर्द्धमानमण्डलान्तर्गत'काटोयार'समीपवर्त्ति-'जुरणपुरे'-ऽवस्थितम्। कलिकताकालीपीठमूनविंशतिसंख्यकं पूर्वमेवोक्तम्।

(४६) वक्रेश्वरे मनःपातो वक्रनाथस्तु भैरवः।
नदी पापहरा तत्र देवी महिषमर्दिनी॥

वक्रेश्वरे सतीदेव्याः मनः (भ्रूमध्यं) न्यपतत्, तत्र पीठाधिष्ठात्री देवी महिषमर्दिनी वक्रनाथो भैरवः।

तत्र पापहरानाम्नी नदी प्रवहमाणा वर्त्तते। वक्रेश्वरमहापीठं 'वीरभूम'-मण्डलान्तर्वर्ति 'दुवराजपुर' समीपे अवस्थितम्। महामुनिरष्टावक्रो अत्र स्थाने तपस्याचरणेन सिद्धिमलभत। अत्र स्थाने सप्ताष्ठसंख्यकान्युष्णप्रस्रवणानि सन्ति। चतुर्दिक्षु प्राचीरवेष्टितं देवीमन्दिरम्। अष्टधातुनिर्मिता देवीमूर्त्तिः। अत्र पीठे विख्यातः 'अघोरीबाबा'नामकस्तान्त्रिकः सन्न्यासी सिद्धिलाभमकरोत्।

वक्रेश्वरः शैवशाक्तानामेकं प्राचीनं तीर्थम्। तदुक्तं **ब्रह्माण्डपुराणे**—

गौड़देशे महत् क्षेत्रं वक्रेश्वर-सुसङ्गतम्।
यन्नाम-स्मरणेनापि मुच्यते सर्वकिल्विषात्॥

गौड़देशे वक्रेश्वरो नाम महत् क्षेत्रमस्ति, यन्नामस्मरणमात्रेण मानवः सर्वपापाद् विमुच्यते।

"अष्टावक्रः"—वक्रेश्वरशिवोत्पत्तिरुच्यते। सत्ययुगे महातपसोऽष्टावक्रस्य नाम "सुव्रत" आसीत्। एकदा लक्ष्मीस्वयम्बर-सभायां देवता-गन्धर्व-सिद्ध-चारणप्रभृतयः सर्वे उपस्थिता आसन्। तस्यां सभायां देवराज इन्द्रः प्रथमं लोमशमुनिं पाद्यार्घाचमनीयानि समार्पयत्। तद् दृष्ट्वा सुव्रतस्य क्रोधेनाङ्गानि वक्राण्यभवन्। तस्मात्तस्याष्टावक्र इति नामाभवत्। हेतुनानेनाष्टावक्रः—सुव्रत एतत् स्थानमागत्य महादेवमुद्दिश्य कृच्छ्रतपस्यामकरोत्। महादेवः सुप्रसन्नो भूत्वा तदभिमतवरमदात्—

तमुद्दिश्य तपस्तेपे स च वक्रो महातपाः।
तं मुनिं सुप्रसन्नोऽभूत् स स्वयं पार्वतीपतिः॥

तदवधि अष्टावक्रमुनिनाराधितत्वेन वक्रनाम्ना वक्रेश्वरशिवनाम्ना वा प्रसिद्धोऽभवत्।

"पापहरा"—वक्रेश्वरतीर्थे क्षारकुण्डं, भैरवकुण्डम्, अग्निकुण्डं, जीवकुण्डं (अमृतकुण्डं) सौभाग्यकुण्डं ब्रह्मकुण्डञ्चेति नामभिरुष्णप्रस्रवणानि वर्त्तन्ते। एतेषां कुण्डानां जलानि रोगनाशकानि पुण्यप्रदायीनि। क्षारकुण्डस्य दक्षिणेन "पापहरा" नाम्नी नदी विद्यते। अत्र स्नाने पापानि नश्यन्ति।

(४७) यशोरे पाणिपद्मञ्च देवता यशोरेश्वरी।
चण्डश्च भैरवस्तत्र यत्र सिद्धिमवाप्नुयात्॥

यशोरे सतीदेव्याः पाणिपद्मं न्यपतत्, तत्र पीठाधिष्ठात्री देवी यशोरेश्वरी, चण्डो भैरवः। अत्र साधकानां सिद्धिलाभो भवेत्।

यशोरेश्वरी-महापीठं 'खुलना' मण्डलान्तर्गत–'ईश्वरी' पुरे अवस्थितम्। 'साहानाबाद-रेलष्टेशनतः ईश्वरीपुरं सार्द्ध-द्वादशयोजनानि इच्छामती-यमुनयोः सङ्गमस्थानाद् दूरे वर्त्तते। प्राचीन यशोरम् यशोहरम् इति वर्त्तमाने प्रसिद्धम्। यशोरेश्वरी-पीठमूर्त्तिः कषपट्टिकानिर्मिता लोलरसना भीषणा कालीमूर्त्तिः। किन्तु प्रोक्तमूर्त्तेः कण्ठदेशादधोभागे केषांश्चन निम्नांगानां चिह्नं नास्ति। प्रस्तरपिण्डमात्रं वर्त्तते। मूर्त्तिदेहो निम्ने प्रोथितो वर्त्तते। निम्नाङ्गानि सर्वाणि रक्तवस्त्रवृतानि, वत्सरान्ते परिवर्त्तितानि भवन्ति। पूजका अपि वस्त्राभ्यन्तरं द्रष्टुं न शक्नुवन्ति। भीषणाया अपि देव्या वदनमण्डले मातृहृदयसुलभं कारुण्यं सुस्पष्टमनुमीयते।

(४८) अट्टहासे चौष्ठपातो देवी सा फुल्लरा स्मृता।
विश्वेशो भैरवस्तत्र सर्वाभीष्ट-प्रदायकः॥

अट्टहासे सतीदेव्या निम्नौष्ठो न्यपतत्, तत्र पीठाधिष्ठात्री देवी "फुल्लरा" भैरवो विश्वेशः सर्वसिद्धिप्रदायकः।

फुल्लरामहापीठमेकं तान्त्रिकाभिचारस्य प्राचीनक्षेत्रम्। पुरात्र बहुसिद्ध-तान्त्रिक-साधका आसनमकुर्वन्त। तन्त्रमतस्य विविधसाधनात्र सम्पद्यते। प्रस्तरमयाधरोष्ठ एवात्र पीठदेवीत्वेन पूजितो भवति। अट्टहासः 'वीरभूम'-मण्डलमध्ये 'लाभपुर'ग्रामे अवस्थितः।

(४९) हारपातो नन्दिपुरे भैरवो नन्दिकेश्वरः।
नन्दिनी सा महादेवी तत्र सिद्धिर्न संशयः॥

नन्दिपुरे सतीदेव्याः कण्ठहारः न्यपतत्। तत्र पीठाधिष्ठात्री देवी नन्दिनी, नन्दिकेश्वरो भैरवः। अत्र तावद् ध्रुवमेव सिद्धिर्जायते। नन्दिपुरं 'वीरभौमा'-न्तर्गत "साइथिया" नामकस्थानसमीपे अवस्थितम्। अत्र देव्याः कापि मूर्त्ति-र्नास्ति। वटवृक्षद्वयमध्ये प्रस्तरमयपीठं, चतुर्द्दिक्षु प्राचीरपरिवेष्टितम्। अस्ति किम्वदन्ती, अत्र चतुर्द्दिशः प्राचीरवेष्टिता न विद्यन्ते। दैवशक्तिवलात् कापि कापि दिग् भूपतिता भवति। तत् पीठं सर्वदा निर्ज्जन-साधनास्थानम्।

(५०) लङ्कायां नूपुरञ्चैव भैरवो राक्षशेश्वरः।
इन्द्राक्षी देवता तत्र इन्द्रेणोपासिता पुरा॥

लङ्कायां सती देव्या नूपुरं न्यपतत्, तत्र पीठाधिष्ठात्री देवी "इन्द्राक्षी" राक्षशेश्वरो भैरवः, पुरात्र इन्द्र उपासनामकरोत्।

लङ्का—प्राचीनलङ्काया अवस्थितिः कुत्र इति तस्य सुस्पष्टो निर्णयो नास्ति। नानामतभेदोऽत्र दृश्यते। लङ्कास्थितदेवीपीठस्यापि निर्णयो न प्राप्यते। केषाञ्चिन्मतेन लङ्का समुद्रगर्भे निमज्जिता अधुनास्माभिर्यत् सिंहलमित्यमिधीयते तदेव प्राचीनलङ्केति प्रायेण जनानां मध्ये प्रचलति। किन्तु प्राचीनशास्त्रेषु बहुस्थानेषु लङ्का तथा सिंहलं च पृथक् निर्दिशिते। महाभारते वनपर्वणि "सिंहलात् बर्बरान् म्लेच्छान् ये च लङ्कानिवासिनः" (५१।२२)। अधिकन्तु, भागवते (५।१६।३०), देवीपुराणे (अः ४२,४६) मार्कण्डेय-पुराणे (अः ५८), बृहत् संहितायां (१४।११।१५), च लङ्का सिंहलं च पृथग्रूपेण उल्लेखिते।

पक्षान्तरेण-सिंहलस्य पुरावृत्तं पालिग्रन्थे "महावंशे" (खृीस्तीय पञ्चमशतके) लिखितं सिंहलस्यापरं नाम लङ्केति। खृीस्तीय सप्तमशतके प्रसिद्धचैनिकपरिव्राजको हिउएन् सां महाभागः सिंहलद्वीपमगमत्। तेन लिखितं—"सिंहलद्वीपस्य दक्षिण-पूर्वेण एकः पर्वतो वर्त्तते, तत् पूर्वत एव लोकैर्लङ्केति कथ्यते, तत्र यक्षादयो निवसन्ति"। रामायणे च, लङ्काया अवस्थितिरेवं वर्ण्यते—

दक्षिणस्योदधेस्तीरे त्रिकूटो नाम पर्वतः।
सुवेल इति चाप्यन्यो द्वितीयो राक्षसेश्वराः॥
शिखरे तस्य शैलस्य मध्यतोऽम्बुदसन्निभे।
शकुनैरपि दुष्प्रापं टङ्कच्छिन्ने चतुर्द्दिशि॥
त्रिंशद्योजनविस्तीर्ण्णा शतयोजनमायता।
स्वर्ण-प्राकार-संवीता हेम-तोरणसंयुता।
मायालङ्केति नगरी शक्राज्ञाप्तत्वेन निर्मिता॥
(उत्तरकाण्ड ५।२३-२५)

हे राक्षसाः! दक्षिण सागर-तीरवर्त्ती त्रिकूट-नामक पर्वतस्तत्सदृशः सुवेलनामकोऽपरश्च पर्वतो विद्येते। तस्य त्रिकूटशैलस्य शिखरमध्यभागे चतुर्दिक्षु प्रस्तरसमूहा विकीर्णा वर्तन्ते। तेन स शिखरः पक्षिणामपि दुर्गमः। अहं विश्वकर्मा तत् शिखरे इन्द्रादेशेन लङ्कापुरीनिर्माणं करोमि। तन्नगरी त्रिंशद्योजनविस्तृता, शतयोजनदीर्घा, स्वर्णप्राकारशोभिता, हेममयतोरणपरिवृत्ता च।

"लङ्केश्वररावणस्य शिवभक्तिः"—लङ्केश्वरो रावणः परमशिवभक्त आसीत्। सुप्रसिद्धशिवमहिम्नस्त्रोत्रस्य श्लोकद्वये रावणस्य शिवभक्तेरुल्लेखः कृतः। रावणः शिवमाराध्य स्वयं तस्य दशशिरांसि बलिरूपेण शिवपादपद्मे

न्यवेदयत्। शिववरात् पुनः कर्त्तृतमस्तकसमूहाः स्कन्धे संलग्नाः। एवं रावणोऽमितभक्तिप्रभावेण त्रिभुवने अजेयोऽभवत्। तद् उक्तम्—

अयत्नादापाद्य त्रिभुवनमवैरव्यतिकरं,
दशास्यो यद् बाहूनभृत रणकण्डूपरवशात्।
शिरःपद्मश्रेणीरचित-चरणाम्भोरुहबलेः,
स्थिरायास्तद् भक्तेस्त्रिपुरहरविस्फुर्ज्जितमिदम्॥(११)

हे त्रिपुरहर! रावणो अनायासेन त्रिभुवनं शत्रुसम्पर्कविहीनं कृत्वा, अतृप्तरणस्पृहाविशिष्टो विंशतिबाहुधारणमकरोत्। तत् त्वयि अचलभक्तिप्रभावेणैवाभवत्, यच्छक्तिवशतः स स्वयं मस्तकरूपपद्मसमूहैस्त्वत्पादपद्मसुसज्जितमञ्जलिमदात्।

अमुष्य तत्-सेवा-समधिगतसारं भुजवलं, बलात्
कैलासेऽपि त्वदधिवसतौ विक्रमयतः।
अलभ्या पातालेऽप्यलस-चलितांगुष्ठशिरसि,
प्रतिष्ठा त्वय्यासीद् ध्रुवमुपचितो मुह्यति खलः॥ (१२)

तव-सेवा-कृपया भुजवलं लब्ध्वा बाहुसमूहै र्यदा रावणस्तव वासस्थानं कैलाशं लङ्कायां नेतुं विक्रमं प्रकाश्य उद्यतोऽभवत्, तदा त्वं हेलया निजपादाङ्गुष्ठाग्रभागेन तन्निपीड्य पातालेऽपि दीर्घकालं तदावस्थानमकार्षीः। खलो जनः संवर्धितः सन् कृतोपकारं विस्मरति। "ततो ब्रह्मनन्दनः पुलस्त्यस्तामुद्धार"।

लङ्केश्वररावणविरचितं सप्तदशश्लोकनिबद्धं शिवताण्डवस्तोत्रं विख्यातम्।

जटाटवी-गलज्जल-प्रवाहप्लावितस्थले,
गलेऽवलम्ब्य लम्बितां भुजङ्गतुङ्गमालिकाम्।
डमड् डमड् डमड् डमन्निनादवड् डमर्वयम्,
चकार चण्ड-ताण्डवं तनोतु नः शिवः शिवम्॥(१)॥

लङ्का-पीठाधिष्ठात्त्र्या इन्द्राक्षीदेव्या ध्यान-स्वरूपम्—

इन्द्राक्षीं द्विभुजां देवीं पीतवस्त्रद्वयान्विताम्।
वामहस्ते वज्रघटां दक्षिणेन वरप्रदाम्॥
इन्द्राक्षीं सहयुवतीं नानालङ्कारभूषिताम्।
प्रसन्नवदनाम्भोजामप्सरोगणसेविताम्॥

(श्रीतन्त्रनिधौ)

इन्द्राक्षी देवी द्विभुजा पीतवस्त्रयुग्मान्विता वामहस्ते वज्रधारिणी तथा दक्षिणहस्ते वरप्रदायिनी च। इन्द्राक्षी युवतीगणपरिवेष्टिता नानालङ्कार-भूषिता सुप्रसन्नवदना अप्सरोगणसेविता च।

(५१) विराटदेशमध्ये तु पादांगुलिनिपातनम्।
भैरवश्चामृताख्यश्च देवी तत्राम्बिका स्मृता॥

विराट-नगरमध्ये सतीदेव्या वामपादांगुलिसमूहो न्यपतत्, तत्र पीठाधिष्ठात्री देवी "अम्बिका" अमृताख्यो भैरवः। विराटदेशो महाभारतोक्तविराट-देशो मत्स्यदेशो वा राजपुतनायां जयपुर आलोयार-भरतपुरमण्डलेऽवस्थितः। पञ्चपाण्डवा द्वादशवर्षीयवनवासान्ते वत्सरमेकमत्रस्थाने अज्ञातवासमकुर्वन्त। एतन् महाभारतविराटपर्वणि वर्णितम्।

शक्तिसङ्गमतन्त्रस्य ३य खण्डे ७म पटले षट्पञ्चाशद्देशविभागप्रकारणे उक्तम्—

वैदर्भदेशादुर्द्धञ्च इन्द्रप्रस्थाच्च दक्षिणे।
मरुदेशात् पूर्वभागे विराटः परिकीर्त्तितः॥



विराटदेशो विदर्भादुत्तरेण, इन्द्रप्रस्थतो दक्षिणेन, तथा मरुदेशात् पूर्व-दिशि अवस्थितः। अम्बिकामहापीठस्यावस्थितिः सम्यङ् न ज्ञायते। "लक्षण-समुच्चय" ग्रन्थे अम्बिकाध्यान-स्वरूपमुक्तं यथा—

सिंहारूढाम्बिका त्र्यक्षा भूषिता दर्पणोद्वहा।
दक्षिणे तु करे प्रोक्तो वरः साधारणः सदा
खड्ग-खेट-धरा द्वाभ्यां कर्त्तव्या च चतुर्भुजा॥

अम्बिका-देवी सिंहवाहिनी, त्रिनयना नानालङ्कारभूषिता, चतुर्भुजा वामहस्ते दर्पणं दक्षिणहस्ते वरमुद्रामेवमपरहस्तद्वये खड्गं खेटकञ्च धारयति।

## दुर्गानामस्मरणमाहात्यम्

पाण्डवानामज्ञातवाससमये युधिष्ठिरस्तवे तुष्टा, भगवती जगज्जननी दुर्गादेवी युधिष्ठिरायाभिलसितवरं दत्वा स्वयं दुर्गानामस्मरण-माहत्म्यं प्रकाशयति।

ये च संकीर्त्तयिष्यन्ति लोके विगत-मत्सराः ।
तेषां तुष्टा प्रदास्यामि राज्यमायुर्वपुः सुतम् ॥ (३१)
प्रवासे नगरे वापि संग्रामे शत्रु-सङ्कटे ।
अटव्यां दुर्गकान्तारे सागरे गहने गिरौ ॥ (३२)
ये स्मरिष्यन्ति मां राजन् यथाहं भवता स्मृता ।
न तेषां दुर्ल्लभं किञ्चिदस्मिन् लोके भविष्यति ॥ (३३)

हे राजन्! ये द्वेषशून्या जना मम नाम कीर्त्तयन्ति प्रसन्नाहं तेभ्यो राज्यं आयुः सुन्दरदेहं पुत्रं च दास्यामि। ये च प्रवासे, नगरे, संग्रामक्षेत्रे शत्रुसङ्कटे, अथवारण्ये दुर्गमकान्तारे, सागरे तथा गहनगिरिशिखरे विपन्नाः सन्तः भवानिव मां स्मरिष्यन्ति, मम कृपया तेषां किमपि दुर्ल्लभं न भविष्यतीति।

## पीठस्थाने साधनपद्धतिः

सर्वज्ञानमयी जगदम्बा शिवं प्रति एकपञ्चाशत्-पीठ-विवरणमुक्त्वा, तेषु पीठेषु कया पद्धत्या जप-पूजादि-साधना कर्त्तव्या तदप्युक्तवती—

एतास्ते कथिताः पुत्र पीठानामधिदेवताः ।
क्षेत्राधिपं विना देव पूजयेत् पीठदेवताम् ।
भैरवैर्ह्रीयते सव जप-पूजादि-साधनम् ॥
(तन्त्र-चूड़ामणौ)

हे पुत्र! प्रोक्त-पीठस्थानेषु याः पीठ-देवता भैरवा पीठाधिष्ठातृदेव्यश्च तत् सर्वं तुभ्यमुक्तम्, हे देव! क्षेत्राधिपतिं भैरवं विना यः कश्चित् केवलं पीठदेवीं पूजयेत् तस्य जपपूजादिकं सर्वं भैरवगणा अपहरन्ति।

अज्ञात्वा भैरवं पीठंपीठशक्तिञ्च शङ्कर।
प्राणनाथ न सिध्येत्तु कल्पकोटिजपादिभिः ॥

हे प्राणनाथ शङ्कर! पीठस्याधिष्ठातृभैरवस्य पीठं तथा शक्तेश्च तत्त्वमज्ञात्वा पीठस्थाने उपविश्य कल्पकोटि-कालं यावत् पूजा-जपाद्यनुष्ठानं कुर्वन्नपि न सिद्धिमवाप्नुयात्। तन्त्रशास्त्रे पीठस्थाने जप-पूजादि-साधनाया विशेषमाहात्म्यं तथाशुफलदायित्वञ्च वर्णितं। किन्तु यदि कोऽपि साधकः पीठस्थाने साधनां कुरुते तर्हि तत्पीठस्य पुरावृत्तं, पीठभैरवं पीठाधिष्ठात्रीं देवींश्च तत्त्वतः सम्यग् ज्ञात्वा साधनां कुर्याद् अन्यथा साधना फलप्रसूर्न भवेदिति।

तन्त्रचूड़ामणौ पार्वतीशिवसंवादे एक-पञ्चाशद्विद्योत्पत्तौ, एक-पञ्चाशत्-पीठनिर्णयः कृतः।

## देव्या जननीत्व-जायात्व-रहस्यम्

शिवं प्रति देव्याः पुत्र इति प्राणनाथ इति च सम्बोधनं युगपत् कथं सङ्गच्छते। शिवं प्रति देव्या जननीत्वस्य जायात्वस्य च कथं सिद्धिर्भवेत्। तदुक्तं बृहद्धर्म्मपुराणे (मध्यखण्डे षष्ठाध्याये)—

या मूला प्रकृतिः सूक्ष्मा परमा निरुपाधिका।
ब्रह्माण्डकोटिकोटीनां मूलं मूलान्तवर्ज्जिता॥(१२)

या मूला प्रकृतिः परमा सूक्ष्मा, निरूपाधिका च या अनन्त-ब्रह्माण्डानां मूलकारणभूता आद्यन्तविरहिता, या च सत्त्व-रज-स्तमोगुणत्रयस्याधाररूपा, सैव कारणार्णवे रजोगुणतो ब्रह्माणं, सत्त्वगुणतो विष्णुमेवं तमोगुणतः शिवमसृजत्।

विद्यारूपा च प्रकृतिः सकाशे तु निराकृतिः।
पुरुषान् भ्रमतः प्राह सृजाव संहरेति च।
तदर्थं तप इत्युक्त्वा तत्रैवान्तरधीयत॥१०४॥

अनन्तरं विद्यारूपा प्रकृतिसकाशे गुप्तभावेन स्थित्वा, ब्रह्मविष्णुशिवा इति कारणार्णवे भ्रमत्पुरुषत्रयमुवाच—हे ब्रह्मन्! त्वया सृष्टिः क्रियताम्, हे विष्णो! त्वं पालय, हे महेश्वर! त्वं संहर। तदर्थं भवन्तस्तप आचरन्तु इति॥ "तपः तपः" इत्युक्त्वा आकाशे अन्तर्हिताऽभवत्।

अनन्तरं ब्रह्म-विष्णु-शिवाश्च कारण-सलिले भासमानास्तपस्याचरण-मकुर्वन्।

तान् दृष्ट्वा तपसाविष्टान् देवी प्रकृतिरुत्तमा।
को मां ग्रहीष्यतीत्येवं बभ्राम शवरूपिणी॥१०६॥
तत्रादिर्नामितो ब्रह्मा मां दृष्ट्वा भयमाश्रितः।
चतुर्दिक्षु चतुर्वक्त्रो बभूव तदनन्तरम्॥१०७॥
मध्यमोऽभूज्जले मग्नो मुद्रिताक्षो विचेतनः।
ततः परं शिवं याता स तां जग्राह सादरः॥१०८॥

ब्रह्म-विष्णु-शिवान् तपस्यानिरतान् दृष्ट्वा परमा प्रकृतिः देवी "को मां ग्रहष्यतीत्युक्त्वा" शवाकारेण भासमाना सती तेषां समीपे समुपस्थिता। तद्दृष्ट्वा ब्रह्मा भीतचेताश्चतुर्द्दिक्षु चतुर्म्मुखोऽभवत्। विष्णुर्मुद्रिताक्षो गतचेतनो जलमग्नोऽभूत्। ततः परं शवरूपिणी मूलप्रकृतिः शिव-समीपमगात्, शिवश्च तां सादरेण जग्राह।

स त्वं साहं तद्वशगा न त्यक्ता तादृशी यतः।
तत्राहं सृष्टिकर्त्तारं चक्रे ब्रह्माणमीश्वरम्॥
विष्णुञ्च पालकं चक्रे शयानो यो जलेऽभवत्।
संहारकारकं त्वञ्च शिवनामा न मत्परम्॥११०॥

सती महादेवमवदत्—त्वमसौ तपस्यारतः शिवस्तथाहमियं शवरूपिणी परमा प्रकृतिः। यतस्त्वं तत्काले शवरूपपरित्यागं नाकार्षीः तदेवाहं तववशवर्त्तिनी जाया भवामि। ममाज्ञया ब्रह्मा सृष्टिकर्त्ताऽभूत्। तत्कालीनजलमग्नो विष्णुः पालनकर्त्ताभवत्। एवं शिवनामकोऽक्षरपुरुषस्त्वं संहारकर्त्ता भव।

## पीठ-शब्द-निरुक्तिः

पीठं बाह्यमाभ्यन्तरञ्च,—पीठशब्दार्थ आसनं वासयोग्यस्थानं वा। यत्र स्थाने तीर्थे वा जगन्माताऽधिष्ठिता भवति तदेव देवीपीठम्। दक्षयज्ञे दक्षमुखात् शिवनिन्दां श्रुत्वा सतीदेवी देहमत्याक्षीत्। देवादिदेवो महादेवः सतीविरहदुःखेन शोकातुरस्तदीयमृतशरीरं स्कन्धे कृत्वा, उद्भ्रान्तचित्तेन इतस्ततो बभ्राम। तद्दृष्ट्वा ब्रह्मादिदेवाः शङ्कितचित्ता विष्णुं शरणं गताः। विष्णुश्च स्वीयसुदर्शन-चक्रेण देव्या मायिक-विग्रहं खण्डशः कृत्वाऽच्छिनत्। एवं रूपेण विष्णुचक्रेण सतीदेह एकपञ्चाशत्खण्डैर्विभक्तः। विष्णुस्तानि खण्डिताङ्गप्रत्यङ्गानि समग्रभारतवर्षस्य विभिन्नस्थानेषु न्यपातयत्। यत्र यत्रस्थाने सतीदेव्या एकैकमङ्गप्रत्यङ्गखण्डमपतत्, तत्रतत्रैव पीठस्थानमेकैकमुत्पन्नमभूत्। पश्चिमे हिंगुला (हिंलाज) पूर्वेण चट्टलपर्वतः, उत्तरेण हिमालयः, दक्षिणस्यां लङ्का। एतच्चतुःसीमाबद्ध-भारतभूमण्डलस्य नाना स्थानेषु जगज्जनन्याः सतीदेव्या लीलाविग्रहस्याङ्गप्रत्यङ्गपातेन एकपञ्चाशत्पीठसृष्टिरभूत्। एकैकपीठस्थानमेकैकं पुण्य-तीर्थम्। एका अद्वितीया विश्वमाता गुणक्रियाभेदेन विभिन्नमूर्त्या विभिन्नपीठेषु प्रकटिता भूत्वा भक्तगणान् कृतार्थान् करोति। तदुक्तं योगिनीतन्त्रे—

यत्र यत्र महादेव्या अङ्गप्रत्यङ्गपातनम्।
महाविष्णुश्चक्रपाणिश्चकार धरनीतले।।
तत्र तत्र जगद्धात्री ब्रह्मज्योतिःस्वरूपिणी।
पाषाणं रूपमास्थाय भक्तानां मुक्तिहेवते।
साधकानाञ्च सिद्धयर्थं नित्यं विहरति क्षितौ।।

महाविष्णुश्चक्रधारणेन पृथिव्यां यत्र यत्र स्थाने सतीदेव्या अङ्गप्रत्यङ्गान्यपातयत्, तत्र तत्र स्थाने ब्रह्मज्योतिःस्वरूपिणी जगन्माता भक्तानां मुक्तिहेतवे तथा साधकानां सिद्धिनिमित्तं पाषाणमयीं मूर्त्तिमवलम्ब्य नित्यं विराजितास्ते।

तत्रैव भैरवः शम्भुर्नानारूपधरः स्थितः।
रक्षार्थं साधकानाञ्च हिताय जगतामपि।
उपासते स्वयं देवीं करुणानिधिरीश्वरः।।

शम्भुरपि तत्र तत्र स्थाने नानारूपेण भैरवमूर्त्ति धारयन्नासीत्। करुणा निधिर्महादेवः साधकानां रक्षणाय, सर्वजगतां हिताय च स्वयं तत्तत् पीठस्थानेषु देवीमुपास्ते।

तन्त्रचूडामणितन्त्रस्य "पीठनिर्णय"प्रकरणे एकपञ्चाशत्पीठानां या संक्षिप्तवर्णना वर्त्तते तदवलम्ब्यालोचितम्। कुत्र कुत्र स्थाने देव्याः कतमाङ्गप्रत्यङ्गपातः, तत्र तत्राधिष्ठात्री देवी का तस्याः स्वरूपं किमेवं तदीयो भैरवः कः पीठस्थानपुरावृत्तञ्च किमिति संक्षेपेण वर्णितम्। किन्तु एतावानेव देवीपीठपरिचयः न भवति। तन्त्रशास्त्रे, आध्यात्मिक-साधना-दृष्टिकोणतः पीठस्य गभीररहस्यं यद्वर्णितं तदधिकृत्याधुना च यत् किञ्चिदालोचयामि। तान्त्रिकसाधनाय मूलभूतमेतदेव-यत्किञ्चनाध्यात्मिकतत्त्वं, तत् सर्वं देहमध्ये एव वर्त्तते, एतद्देहस्य विभिन्नाङ्गप्रत्यङ्गेषु तथा शरीरान्तर्वर्त्ति-विभिन्नचक्रेषु विभिन्न पद्मेषु वा शिव-शक्तिधामानि विद्यन्ते। एतन्मनुष्यरूपिपिण्डाण्डं ब्रह्माण्डप्रतिरूपकम्, अर्थात् ये शक्ति-समूहा "महतो महीयान्"रूपेण विशालब्रह्माण्डं परिचालयन्ति, ते शक्तिसमूहाऽपि "अनोरणीयान्" रूपेण मनुष्यरूपिणं क्षुद्रब्रह्माण्डं परिचालयन्ति। अतएव मनुष्यरूपि-क्षुद्रब्रह्माण्डपरिज्ञाने, बृहद्ब्रह्माण्डपरिज्ञानं भवति। वहिर्ज्जगति एकपञ्चाशत्पीठेषु पराशक्तिर्यथावद् विराजितास्ते। तद्वत् सा स्वदेहपुरे विभिन्नस्थानेषु पादमूलतः केशान्तपर्यन्तमान्तरपीठेऽपि नित्यं विराजिता तिष्ठति। अन्तर्मुखिसाधका बाह्यतीर्थपरिक्रमामकृत्वा, देहाभ्यन्तरस्थितान्तरपीठ एव तीर्थपरिक्रमां कुर्वन्ति।

अस्मिन् देहपुरे कुत्र वा किंनामकदेवी-पीठस्य भावना कर्त्तव्या, रुद्रयामलतन्त्रे तत् सर्वं सविशेषं निर्देशितम्। केवलमत्र प्रधानदशपीठानामुल्लेखः क्रियते।

बृहत्तन्त्रसारग्रन्थे एकपञ्चाशद्देवीपीठस्थानावस्थितिभावना द्रष्टव्या—

मूलाधारे कामरूपं हृदि जालन्धरं तथा।
ललाटे पूर्णगिर्याख्यम् उड्डियानं तदुर्द्धके।।
वाराणसीं भ्रुवोर्मध्ये ज्वलन्तीं लोचनत्रये।
मायावतीं मुखवृत्ते कण्ठे मधुपुरीं ततः।।
अयोध्यां नाभिदेशे च कट्यां काञ्चीं विनिर्द्दिशेत्।
दशैतानि प्रधानानि पीठानि क्रमतो विदुः।
ह्रस्व-दीर्घस्वरैर्वर्गैर्नमोऽन्तैः क्रमतो न्यसेत्।।

(१) मेरुदण्डमूले मूलाधारचक्रे कामरूपपीठम् (२) हृदये जलन्धरपीठम् (३) ललाटे पूर्णगिरिपीठम्, (४) ललाटोर्द्धे उड्डियानपीठम् (५) भ्रुवोर्मध्ये वाराणसीपीठम् (६) नयनत्रये ज्वालामुखीपीठम्, (७) मुखविवरे भयावती पीठम्, (८) कण्ठे मधुपुरो वा मथुरापीठम, (९) नाभौ अयोध्यापीठम्, (१०) कटिदेशे काञ्चीपीठमिति।

## पीठन्यासतत्त्वम्

शरीरस्थसर्वाङ्गप्रत्यङ्गेषु देव्याः पीठं आसनं वा विभाव्य साधकः स्वीयसर्वसत्तां देवीमयीं परिकल्प्य, "साहम्" इति देव्या सहैकत्वचिन्तनमाध्यात्मिकदृष्टौ पीठतत्त्वस्य निगूढतात्पर्यम्। पीठन्यासप्रक्रियया पादादिशीर्षान्तं शरीरस्थविभिन्नाङ्गप्रत्यङ्गान्यङ्गुल्या स्पृष्ट्वा, मनसा मन्त्रोच्चारणपूर्वकं वा तत्तद्देवीतीर्थे पीठे वा परिणतानि कर्त्तव्यानि। मेरुदण्डमूले मूलाधारचक्रे कामरूप-पीठं, तत्र देवी कामाख्या एवमुमानन्दश्च भैरवः, तत्रैव मन्त्रन्यासः कृत इति साधको विभावयेत्। एवंरूपेण शरीरस्य नाना स्थाने नाना भावेन नानाख्यया च मन्त्रांशं विन्यस्य तद् विन्यस्तमन्त्र-शक्त्याप्लावितं सर्वशरीरं शक्तिमयमेवं मन्त्रनिहितदेवतामयं सम्पन्नमिति धारयेत्। तदुक्तं भैरवतन्त्रे—

ज्ञानात्मानं प्रविन्यस्य न्यसेत् पीठमनुत्तमम्।
एवं देहमये पीठे चिन्तयेदिष्ट-देवताम्।।

स्थूलदेहमिमं चिन्मयं विभाव्य विभिन्नावयवेषु पीठन्यास-मन्त्रविन्यासं कुर्यात्। एवं-रूपे देहमयपीठे स्वेष्टदेवतां चिन्तयेत्। शास्त्रे न्यासस्यावश्यकत्व-मुक्तम्—

न्यासस्तन्मयताबुद्धिः सोऽहंभावेन पूजयेत्।
मन्त्राक्षराणि चिच्छक्तौ प्रोतानि परिभावयेत्॥

न्यासस्यावश्यकत्वमुपास्यदेवतायां तन्मयताबुद्धेरुत्पादनार्थम्। एतेन साधको उपास्य-देवतया सहैकताभावं प्राप्तः सन् सम्पूर्णरूपमन्तःप्रविष्टो भवेत्। साधको मन्त्र-शक्त्या स्वकीयदेहः सम्यग् आच्छादित इति धारणां कुर्यात् तथा स्वकीय-स्थूलात्मबुद्धिं मन्त्रमयेष्टदेवतामध्ये विलुप्तां कृत्वा, निजं मन्त्रात्मकं देवतामयमनुभवेत्।

"एकपञ्चाशत् पीठानि मातृकावर्णाश्च"—पीठतत्त्वस्य निगूढ़तात्पर्य-सम्बन्धे योगिनी-हृदय-तन्त्रे उक्तम्—

"एते पीठाः समुद्दिष्टा मातृकारूपमास्थिताः" इति। दाक्षायणीतन्त्रमते च—

पीठानि चैकपञ्चाशत् कामरूपादिकानि च।
अकारादि-क्षकारान्त-वर्णरूपाणि जज्ञिरे॥

एवं-रूपमुभय-तन्त्रमतानुसारेण कामरूपादिभिरेकपञ्चाशच्छक्तिपीठैरा-भ्यन्तरे एकपञ्चाशन्मातृकाणामथवा तदुत्पन्नैकपञ्चाशद्वर्णमालाया निर्द्देशो बोध्यः। "ललितासहस्रनामस्तोत्रे" पराशक्तिर्ललिता वा "मातृका-वर्णरूपिणीत्यभिहितं भवेत्। अस्या व्याख्यानप्रसङ्गे श्रीमद्भास्कररायेण लिखितम्—सौभाग्यभास्करव्याख्यायाम्—

"एकपञ्चाशन्मातृकावर्णा एव रूपमस्या इति"।

तत्रोक्तमातृकाविषये वर्णसमूहसम्बन्धे वा तान्त्रिककल्पानुसारेण एतद्विश्वब्रह्माण्डमथवा तत्प्रतिकृतिभूतं पिण्डाण्डं वा मानवदेहः, शब्द-ब्रह्मण एव कृतिः सृष्टिर्वा। मानवदेहे अयं कारणरूपः शब्दः "ॐ"ङ्कारः परा पश्यन्ती मध्यमा वैखरी चेति चतुर्धा स्थितः। प्रथमा द्वितीया च स्थिति-विशेषरूपेण अव्यक्तरूपा। मध्यमायां च सत्तायामेतत् शब्दब्रह्म "मातृका"-रूपेण मूलाधारादि-षट्चक्रदलोपरि व्यक्तं भवेत्। अन्तिमायां चतुर्थी वावस्थायामर्थाद् वैखर्यवस्थायां तद्व्यक्तमातृकाजन्यशब्दो व्यक्त-वर्णरूपेण

स्थूलतः कर्णगोचरो भवेत्। अतएव निरन्तरव्याप्तजगत्-कारणरूप-शब्द-ब्रह्मणो व्यक्तरूपस्य वर्णसमूहस्य विषये "अक्षरम्" (क्षयहीनम्) इत्येवमुक्तिः सर्वतोभावेन युक्तियुक्ता भवेत्। अकारादिषोड़शस्वरवर्णाः, कादि-क्षकार-पर्यन्ताश्चतुस्त्रिंशद्व्यञ्जनवर्णाः, तथा च मूलकारणीभूतशब्दब्रह्मस्वरूपम् ॐ इत्येकपञ्चाशन्मातृका एव एकपञ्चाशत्पीठदेवीस्वरूपिण्यः। मूलाधारादिषट्चक्राणामेकैकदलमेवैकैक-शक्तिपीठमेवं तदुपरिविन्यस्तमेकैकमातृका-वर्णएव एकैकपीठदेवीरूपेण विराजिता। षट्चक्रनिरूपणे विशेषालोचना द्रष्टव्या। मातृकारूपिण्याः प्रत्येक पीठदेव्या ध्यानं सिद्धशावरतन्त्रे वर्णितम्।

तन्त्रोक्त"मातृकान्यास"रूपगभीरतात्पर्यपूर्णप्रयोगेन साधकः स्वीयान्तर्देहस्य बाह्यदेहस्य च विभिन्नस्थाने मातृकावर्णसमूहं विन्यस्य स्वकीयसत्तां मन्त्रमयीं देवीमयीञ्च भावयेत्। ज्ञानार्णवे—

मूलादि ब्रह्मरन्ध्रान्तं ध्यायेद्देवीं चिदात्मिकाम्।
विन्दुश्रुत-सुधासारैस्तर्पयन् मातृकां न्यसेत्।।

मूलाधाराद् ब्रह्मरन्ध्रान्तं विभिन्नपीठे चित्स्वरूपिणीं देवीं भावयेत्। एवं विन्दुक्षरितामृतधारया सन्तर्प्य मातृकान्यासं कुर्यात्। एवैव आध्यात्मिक-दृष्टौ तान्त्रिकसाधकस्य एकपञ्चाशच्छक्तिपीठपरिक्रमा एवंरूपतीर्थ-परिक्रमफलमुक्तम् **देवीभागवते**—

एवमभ्यस्यमानस्याप्यहन्यहनि निश्चितम्।
जरामरणदुःखाद्यैर्मुच्यते भवबन्धनात्।।
ये गुणाः सन्ति देव्या मे जगन्मातुर्यथा तथा।
ते गुणाः साधकवरे भवन्त्येव न चान्यथा।। (७।३५।५२-५४)

यः साधकः प्रत्यहमेवंप्रकारेण योगाभ्यासं करोति, स निश्चितमेव जरा-मरणादिदुःख-संकुलसंसारबन्धनान्मुच्यते। अहं जगज्जननी देवी। मयि यद्-गुणसमूहो विद्यते तस्मिन् साधकप्रवरेऽपि तद्गुणसमूहो विराजते, कदाप्य-न्यथा न भवेत्। **ज्ञानार्णवतन्त्रे**-अन्तर्मातृकान्यासतः परिज्ञायते यत् शरीरस्य षट्चक्राणां दलोपरि निम्नोक्त-रीत्या मातृकावर्णसमूहस्थापनं कुर्यात्—

द्वयष्टपत्राम्बुजे कण्ठे स्वरान् षोड़श विन्यसेत्।
द्वादशच्छदहृत्पद्मे कादीन् द्वादश विन्यसेत्।।

कण्ठस्थितषोड़शदलपद्मे अर्थाद् विशुद्धचक्रे, अकारादि-षोड़शस्वर-वर्णानां न्यासं कुर्यात्, द्वादशदले हृत्पद्मे अनाहत-चक्रे, क-कारतः ठ-कार-पर्यन्तं द्वादशवर्णानां न्यासं कुर्यात्।

दशपत्राम्बुजे नाभौ डकारादीन् न्यसेद् दश।
षट्पत्रे लिङ्गमूले च व-कारादीन् न्यसेच्च षट्॥

नाभिस्थित-दशदलपद्मे मणिपुरचक्रे वा डकारात् फकारपर्यन्तान् दशवर्णान् न्यसेत्। लिङ्गमूले षड्दलपद्मे स्वाधिष्ठानचक्रे वा वकारात् लकारान्तान् षड्वर्णान् न्यसेत्।

आधारे चतुरो वर्णान् न्यसेद् वादीन् चतुर्द्दले।
हक्षौ भ्रूमध्यगे पद्मे द्विदले विन्यसेत् प्रिये॥

मूलाधारे चतुर्द्दलपद्मे मूलाधारचक्रे वा वकारात् सकारान्तान् चतुरो वर्णान् न्यसेत्। हे प्रिये, भ्रूमध्यस्थितद्विदलपद्मे आज्ञाचक्रे वा हक्षावितिवर्णद्वयं न्यसेत्।

एकैकं वर्णमुच्चार्य मनसा तु ध्रुवादिकम्।
नमोऽन्तमिति विन्यास आन्तरः परिकीर्त्तितः॥

(शाक्तानन्दतरङ्गिनी)

प्रणवादि-नमोऽन्तः अर्थाद् आदौ ॐ अन्ते नमः प्रयुज्य वर्णमेकमुच्चार्य मनसा यन्न्यासस्तदन्तर्मातृकान्यास इत्युक्तः। "बाह्यमातृकान्यासः"—शरीरस्थनिम्नोक्तावयवसमूहे मातृकावर्णसमूहस्य न्यासः कर्त्तव्यः।

**शारदातिलके—**

बाह्यं वै मातृकान्यासं शृणुष्वावहितो मम।
ललाट-मुख-वृत्ताक्षि-श्रुति-घ्राणेषु गण्डयोः॥
ओष्ठ-दन्तोत्तमाङ्गस्य दोः-पत्-सन्ध्यग्रकेषु च।
पार्श्वयोः पृष्ठतो नाभौ जठरे हृदयेंऽसके॥
क्वकुद्यंशे च हृत्पूर्वपाणिपादयुगे तथा।
जठराननयोर्न्यसेन्मातृकावर्णान् यथाक्रमम्॥

साधकोऽवहितचित्तो बाह्यमातृकान्यासं मम समीपे शृणोतु। ललाटे, मुखवृत्ते, नयनद्वये, कर्णद्वये, नासिकाछिद्रद्वये, गण्डद्वये, ओष्ठद्वये, दन्तेषु

ब्रह्मरन्ध्रे, मुखे, हस्तद्वये, तत् सन्ध्यग्रभागे, पदद्वये मुखप्रभृत्यङ्गेषु च यथाक्रमं मातृकावर्णसमूहस्य न्यासः कर्त्तव्यः।

मातृकान्यासफलसम्बन्धे उक्तमागमशास्त्रे, **गौतमीतन्त्रे**—

धन्यं यशस्यमायुष्यं कलिकल्मषनाशनम्।
यः कुर्यान्मातृकान्यासं स एव श्रीसदाशिवः।।

यः साधकः सौभाग्यप्रदं यशोवर्द्धकं आयुष्करं कलिकल्मषनाशकं च "मातृकान्यासं" करोति स साक्षात् शिवत्वं प्राप्नोति।

"एकपञ्चाशत् पीठानि श्रीचक्रञ्च"—तन्त्रोक्तसाधनायां "यन्त्रं" नाम विशेषगुरुत्वपूर्णं वस्त्वस्ति। यन्त्राणां मध्ये "श्रीचक्रं" "श्रीयन्त्रं" वा यन्त्रराजरूपेण परिगणितं भवति। विश्वब्रह्माण्डमिदं संसारचक्रं यन्त्रम् वा। समग्रविश्वब्रह्माण्ड-परिचालकशक्तिसमूह-यन्त्रमिदं पूर्णमानवदेहरूपि पिण्डाण्डस्य शक्ति-समूह-द्योतकम्। अत्र विषये भावनोपनिषत्, त्रिपुरोपनिषत्, त्रिपुरतापिन्युनिषत्, तन्त्रराजः, कामकलाविलास इत्येतेषु ग्रन्थेषु विस्तृतालोचना द्रष्टव्या।

एकपञ्चाशत् तत्त्वानि केषाञ्चिन्मते ब्रह्माण्डपिण्डाण्डयोर्नियामकान्येक-पञ्चाशत्तत्त्वान्येकपञ्चाशद्देवीपीठरूपेण परिकल्पितानि। भगवच्छङ्करा-चार्यकृतानन्दलहरीस्तोत्रस्यैकादशश्लोकव्याख्यायां लक्ष्मीधरेण एकपञ्चाशत् तत्त्वान्यालोचितानि। यथा—

पञ्चभूतानि तन्मात्रपञ्चकं चेन्द्रियाणि च।
ज्ञानेन्द्रियाणि पञ्चैव तथा कर्मेन्द्रियाणि च।।
त्वगादिधातवः सप्त पञ्च प्राणादि-वायवः।
मनश्चाहं कृतिः ख्यातिर्गुणाः प्रकृतिपुरुषौ।।
रागो विद्या कला चैव नियतिः काल एव च।
माया च शुद्ध-विद्या च महेश्वर-सदाशिवौ।
शक्तिश्च शिवतत्वं च तत्त्वानि क्रमशो विदुः।।

एतान्येक-पञ्चाशत् तत्त्वानि वायव्यसंहितादिशैवपुराणेषु च प्रति-पादितानि। एकपञ्चाशत्तत्त्वानां जगत्कारणत्वमुक्तं यथा-क्षित्यादि-पञ्चभूतानि गन्धादिपञ्चतन्मात्राणि, चक्षुःकर्णादिपञ्चज्ञानेन्द्रियाणि, वागादिपञ्चकर्मेन्द्रियाणि, त्वगादिसप्तधातवः, प्राणादिपञ्चवायवो, मनः, अहङ्कारः, ख्यातिः (ज्ञानम्), सत्वादिगुणत्रयं, प्रकृतिः, पुरुषः, रागः, विद्या,

कला, नियतिः, कालः, माया, शुद्धविद्या, महेश्वरः (रजोगुणविशिष्टसृष्टिकर्त्ता) सदाशिवः (सृष्टिकर्त्ता) शक्तिः (महेश्वर-सदाशिवयोर्रक्षणसर्ज्जनशक्तिरेवं कलात्मिका संहारिणीशक्तिः) तथा च शिवतत्त्वं (शुद्ध-बुद्ध-मुक्त-स्वरूपम्) चतुर्थपरिच्छेदे सम्यगालोचितम्। "ललितासहस्रनाम" ग्रन्थे, श्रीचक्रस्य मुख्याधिष्ठात्री देवी श्रीविद्याया ललिताम्बाया वा अपरनाम "मातृकावर्णरूपिणी", एतत् पूर्वमुक्तम्। ललितानाम्नः टीका-प्रसङ्गे दार्शनिकप्रवरश्रीमद्भास्कररायेण लिखितम्——

"मातृका वर्णान् रूपयति जनयतीति" सा। अनुत्तराख्यशिवस्य इच्छाशक्त्या योगादिक्रमेण वर्णोत्पत्तिप्रकारः सौभाग्य-सुधोदये द्रष्टव्यः। मातृकावर्णानामेव श्रीचक्रात्मकत्वं मातृकाविवेके षष्ठपटले विस्तरेण प्रतिपादितम्। अतएव सुनन्दसंहितायां मातृकाचक्रयोरैक्यविभावनं कैलासप्रस्तर इति व्याहृतं तादृशरूपवतीति वा (१६७ तमश्लोकस्य सौभाग्यभास्करभाष्यम्) एतद् व्याख्यानुसारेण मातृकावर्णसमूह एव श्रीचक्ररूपेऽस्मिन् मानवदेहे संस्थितः एक-पञ्चाशत् मातृकावर्णा एव एकपञ्चाशच्छक्तिपीठरूपेण कल्पिता इति पूर्वमेवोक्तम्। अतएव एकपञ्चाशच्छक्तिपीठरूपेण वस्तुतो यन्त्रराजश्रीचक्रस्यैवोपासना भवेत्। सुप्रसिद्धं षट्चक्रमत्र श्रीचक्रे सन्मिलितम्।



भगवान् शङ्कराचार्यः श्रीचक्रे त्रिपुरासुन्दरीदेव्या उपासनया परां सिद्धिमलभत। एतद् आनन्दलहरीटीकायां श्रीमल्लक्ष्मीधरदेशिकेनोल्लेखितम्। तस्य शारदामठे (द्वारकायां) शृङ्गेरीमठे (दक्षिणभारते) ज्योतिर्मठे (हिमालये) गोवर्द्धनमठे (पुर्यां) च अद्यापि श्रीचक्रोपासना प्रचलितास्ते। श्रीयन्त्रोपासना-सिद्ध-शङ्कराचार्यहृदये जगज्जनन्या दिव्यमूर्त्तिः प्रकटिताभूत्। निःसीमानन्दसमुद्रे निमज्जितः शङ्करः अनुपमानि "आनन्द लहरी" स्त्रोत्राण्यरचयत्। तस्मात् श्लोकद्वयमुद्धृत्य महापीठ-निरूपणमुपसंहरामि।

सुधासिन्धोर्मध्ये सुरविटपिवाटीपरिवृते,
मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे।
शिवाकारे मञ्चे परम-शिव-पर्यङ्क-निलयां,
भजन्ति त्वां धन्याः कतिचन चिदानन्दलहरीम्॥२॥

हे जगन्मातः! त्वं सुधासिन्धु-मध्यस्थित-कल्पवृक्षवाटिका-परिवृत-मणिमयद्वीपे कदम्बवृक्षसमूह-सुशोभितोपवनमध्ये, चिन्तामणिगृहे, पञ्चप्रेतशिवोपरिस्थापितपर्यङ्के, परम-शिवमयमासनं कृत्वा तत्रोपविष्टासि। कतिचन

धन्य-साधकास्त्वां चिदानन्द-लहरी-स्वरूपां ज्ञात्वा तवेदृशीं मूर्त्ति भगवतीं त्रिपुरसुन्दरीं भजन्ते।

ददाने दीनेभ्यः श्रियमनिशमात्मानुसदृशीम्,
अमन्दं सौन्दर्यस्तवकमकरन्दं विकिरति।
तवास्मिन् मन्दारस्तवक-सुभगे यातु चरणे,
निमज्जन् मज्जीवः करण-चरणैः षट्चरणताम्॥ (२६)

हे जगज्जननि! तव चरणयुगलं दीनभक्तजनेभ्यः सर्वदात्मसदृशमैश्वर्यं प्रददाति। यतो निरन्तरं सौन्दर्य-समूहरूपमकरन्दं क्षरितं भवेत् यच्च पारिजात-कुसुम-स्तवकवद् रक्तवर्णं सुमनोहरं तव तत् पादपद्मे अस्माकमन्तःकरणं निमग्नं भवतु, षडिन्द्रियैश्च भ्रमररूप-धारणं क्रियतामिति। तदेवोक्तं मेधऋषिणा सुरथाय—

तामुपैहि महाराज शरणं परमेश्वरीम्।
आराधिता सैव नृणां भोगस्वर्गापवर्गदा॥

हे महाराज सुरथ! तस्याः परमेश्वर्या देव्याः शरणापन्नो भव। सा पूजिता सती साधकाय भोगं स्वर्गमपवर्गञ्च ददाति।

अतएवोक्तं—निखिलभुवनमध्ये शक्तिरेव प्रधानं ब्रह्मेति मूलतत्त्वम्।

**प्रार्थना—**

नान्या स्पृहा गिरिसुते हृदये मदीये
सत्यं त्वमेव जगतामखिलान्तरात्मा।
भक्तिं प्रयच्छ भवतारिणि निर्भरां मे,
कामादि दोषरहितं कुरु मानसञ्च॥
इषेमासि दुर्गाषष्ठ्यां नवरात्रियोगे शुभे।
हयाद्रि-वसु-शशाङ्के शाकेऽन्तं शाक्तदर्शनम्॥

इति कामरूपान्तर्वर्त्ति-श्रीमदुग्रतारामहापीठाध्यक्ष—श्रीचक्रेश्वरभट्टाचार्य-संकलिते शाक्त-दर्शने दशमः परिच्छेदः समाप्तः।

हरिः ॐ तत् सत् ॐ

ॐ ब्रह्मार्पणमस्तु॥

श्रीयुतचक्रेश्वरभट्टाचार्यव्याकरणतीर्थदलैदेवसंकलितग्रन्थाः—

**१म् शक्ति-तत्त्वम्**—ग्रन्थोऽयं मातृभाषया पद्यच्छन्देन लिखितोऽस्ति। ग्रन्थेऽस्मिन् सृष्टिकल्पे महामायामहालक्ष्मीतो विश्वसृष्टिवर्णना, वैदिककल्पे सनातनहिन्दूनां धर्माचरणं, प्रतिवर्षं वसन्तादिषड्ऋतुषु प्रायसः प्रतिमासं प्रचलितपूजायज्ञ-व्रतशान्तिश्राद्धादिवैदिककर्मणां दार्शनिकवैज्ञानिकयुक्तिपूर्णमाध्यात्मिकज्ञातव्यविषयवर्णनं, मेधस उपदेशेन समाधिसुरथयोर्मृन्मयदुर्गा प्रतिमायां पञ्चकल्पात्मक-पूजाविशेषस्तस्यपूर्णगवेषणामूलकसाधनाप्रणाली, जीववलि-विचारः, समाधेर्निर्वाणमुक्तिः, सुरथराजस्य कर्णाटविजयो, देहान्ते सावर्णिसंज्ञकाष्टमतत्व-प्राप्तिश्च इत्यादिविषया आलोचिताः इति।

**२यं-तारार्च्चनतन्त्रम्**—संस्कृतभाषानिबद्धे ग्रन्थेऽस्मिन् कामरूपस्य गौहाटीनगरस्य उग्रतारामहापीठस्य विवरणं, कामरूपपीठमाहात्म्यं, वशिष्ठस्य सिद्धिलाभः, प्रशप्तः कामरूपः, तत्कृतशापमुक्तिः, ब्रह्मपुत्रनदोत्पत्तिः, तन्माहात्म्यं, कामरूपस्य तीर्थकुण्डादिप्लावनं, तारापूजाधिकारि-निर्णयः, महास्नानपूजा-बलि-होम-जपादि-पञ्चकल्पात्मक-पूजाया विशेषविधिः, तारा-शतनामसहस्रनामस्तोत्रं, कुमारीपूजा, तथा शाक्ताभिषेकादिविशेषविशेषज्ञातव्यविषयाश्च सन्निविष्टा वर्त्तन्त इति।



**३यं शतचण्डीयागप्रयोगतन्त्रम्**—ग्रन्थेऽस्मिन् यज्ञस्यावश्यकर्त्तव्यत्वं, कलौ शक्तियागस्य प्राधान्यं, तन्त्रमतप्राधान्यं, यज्ञस्य पूर्वाहकृत्यं, महाध्वजादिरोपणं, भूमिग्रहणं, मण्डपकुण्डादिनिर्माणं, बृद्धिश्राद्धादिकं, जलयात्राप्रयोगः, देश-काल-पात्रादि-निर्णयः, द्रव्यसादनं, याज्ञिकाचार्यादिपात्रवरणं, प्रदक्षिणं, वेदिशोधनं, मण्डलप्रणामपूजनं, महादीपस्थापनं, मण्डपध्वजा-स्तम्भ-ताड़नादिपूजनं, मूलदेवतायाः महास्नानं, शतचण्डीपाठः, कुमारीपूजा, अग्न्याधानं, धेनुराहुति-पूर्णाहुत्यादिदानं, यज्ञान्ते अवभृथस्नानाभिसिञ्चनादि-यावतीयकर्त्तव्यविषयाः, संक्षेप-चण्डीपूजा, सप्तशतीमन्त्रहोमः, महाहुतिसमर्पणं, प्रयोगविधिः, फलश्रुतिः, पुरश्चरणविधिः श्लोकसंख्या, मन्त्रसंख्या तथा अन्ये च विविधविषया वर्त्तन्ते। इति।

**४र्थं शाक्तदर्शनम्**—(दशभिः परिच्छेदैः सम्पूर्णम्) प्रथमपरिच्छेदे-त्रिगुणात्मिका पराशक्तिरेव परब्रह्मेति निरूपणम्। दर्शनव्युत्पत्तिः, तदालोचना च। द्वितीये-प्रधानशक्तिमहालक्ष्मीतः पृथग्रूपेण तमो-रजः-सत्त्वेभ्यो महाकालीमहालक्ष्मीमहासरस्वतीनामाविर्भावः मिथुनसृष्टिश्च। तृतीये—

महालक्ष्मीकर्तृकं ब्रह्मणे-त्रय्या, रुद्राय-गौर्या, विष्णवे श्रियाश्च-पत्नीत्वेन दानं, ब्रह्ममिथुनयोर्ब्रह्माण्डसृष्टिः, विष्णुमिथुनयो रक्षणं, रुद्रमिथुनयोः संहरणञ्च। चतुर्थे—जगद्रहस्यं, षट्त्रिंशतत्त्वानां व्याख्यानञ्च। पञ्चमे—उपासनादि-विधिः तथा च पञ्चमकारस्य यौगिकलौकिकव्याख्या च। षष्ठे—चण्डिकायाः दशावताराणां मध्ये मूर्त्तिरहस्योक्तपरवर्त्तिसप्तावताराणां रक्तदन्तिकावतार-प्रसङ्गे विश्वरूपरहस्यं, जगदम्बायाः स्तन्यदानं, चामुण्डोपासकसम्प्रदायाः नन्दारहस्यं मूर्त्ति-भेदश्च, योगमायारहस्यम् आयुधरहस्यञ्च। सप्तमे—शाकम्भरीरहस्यं, तस्या वनपत्रिकास्वरूपं, नवदुर्गारहस्यं अन्नपूर्णा-रहस्यं, भीमावताररहस्यं, कालरात्र्याः प्रलयनृत्यं, भ्रामरीरहस्यं रहस्यत्रयाधिकारि कथनञ्च। अष्टमे—दशमहाविद्याविर्भावरहस्यं, भद्रकाल्युत्पत्तिः, महाविद्यानां नामसंख्या-मतभेदः, कालीकुलं, श्रीकुलं, साधकसम्प्रदायाश्च। नवमे—सती-देहसम्भूतपीठरहस्यं, शिवस्य ताण्डवनृत्यं, एकपञ्चाशत्पीठरहस्यं, मातृ-परिक्रमा कामरूपपीठं, दशमहाविद्याः, कामाख्यानामनिरुक्तिः, योनिपीठं, कामाख्यायाः पञ्चमूर्त्तिरहस्यं, वाहनरहस्यं, मूर्त्तिभेदः, कुम्भयोगः, ललिता-वतारः, विशालाक्षिदेव्याः स्वरूपञ्च। दशमे—कुरुक्षेत्रपीठरहस्यं, सावित्री-गायत्रीनामनिरुक्तिः, प्रणवतत्त्वं, हंसविद्यारहस्यं, प्रभासरहस्यं, अवन्ती-पीठरहस्यं, महादेवस्य पाशुपतास्त्रलाभः, पीठस्थाने साधनापद्धतिः, देव्या जननीत्व-जायात्वरहस्यं, पीठनिरुक्तिः, पीठन्यासतत्त्वञ्चेति बहुतरविषयक-गवेषणा-पूर्णा ज्ञातव्यविषया वर्त्तन्ते।

---

The language of the present work is throughout simple and perspicuous and as such the compilation may be read with ease and benefit even by those whose main interest is philosophy or culture rather than Sanskrit.



After his deep and devoted studies of the original shastras for over 35 years Pandit Chakreswar Bhattacharyya, who is now 79, started writing in 1954. His first scholarly work entitled *Shaktitattva* in Assamese was published in 1955. His second work *Tarārchanatantra* in Sanskrit explains and formulates the procedure of the worship of Goddess Tarā. His third work, *Śatacaṇḍīyāgaprayogatantram*, which is also in Sanskrit, explains in detail the procedure of the Śatacaṇḍī Yajña and his fourth scholarly work is the present *Śāktadarśanam*.

The author was himself the Chief Priest (Dalai) of the Ugratara temple, one of the most important tantric pīṭhas, for the major part of his life. This intimate experience of the tantric practices has been coupled with his earlier experience of teaching in *pāṭhaśālās* and has been reinforced with a genuine love for learning, which, surprisingly, continues till his present old age. The author has ransacked the whole literature on Tantricism and the Śākta Philosophy for compiling informations on all the relevant aspects of the Śākta cult in an encyclopædic manner.

